PURVOTTARAMIMAMSA

# VADANAKSHATRAMALA

BY

APPAYA DIKSHITA





SRIRANGAM

SRI VANI VILAS PRESS.

1912.



T

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीः ॥



पूर्वोत्तरमीमांसा

# ॥ वादनक्षत्रमाला ॥

श्रीमदप्पयदीक्षितेन्द्रैर्विरचिता ।



श्रीरङ्गम्
श्रीवाणीविलासमुद्रायन्त्रालये
संमुद्रिता ।
१९१२.

T

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# PREFACE.

VÂDANAKSHATRAMÂLÂ, otherwise known as NAKSHATRAVADAVALI is one of the several scholarly works that proceeded from the pen of the illustrious Appaya Dikshita who flourished in Southern India in the sixteenth century and who was held in great reverence throughout the length and breadth of India for his profound learning and erudite scholarship. The esteem for his genius was such that it was considered discourteous even to refer to him by his name. The honorific appellation "Dikshita" was considered quite sufficient to specify him. He was the author of more than one hundred works several of which are masterly treatises full of original thought and close reasoning. His Ṣivârkamaṇidîpikâ—the ṣaivaviṣisht-âdvaitic commentary on the Ṣrîkanṭhabbâshya of the Brahmasutras, his Parimaḷa—the pure Advaitic commentary on the Kaḷpataru of Amalânanda which is itself a commentary on the Bhâmati which in its turn expounds the Ṣankarabhâshya of the Brahma-sutras, his Siddhântaleṣasangraha wherein he explains all the different views of the several writers on Advaita on all controversial points, his Nyâyarakshâmaṇi which is a splendid exposition of the Advaitic interpretation of



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

the Brahmasutras, his Upakramaparâkrama which is an elaborate discussion of the canons of Mîmâmsa as applied to Vedânta, his Kuvalayânanda, Chitramîmâmsa and Vrittivârtika which deal with Alankâra or rhetoric, his Vyâkaraṇa Vâdanakshatramâla treating of grammar and his Pûrvottaramîmâmsâ Vâdanâkshatramâla treating of both the Mîmâmsas, form certainly the glorious and ever-enduring monuments of his versatile genius. India can very well feel proud of one who has contributed such classic works on so many different subjects and has thereby ennobled her already noble literature. She was perfectly justified in counting Appaya Dikshita as one of the illustrious galaxy of her brilliant sons—stars of the first magnitude—who have made her literature what it is—the rich heritage and the proud possession of the presnt generation of Hindus, and the wonder and envy of the whole civilised world.

Appaya Dikshita's compositions are numerous and varied and several of these have not yet been published in print. Among such hitherto unpublished works we have to reckon this Vâdanakshatramâla which consists of a string of twenty-seven discussions on various topics connected with either the Mîmâmsa or the Vedânta Philosophy. The several discussions will be found extremely interesting and the subjects treated of are not touched upon in any other treatise. The Dikshita himself states in the opening verse of this book that the

T

topic sdiscoursed upon in this work in very simple style are such as are not dealt with anywhere else and are presumed in the Bhâshyas to be well established.

That Appaya Dikshita was looked upon as an authority on both the Pûrva and the Uttara Mîmâmsa systems is well attested to by Khandadeva, himself a Mîmâmsa scholar of no mean repute, styling him as Mîmâmsakâmûrdhanya—the foremost among the Mîmâmsa scholars. Emanating from the pen of such a reputed scholar this work is sure to be found very valuable.

We had the help of several Mss. in preparing this work for the Press and our thanks are due to Brahmaṣrî Subrahmaṇya Ṣâstrigal of Mannargudi and to Brahmaṣrî Subrahmaṇya Ṣâstrigal, Professor of Vedânta at the Sanskrit Institute of Bangalore which is founded by His Holiness of Sringeri Mutt, for the two well written palm leaf Mss. of this work placed by them at our disposal. We had access also to the Mss. at the Mysore Government Oriental Manuscripts Library whenever a reference to them was found necessary. We have also to specially thank Brahmaṣrî Vaidyanâtha Ṣâstrigal, Professor of Mîmâmsa at the Sanskrit Institute of Bangalore, but for whose invaluable help in editing, we could not have brought out this precious work. In conclusion we hope that this is the first of the several works of this great scholar that will be issued from this Press.

*T. K. Balasubrahmanyam.*

T





| | | पृष्ठम् |
|---|---|---|
| मासाग्निहोत्रवादः | ... | १ |
| हिंसिधात्वर्थवादः | .... | ३२ |
| गुणगुण्येकशक्तिवादः | .... | ७१ |
| गुणगुण्यनेकशक्तिवादः | .... | ८७ |
| गुणगुण्येकशक्तिपक्षश्रेयस्त्ववादः | ... | १०० |
| गुणलक्षणापक्षनिरासवादः | .... | ११७ |
| अरुणैकहायनीसामानाधिकरण्यवादः | ... | १३४ |
| क्रयारुण्यान्वयवादः | ... | १४२ |
| योगलक्षणाशङ्कानिरासार्थंजीवान्तर्यामिशक्तिवादः | | १५४ |
| भ्रममूलत्वशङ्कानिरासार्थंजीवान्तर्यामिशक्तिवादः | ... | १६२ |
| गौरोऽहमित्यादिप्रतीत्यविषयत्वशङ्कानिरासार्थान्तर्यामिशक्तिवादः | .... | १६८ |
| अहमादिपदविषयान्तर्यामिपर्यन्तत्वाभावशङ्कानिरासार्थान्तर्यामिशक्तिवादः | .... | १७४ |
| अहमादिपदविषयान्तर्यामित्वपर्यन्तशक्त्यभावप्रयुक्तशङ्कानिरासार्थान्तर्यामिशक्तिवादः | ... | १८१ |


T

ब्राह्मणादिशब्ददृष्टान्तप्रसक्तगौरादिशब्दवाच्यत्वशङ्कानिरासार्थान्तर्यामिशक्तिवादः ... १८५
अन्तर्यामिविषयपृथिव्यादिशब्दवाच्यत्वसमर्थनवादः १९७
अन्तर्यामिविषयसकलशब्दवाच्यत्वसमर्थनवादः ... २०८
व्याकरणश्रुतिगततृतीयैकवचनसमर्थनवादः .... २१४
सर्वोपादानत्वहेतुकसर्वशब्दवाच्यत्वसमर्थनवादः .... २२२
ऐकशास्त्र्यनिराकरणवादः .... २३५
अध्ययनविधेरर्थज्ञानफलकत्वनिराकरणवादः .... २५९
अध्ययनस्य स्वविधिप्रयुक्तत्वसमर्थनवादः .... २८१
भस्मोद्धूलनत्रिपुण्ड्रयोः सकलब्रह्मविद्याङ्गत्वसमर्थनवादः ... ३०७
अयथार्थज्ञानसमर्थनवादः ... ३३२
स्वप्नायथार्थत्ववादः ... ३४१
शुक्तिरजताद्युत्पत्तिसमर्थनवादः ... ३४९
प्रपञ्चसत्तानिराकरणवादः ... ३५९
ब्रह्मानन्दवैषयिकानन्दाभेदसमर्थनवादः ... ३६६



T



॥ श्रीः ॥

# पूर्वोत्तरमीमांसा

# ॥ वादनक्षत्रमाला ॥

---

## मासाग्निहोत्रवादः ॥

---

तन्त्रान्तरेष्वनुपपादितमर्थजातं
यत्सिद्धवद्व्यवहृतं ध्वनितं च भाष्ये ।
तस्य प्रसाधनमिह क्रियते नयोक्त्या
बालप्रियेण मृदुवादकथापथेन ॥

शेषीभवदपि भाष्ये सुमहति सत्रेऽग्निहोत्रमिव ।
स्वातन्त्र्येण प्रकरणमर्थप्रतिपादने समर्थमिदम् ॥

कुण्डपायिनामयनाख्ये सत्रे श्रूयते—'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति' इति । तन्मासाग्निहोत्रं नैयमिकाग्निहोत्राद्भिद्यते न वेति जरन्मीमांसकमतानुसारिणः पूर्वपक्षिणः

श्रीकण्ठाचार्यमतानुसारिणः सिद्धान्तिनश्च विप्रतिपत्त्या संशये सति, सिद्धान्तमतानुसारिणो वादिनः प्रथमा कक्ष्या——

मासाग्निहोत्रं नैयमिकाग्निहोत्रान्न भिद्यते, विधिवाक्यश्रुताग्निहोत्रनामकत्वात्—— यद्विधिवाक्यश्रुताग्निहोत्रनामकं न तन्नैयमिकाग्निहोत्राद्भिद्यते, यथा 'यवाग्वाग्निहोत्रं जुहोति' इति श्रुतं यवागूगुणकमग्निहोत्रम् । अत्र वैश्वानरविद्याङ्गभूते प्राणाहुतिकर्मणि 'स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात्' इत्यर्थवादश्रुताग्निहोत्रनामके व्यभिचारवारणार्थं विधिवाक्यश्रुतेति हेतुविशेषणम् । तथा च विधिवाक्यश्रुतत्वविशिष्टं यदग्निहोत्रनाम तद्विषयत्वादिति हेतोरर्थः । तेन अर्थवादश्रुतं यदग्निहोत्रनाम तदेव विधिवाक्येष्वपि श्रुतमिति तदुपलक्षितत्वमादाय व्यभिचारतादवस्थ्यमिति शङ्काया नावकाशः । यद्वा अग्निहोत्रनामसमानाधिकरणविध्युद्देशश्रुतजुहोतिविषयत्वादिति हेतुः । न च आधानाङ्गे तूष्णींहोमे पुनराधानाङ्गसप्तवतीहोमे प्रवर्ग्याङ्गघर्मशेषहोमे च व्यभिचारः, तेषां 'ततस्तूष्णीमग्निहोत्रं जुहोति' 'सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति' 'एतस्मादेव घर्मशेषादुपयमनेनाग्निहोत्रं जुहोति' इति विधिवाक्यश्रुता-

T

ग्निहोत्रनामकत्वात्, तत्समानाधिकरणविधिवाक्यश्रुतजुहोतिधातुविषयत्वाच्चेति वाच्यम् । तेष्वपि उक्तसाध्याभ्युपगमेन तेषां पक्षसमत्वादिति ॥

अथ प्रतिवादिनः द्वितीया कक्ष्या—

विपक्षबाधकतर्काभावात् अप्रयोजकोऽयं हेतुः नोक्तसाध्यसाधनक्षमः; 'प्रायणीयोऽतिरात्रः' इति द्वादशाहिके प्रथमेऽहनि श्रुतस्य प्रायणीयनाम्नः गावामयनिके च प्रथमेऽहनि 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमेतदहर्भवति ज्योतिरेव पुरस्ताद्दधते' इति श्रवणेन नामाभेदे सत्यपि कर्मभेदस्याभ्युपगततया नामैक्यस्य तदैक्याप्रयोजकत्वात् । तस्मान्मासाग्निहोत्रं नैयमिकाग्निहोत्राद्भिद्यते, नैयमिकाग्निहोत्रहोमविध्यसंनिहितानेकाविषयकस्वाभिधेयानङ्गनामार्थसंक्रान्तिरहितविधिपरजुहोतिविषयत्वात्— यदुक्तसाधनवत् तदुक्तसाध्यवत्, यथा 'सप्तवत्या पूर्णाहुतिं जुहोति' इति विहितं पूर्णाहुतिकर्म । तत्र यवागूगुणकाग्निहोत्रहोमे नैयमिकाग्निहोत्रप्रकरणपठितयवागूगुणविधिपरजुहोतिविषये व्यभिचारवारणार्थं नैयमिकाग्निहोत्रहोमविध्यसंनिहतेति विशेषणम् । नैयमिकाग्निहोत्रहोमः स्वविध्यसंनिहितस्य आहवनीयाख्यगुणविधिपरस्य 'यदाहवनीये जुहोति' इत्य-

T

नारभ्याधीतवाक्यश्रुतस्य जुहोतेर्विषयो भवन् न स्वस्माद्भिद्यत इति तत्र व्यभिचारवारणार्थम् अनेकाविषयकेति । आहवनीयवाक्यानुगतो जुहोतिधातुः नानाप्रकरणपठितानानारभ्याधीतांश्च सर्वानपि होमान् आहवनीयगुणविधानार्थमनुवदति—इत्यनेकविषयकत्वात् न व्यभिचारः । 'य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति'— इत्यर्थवादे श्रुतस्य नैयमिकाग्निहोत्रहोमविध्यसंनिहितस्य होमान्तराविषयस्य जुहोतेर्विषयो भवति नैयमिकाग्निहोत्रम्; अतस्तत्र पुनरपि व्यभिचारः स्यात्; तद्वारणार्थं विधिपरेति विशेषणम् । न च अर्थवादस्थजुहोतेरपि विधौ तात्पर्यमस्ति, अर्थवादानां यत्किंचिद्विध्येकवाक्यतां विना प्रामाण्याभावादिति शङ्क्यम्; विधिपरशब्देन स्तुतिद्वारानपेक्षविध्यर्थत्वस्य विवक्षितत्वात् । 'अमावास्यायां रात्रौ स्वयं यजमानो यवाग्वाग्निहोत्रं जुहोति' इत्युक्तरूपजुहोतिविषये नैयमिकाग्निहोत्रे व्यभिचारवारणाय स्वाभिधेयानङ्गसंक्रान्तिरहितेति विधिविशेषणम् । तेन भवति व्यभिचारनिरासः; तस्मिन्वाक्ये श्रुतस्य विधेरग्निहोत्रहोमानङ्गामावस्यार्थदधिप्रयुक्तयवागूसंक्रान्तत्वात् । एवं सति हेतोः स्वरूपासिद्धिः स्यात्, मासाग्निहोत्रविधेः जुहोत्यभि-

T

धेयानङ्गतत्करणकाख्यातार्थभावनासंक्रान्तिसत्त्वादिति । तद्वारणाय नामार्थविशेषणम्। नामार्थत्वमिह नाममात्रसमर्पितत्वं विवक्षितम्। अतो जुहोत्यभिधेयो होमः स्वस्य स्वयमनङ्गम् अग्निहोत्रनामार्थश्च भवतीति विधेस्तत्रापि संक्रान्तिसत्त्वात् स्वरूपासिद्धितादवस्थ्यमिति शङ्काया नावकाशः । तथा च नैयमिकाग्निहोत्रहोमविध्यसंनिहितानेकाविषयकस्वाभिधेयानङ्गनाममात्रसमर्पितार्थसंक्रान्तिरहितविधानविषयकस्तुतिद्वारानपेक्षोपयोगवज्जुहोतिधातुविषयत्वात्—इति हेत्वर्थनिष्कर्षः। यद्युच्येत—यवागूविधिः नातञ्चनार्थः, किं तु 'नास्यैतां रात्रिं कुमारा अपि पयसो लभन्ते' इत्यस्य दृष्टार्थत्वलाभाय सर्वस्यापि यजमानगवीनां पयसो दार्शिकदध्यर्थत्वेन विनियोक्तव्यत्वात्, अग्निहोत्रस्य पयोऽभावेन दधितण्डुलयवाग्वादियत्किंचिद्विकल्पितद्रव्यान्तरग्रहणे प्राप्ते, यवागूनियमार्थः; 'यवाग्वैतां रात्रिमग्निहोत्रं जुहोति' इति 'आदिष्टं वा इदं देवतायै हविर्गृहीतं भवति यत्पयः यद्धि पयसा जुहुयाद्यथान्यस्यै देवतायै हविर्गृहीतं तदन्यस्यै जुहुयादेवं ह तं समदं कुर्यात् तस्माद्यवाग्वैतां रात्रिमग्निहोत्रं जुहोति' इति शतपथब्राह्मणे दर्शनात् । गृहमेधीयेष्टौ आतञ्चनाभावेऽपि 'सर्वासां दुग्धे सायं चरुम्' इति सर्वस्य यजमान-

गवीनां पयसो गृहमेधीये विनियुक्ततया अग्निहोत्रस्य पयोऽभावेनैव 'यवाग्वैतां रात्रिमग्निहोत्रं जुहोति' इति शतपथब्राह्मण एव विधानाच्च । तथा च उदाहृतयवागूविधिविषये व्यभिचारतादवस्थ्यमिति—तदा, नैयमिकाग्निहोत्रप्रकरणानाम्नातविधिगोचरत्वादिति हेतुः कार्यः । आहवनीयादिवाक्येषु विधेर्गुणसंक्रान्तत्वान्न व्यभिचारः । एवमपि अश्वमेधसंकल्पानन्तरं दीक्षणीयायाः प्राग्रात्रौ वाग्यमं विधाय श्रुते 'वाग्यतस्यैतां रात्रिमग्निहोत्रं जुहोति' इति प्रातरग्निहोत्रस्य रात्रावुषःकाले अपकर्षविधौ व्यभिचारः स्यात्, कालस्य गुणस्यापि अनुपादेयस्य विधानायोगेन कालमुद्दिश्य होमस्य विधेयत्वादिति । तदा नैयमिकाग्निहोत्रप्रकरणानाम्नातहोमानुष्ठापकविधिगोचरत्वादिति वा, उभयसिद्धनैयमिकाग्निहोत्रविषयविधिभिन्नविधिगोचरत्वादिति वा हेतुर्द्रष्टव्यः । अपकर्षार्थविधेः होमानुष्ठानार्थत्वाभावात् आद्यहेतोर्न व्यभिचारः । द्वितीयहेतौ संदिग्धसिद्धिवारणार्थम् उभयसिद्ध—इति विशेषणम् । यद्वा स्वाभिधेयानङ्गेति विशेषणरहितः पूर्वहेतुरस्तु । तेन विशिष्टव्यतिरेकप्रयुक्तोद्भावितव्यभिचारशङ्काया नावकाशः । प्राक् त्विदं दत्वा इदं देयमिति मते, विशिष्टव्यतिरेको भिन्न इति मते च वैयर्थ्यं नास्तीति यवा-

T

ग्वा: शतपथब्राह्मणसिद्धहोमाङ्गत्वपक्षप्रसञ्जनावकाशला-भाय तद्विशेषणमुक्तम् । अत्रापि अपकर्षविधौ व्यभिचारः समान इति अनुपदोक्तावेव हेतू ग्राह्यौ ॥

अथ वादिनः तृतीया कक्ष्या—

यदुक्तं मदीयो हेतुरप्रयोजक इति, तत् तावत् दुरुक्तम्, मासाग्निहोत्रस्य नैयमिकाग्निहोत्रात् भेदे तद्विधिवाक्यश्रुताग्निहोत्रनामस्वारस्यभङ्गप्रसङ्गस्य विपक्षबाधकस्य सत्त्वात् । तथाहि—तस्य नैयमिकाग्निहोत्रात् भेदाभ्युपगमे, तस्मिन् अग्निहोत्रशब्दस्य मुख्यवृत्तिरिष्यते अमुख्या वा, आद्येऽपि अग्नये होत्रं होमद्रव्यम् अस्मिन् इति प्रतीतयोगरूपा, वाक्यप्रतीतिकल्प्या रूढिरूपा वा, नाद्यः, यथा नैयमिकाग्निहोत्रे 'यदग्नये च प्रजापतये च सायं जुहोति' इति तत्प्रकरणाम्नातेन देवताविधिना 'अग्निर्ज्योतिः' इति मन्त्रवर्णेन वा अग्निदेवत्यत्वमवगतम्— एवं मासाग्निहोत्रे केनचिदुपायेन तस्यानवगतत्वात् । न द्वितीयः, 'अन्याय्यश्चानेकार्थः' इति न्यायविरुद्धानेकार्थत्वकल्पनस्य अयुक्तत्वात् । न च अग्निदेवत्यत्वाभावेऽपि प्रातरग्निहोत्रे प्राणाहुतिकर्मणि च प्रवृत्तस्य तस्य अनेकार्थत्वकल्पनम् अवर्जनीयमिति वाच्यम्, 'अग्निहोत्रं जुहोति' इति वाक्योत्पन्नस्य एकस्यैव नैयमि-

T .

काग्निहोत्रहोमस्य 'सायं जुहोति' 'प्रातर्जुहोति' इति तत्प्रकरणाम्नातवाक्याभ्यां सायंप्रातःकालयोरभ्यासस्य चोदितत्वेन सायंहोमाभिन्ने प्रातर्होमेऽपि अग्निदेवत्यत्वसंभवात्; प्राणाहुतिषु आर्थवादिकस्य अग्निहोत्रशब्दस्य अन्यदीयनाम्न एव सतः— दर्शपूर्णमासयोरपामुत्सेके 'एष वै दर्शपूर्णमासयोरवभृथः' इत्यत्र अवभृथशब्दस्येव, प्रस्तरादिषु यजमानशब्दस्येव च औपचारिकत्वेन तासु वृत्त्यर्थं शक्तिकल्पनानपेक्षणात्। द्वितीयपक्षे अमुख्या वृत्तिः लक्षणा गौणी वा, नाद्यः, तन्मुख्यार्थभूतनैयमिकाग्निहोत्रसंबन्धानवगमात्। सत्रमध्ये कर्तव्यस्य मासाग्निहोत्रस्य 'न ददाति' 'न जुहोति' 'न पचति' इति सोमप्रयोगमध्ये पर्युदस्तेन तेन एककालत्वसंबन्धस्याप्यभावात्। गौण्यपि प्रसिद्धसादृश्यमूला न संभवति, मासाग्निहोत्रे तेन सह होमान्तरव्यावृत्तस्य अनत्यन्तबहिरङ्गस्य कस्यचित्सादृश्यस्य अप्रसिद्धत्वात्। तस्मात् लक्षणातो जघन्यत्वेन मीमांसकैरभ्युपगतासु गौणवृत्तिष्वपि कल्प्यसादृश्यमूलत्वेन अतिक्लिष्टगौणवृत्तिरभ्युपगन्तव्या। न च नैयमिकाग्निहोत्राभेदाङ्गीकारेण मुख्यवृत्तिसमर्थनसंभवे तदभ्युपगमो युक्तः। प्रायणीयनाम्नस्तु यथा प्रयन्ति प्रार-

T

अन्ते अनेन—इति व्युत्पत्त्या द्वादशाहिके प्रथमेऽहनि वृत्तिः, तथा गावामयनिकेऽपि वृत्तिरुपपद्यते इत्यतिक्लिष्ट-वृत्त्यन्तरकल्पनादोषाभावात् तस्य तस्माद्भेद इष्यते । तस्मिन् प्रथमश्रुतस्य ज्योतिष्टोमनाम्नः प्रवृत्तिनिमित्तस्या-क्लृप्तत्वात् अतिक्लिष्टकल्प्यसादृश्यमूलकगौणवृत्तिकल्पनादो-षपरिहाराय 'ज्योतिरेव पुरस्तात् दधते' इति ज्योतिष्टोम-प्राथम्यप्रतिपादकवाक्यशेषसामञ्जस्याय च तस्य ज्योतिष्टो-मरूपप्रकृत्यतिरात्रात् भेद एव इष्यते । तस्मात् मदीयहोतो-रुक्तसाध्यानङ्गीकारे अग्निहोत्रनामस्वारस्यभङ्गप्रसङ्ग इति वि-पक्षबाधकसत्त्वात् नाप्रयोजकत्वशङ्कावकाशः । त्वदीयहेतुस्तु उपन्यस्तप्रतिकूलतर्कपराहतत्वात् न साध्यसाधनक्षम इति ॥

अथ प्रतिवादिनः चतुर्थी कक्ष्या—

प्रकरणान्तरेण मासाग्निहोत्रवाक्यश्रुतप्रधानभूतधात्वर्थे नै-यमिकाग्निहोत्रहोमाद्भिन्नतया प्रतीयमाने, तदुपसर्जनीभूत-तन्नाम न तद्भेदप्रत्यभिज्ञानं जनयितुं क्षमते । तस्मात् नैयमिकाग्निहोत्रे प्रथमं गृहीतशक्तिकेन नाम्ना तदुपस्थितेरव-श्यंभावे, तस्य नाम्नः प्रधानभूतधात्वर्थे नैयमिकाग्निहोत्राद्भि-न्ने वृत्तेरवश्यं वक्तव्यत्वेन तत्र प्रवृत्तिनिमित्तस्याक्लृप्ततया मुख्यवृत्त्यसंभवात्—'सिंहो देवदत्तः' इत्यत्र प्रधानभूतविशे-

T

व्यपदस्वारस्यानुरोधात् सिंहशब्दस्येव गौणवृत्तेरेव कल्पनीयत्वेन सा तदुपस्थितिः गौणवृत्तिमुखभूतसादृश्यप्रतियोग्युपस्थितित्वेन उपयुज्यते—इत्येवाङ्गीकर्तव्यम्। तत्र यदुक्तं साध्यसादृश्यमूला गौण्यतिक्लिष्टेति, तन्न, इह सिद्धसादृश्यमूलकगौणवृत्त्यपेक्षया तस्या एव ज्यायस्त्वात्। तथा हि—आद्यपक्षे यथासिद्धसादृश्यानुवादकत्वमात्रं सिध्येत्, न तु कश्चिदनुष्ठाने विशेषो लभ्यते। द्वितीयपक्षे तु मासाग्निहोत्रहोमस्य अनुपदिष्टेतिकर्तव्यताकस्य नैयमिकाग्निहोत्रवत्कर्तव्यतापरेण नाम्ना नैयमिकाग्निहोत्रधर्मातिदेशकेन आकाङ्क्षितेतिकर्तव्यतालाभात् अनुष्ठानविशेषो लभ्यते इति अन्यदीयनाम्नोऽन्यत्र प्रवर्तनं साफल्यमश्नुते। तस्मात् साध्यसादृश्यमूलकगौणप्रसङ्गस्य इष्टापादनरूपत्वात् त्वदीयहेतोरप्रयोजकत्वतादवस्थ्यम्, मदीयहेतोश्च न प्रतिकूलतर्कपराहतिरिति॥

अथ वादिनः पञ्चमी कक्ष्या—

अप्रसिद्धार्थस्य नाम्नो राजसूयनामवत् आख्यातपरतन्त्रत्वेऽपि प्रसिद्धार्थं नाम न आख्यातपरतन्त्रम्। किं तु तदेव नामपरतन्त्रम्, दर्शपूर्णमासफलवाक्ये तथा दर्शनात्। तथा हि— 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चा-

T

च्युतो भवति' 'अग्नीषोमीयमेकादशकपालं पूर्णमासे प्राय-च्छत्' 'उपांशुयाजमन्तरा यजति' 'ऐन्द्रं दध्यमावास्याया-म्' 'ऐन्द्रं पयोऽमावास्यायाम्' इति पौर्णमास्यमावास्याका-लयुक्तविधिविहितानाम् आग्नेयादीनां षण्णां यागानाम्, 'स-मिधो यजति' 'तनूनपातं यजति' इति अकालयुक्तविधि-विहितानां प्रयाजादियागानां च संनिधावाम्नाते 'दर्शपूर्ण-मासाभ्यां स्वर्गकामो यजेत' इति वाक्ये श्रुतेन यजिना फलसंबन्धबोधनार्थं संनिहितयागाननुवदता संनिहितत्वावि-शेषात् आग्नेयादीनामिव प्रयाजादीनामपि अनुवादे प्राप्ते, पौर्णमास्यमावास्याकालसंबन्धिनि आग्नेयादियागषट्के एव लक्षणया वर्तमानदर्शपूर्णमासनामधेयमनुरुद्धय तस्मिन्नेव यागषट्के यजिर्वर्तते— इति प्रसिद्धार्थनामपरतन्त्रत्वम् आख्यातस्य अङ्गीकृतम् । तद्वदिहापि अङ्गीकर्तुं युक्तम् । तस्मादिह नाम्नो मुख्यार्थग्रहणे बाधकाभावात् अबाधित-मुख्यार्थस्वारस्यभङ्गप्रसङ्गो दोषः स्यादेवेति मदीयहेतुः ना-प्रयोजकः, त्वदीयश्च हेतुः प्रतिकूलतर्कपराहत इति ॥

अथ प्रतिवादिनः षष्ठी कक्ष्या——

सर्वत्र गुणभूतं नामैव आख्यातपरतन्त्रम् । न क्वचिदपि आख्यातं नामपरतन्त्रम् । नाम्नश्च आख्यातपारतन्त्र्यम् आ-

T

ख्यातानुपस्थाप्यार्थासंस्पर्शेन आख्यातोपस्थापिते एव अर्थे वर्तनम्। तद्दर्शपूर्णमासनाम्नोरपि अविकलम्; न हि तदुपस्थाप्यानां षण्णां यागानां मध्ये कश्चिदपि आख्यातानुपस्थाप्योऽस्ति, येन तमर्थं स्वयमुपस्थाप्य तत्र आख्यातमपि वर्तयतीति नाम्नः स्वातन्त्र्यं भवेत्। तस्मात् नाम्नः सर्वत्र आख्यातपारतन्त्र्यानपायात् इहापि प्रकरणभेदनियमितहोमान्तरतात्पर्यकाख्यातपरतन्त्रस्य नाम्नो मुख्यार्थग्रहणे बाधकसत्त्वात् मुख्यार्थस्वारस्यभङ्गो न दोष इति त्वद्धेतुरप्रयोजकः, मद्धेतुश्च न प्रतिकूलतर्कपराहत इति ॥

अथ वादिनः सप्तमी कक्ष्या—

नाम्नः स्वयं कंचिदर्थं धात्वनुपस्थापनीयमुपस्थाप्य तत्र धातोर्वर्तनं यथा स्वातन्त्र्यम्, तथा धातूपस्थापनीयानां मध्ये केषुचिदेव स्वशक्तिबलेन संकोचनमपि स्वातन्त्र्यमेव। तद्वदिह नाम्नः स्वशक्तिबलात् आख्यातस्वारस्यानुपस्थापनीयेऽर्थे तद्वर्तनरूपमपि स्वातन्त्र्यमस्तु। न हि आख्यातपरतन्त्रत्वेनाभ्युपगतस्य नाम्नः क्वचिद्विषये स्वातन्त्र्यं क्वचित् न—इति अर्धजरतीयमाश्रयितुं युक्तम्। तदाश्रयणे वा वैपरीत्येन स्वातन्त्र्यं किमिति नाभ्युपगम्येत? तस्मात् नामस्वारस्यभङ्गो न युक्त इति मद्धेतुर्नाप्रयोजकः, त्वद्धेतुश्च

T

प्रतिकूलतर्कपराहत इति ॥

अथ प्रतिवादिनः अष्टमी कक्ष्या—

व्यावर्तकस्वभावानां विशेषणानां विशेष्यपदे स्वान्वयानुरोधेन संकुचद्वृत्तित्वापादनं विशेषणतास्वभावसिद्धम्, 'नीलमुत्पलम्' 'अरुणया गवा क्रीणाति' इत्यादिलौकिकवैदिकप्रयोगदृष्टं च—इति न तत् नाम्नः प्रधानभूताख्याते तद्विरुद्धाचरणरूपम् । अतः तावता नाम्नामाख्यातपारतन्त्र्यस्याहानिरिति अत्रापि आख्यातस्वारस्यानुरोधेन नामस्वारस्यभङ्गो न दोषः । अतः त्वद्धेतुरप्रयोजकः, मद्धेतुश्च न प्रतिकूलतर्कपराहत इति ॥

अथ वादिनो नवमी कक्ष्या—

यथा व्यावर्तकस्वभावविशेषणस्य स्वशक्तिबलेन विशेष्यपदसंकोचनमविरुद्धम्, एवं नाम्नः स्वशक्तिबलानीतेऽर्थे आख्यातस्य वर्तनमप्यविरुद्धमेव । न हि नैयमिकाग्निहोत्रविधिसंनिधिर्नास्ति इत्येतावता मासाग्निहोत्रवाक्यस्थमाख्यातं तद्भिन्नत्वेन होममुपस्थापयतीति वक्तुं शक्यम्, तद्भिन्नत्वे शक्त्यभावात् । किंतु नैयमिकाग्निहोत्रसंनिध्यभावात् तदभिन्नत्वेन नोपस्थापयतीति एतद्वक्तुं शक्यम् । तथा च आख्या-

T

तस्य भेदाभेदयोरौदासीन्ये सति, आख्यातसमानाधिकरणेन नाम्ना स्वशक्तिबलादाख्याते नैयमिकाग्निहोत्रवर्तित्वापादनम- विरुद्धम् । आख्यातस्यापि कांस्यभोजिन्यायेन नामानुवर्तनं न्याय्यम् । अतः नामस्वारस्यभङ्गो दोष इति मद्धेतुर्नाप्रयोजकः, त्वद्धेतुश्च प्रतिकूलतर्कपराहत इति ॥

अथ दशमी कक्ष्या—

यदुक्तम्— इहाख्यातं भेदाभेदयोरुदासीनमिति, तदयुक्तम्, तस्य भेदपक्षपातित्वात् । तथा हि— इहाख्यातस्य नैयमिकाग्निहोत्रविषयत्वे, तस्य परामर्शः तदनुवादेन गुण- विधानार्थः, तस्यापि विधानार्थो वा स्यात् । नाद्यः, प्राप्त- कर्मानुवादेन मासोपसदानन्तर्यरूपगुणद्वयविधाने वाक्यभे- दप्रसङ्गात् । न च 'तेषां द्वादशोपसदः' इति उपसदाम् 'मासमग्निहोत्रं जुहोति' इति अग्निहोत्रहोमस्य च पाठक्रम- प्राप्तः क्रमः 'उपसद्भिश्चरित्वा' इत्यनेन अनूद्यते, मासगुण- मात्रं विधीयते—इति न वाक्यभेदप्रसङ्ग इति वाच्यम्, अङ्गाङ्गिभावादिना एकप्रयोगान्तर्गतौ सत्यां हि अनुष्ठाना- द्यपेक्षितः क्रमः पाठक्रमेण कल्प्यते । न च पुरुषार्थस्याग्नि- होत्रस्य क्रत्वर्थानामुपसदां च अङ्गाङ्गिभावादिकमस्ति । अत्रैव उपसदामग्निहोत्राङ्गत्वस्य अग्निहोत्रस्योपसदङ्गत्वस्य

T

वा विधाने, तस्य मासगुणस्य च विधाने वाक्यभेदप्रसङ्गः । तस्मादनुवादपक्षस्यायुक्तत्वात् विधिपक्ष एवाश्रयणीयः । न च विहितस्य पुनर्विधानं संभवति—इत्याख्यातं विधियोग्यं होमान्तरमेवोपस्थापयेत् । अतो नाम्नः तत्परतन्त्रस्य तद्विरुद्धार्थसमर्पकत्वायोगात् तस्य मुख्यार्थस्वारस्यभङ्गो न दोष इति अप्रयोजकस्त्वद्धेतुः, मद्धेतुश्च न प्रतिकूलतर्कपराहत इति ॥

अथ वादिन एकादशी कक्ष्या—

विधिपक्ष एवाश्रीयते । विहितस्यापि विधानं सत्राङ्गत्वसिद्ध्यर्थं युक्तम्; सति हि सत्रप्रकरणमध्ये विधाने तस्य सत्राङ्गत्वं सिध्यति— यथा दर्शपूर्णमासप्रकरणे विहितानां प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । दृष्टं च प्राप्तस्यापि पुनर्विधानं प्रयोजनान्तरार्थम् 'चित्रिणीरुपदधाति' 'वज्रिणीरुपदधाति' इत्यादौ । तथाहि—'इष्टकाभिरग्निं चिनुते' इति विधिना इष्टकानामग्न्याधारस्थण्डिलविशेषनिर्वर्तकत्वमवगतम् । न च अनुपहिताभिरिष्टकाभिः स्थण्डिलं निर्वर्तयितुं शक्यते— इति सर्वासामिष्टकानामुपधानमर्थतः प्राप्तमेव । तथापि 'चित्रिणीरुपदधाति' इत्यादिविधिभिः कासांचिदिष्टकानां प्रत्यक्षवचनेनोपधानं विधीयते । तत् तासां मध्यम-

T

चितिप्राप्तिरूपप्रयोजनान्तरार्थम् । एवं हि श्रूयते— 'यां वै कांचिद्ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चिताबुपदध्यात्' इति । अत्र अभिपूर्वो जानातिः प्रत्यक्षे वर्तते। तथा च यामिष्टकां प्रत्यक्षब्राह्मणविहितां पश्येत्, तामग्नेः पञ्चसु चितिषु मध्यमचितावेव उपदध्यात्, न चित्यन्तरे— इति तस्यार्थः । एवं च 'वज्रिणीरुपदधाति' इत्यादिप्रत्यक्षब्राह्मणविधानेन वज्रिण्यादीष्टकानामनियमेन यस्यां कस्यांचिच्चितौ उपधेयत्वेन प्राप्तानां मध्यमचितावेव उपधेयाः— इति नियमरूपप्रयोजनान्तरार्थं प्राप्तोपधानपुनर्विधानम् । तद्वदिह विहितस्यापि नैयमिकाग्निहोत्रस्य पुनर्विधानमङ्गत्वरूपप्रयोजनान्तरार्थं भवेत् । तस्मात् नामाख्यातयोर्विरोधाभावात् नाम्नो मुख्यार्थभङ्गप्रसङ्गो दोष एवेति न मद्धेतुरप्रयोजकः, त्वद्धेतुश्च प्रतिकूलतर्कपराहत इति ॥

अथ द्वादशी प्रतिवादिनः कक्ष्या—

नैयमिकाग्निहोत्रस्य स्वतन्त्रस्य क्रत्वर्थत्वलाभार्थं पुनर्विधानमिति न युज्यते, एकस्य स्वातन्त्र्यपारतन्त्र्ययोः विरोधात् । न हि स्वातन्त्र्येण पुरुषार्थसाधने शक्तः तत्साधनार्थमन्याङ्गभावं भजते इति युक्तम् । तस्मान्मासाग्निहोत्रवाक्येन विधेयः सत्राङ्गभूतो होमः कर्मान्तरमिति नामा-

T

ख्यातयोर्विरोधात् आख्यातपरतन्त्रस्य नाम्नो मुख्यार्थत्वभङ्गो न दोष इति त्वद्धेतुरप्रयोजकः, मद्धेतुश्च न प्रतिकूलतर्कपराहत इति ॥

अथ वादिनः त्रयोदशी कक्ष्या—

किंचित्फलसाधने स्वयं प्रधानभूतस्यापि फलान्तरसाधने अन्याङ्गतायां न तावदर्थविरोधः, फलभेदेनोभयोपपत्तेरमात्यादिषु दृष्टत्वात्। नापि तदुभयबोधकशब्दविरोधः, एकस्यैव वाक्यस्य अङ्गत्वप्रधानत्वोभयबोधकत्वे हि विरोधः स्यात्। इह च नैयमिकाग्निहोत्रप्रकरणपठितवाक्येन प्राधान्यम्; सत्रप्रकरणपठितेनाङ्गत्वमिति विनियोजकवाक्यभेदात् न शब्दविरोधोऽपि। तस्मात् नामाख्यातयोर्विरोधाभावात् नाम्नो मुख्यार्थभङ्गो दोष एवेति न मद्धेतुरप्रयोजकः, त्वद्धेतुश्च प्रतिकूलतर्कपराहत इति ॥

अथ प्रतिवादिनश्चतुर्दशी कक्ष्या—

यद्वैदिकं कर्म प्रधानम्, न तदन्यस्य कर्मणोऽङ्गम्—इत्यव्यभिचरितसहचारदर्शनेन नियमोऽवधृतः। न चेत्थमवधृतस्य नियमस्य बाधनं युक्तम्। अतः सत्राङ्गतया विधेयहोमो नैयमिकाग्निहोत्राद्भिन्न इति नामाख्यातयोर्विरोधात् नाम्नो मुख्यार्थभङ्गो न दोष इति त्वद्धेतुरप्रयोजकः, मद्धे-

तुश्च न प्रतिकूलतर्कपराहत इति ॥

अथ वादिनः पञ्चदशी कक्ष्या—

यत्प्रधानं न तत्कर्मान्तराङ्गम्— इति नायं नियमोऽस्ति, प्रस्तरप्रहरणे व्यभिचारात् । तथा हि— दर्शपूर्णमासप्रकरणे 'सूक्तवाकेन प्रस्तरं प्रहरति' इति श्रूयते प्रस्तरप्रहरणरूपं कर्म । तस्य प्रकरणाम्नानसिद्धं दर्शपूर्णमासाङ्गत्वं तावन्निर्विवादम् । आयुरादिफलसाधनत्वरूपं प्राधान्यमप्यस्ति । तत्करणत्वेन श्रुते हि सूक्तवाकमन्त्रे फलान्यायुरादीनि संकीर्त्यन्ते । मन्त्रस्य च क्रियाकरणत्वं तदनुष्ठानोपयोगितत्स्मरणसंपादनद्वारा । न च आयुरादिकीर्तनस्य साक्षात्प्रहरणादिक्रियास्मरणहेतुत्वमस्ति । अतः कीर्त्यमानानामायुरादीनां तया क्रियया संबन्धः कल्पनीयः । तथा सति हि क्रियासंबन्धिकीर्तनस्य संबन्धिस्मरणद्वारा क्रियास्मारकत्वमुपपन्नं भवति । संबन्धश्च आशास्यमानानामायुरादीनां क्रियया सह कल्प्यमानो योग्यतया फलफलिभावरूप एव पर्यवस्यति । अतः श्रुतकृत्स्नसूक्तवाकमन्त्रकरणकत्वान्यथानुपपत्तिसिद्धम् आयुरादिफलसाधनत्वरूपं प्राधान्यमवश्यमभ्युपगन्तव्यमिति सुस्थो व्यभिचारः ॥

अथ प्रतिवादिनः षोडशी कक्ष्या—

T

यत्प्रधानं न तत्कर्मान्तराङ्गम्— इति नियमे प्राधान्यं फलसाधनत्वमात्ररूपं न विवक्षितम्। किंतु यत्कर्म प्रति अङ्गत्वमिष्यते, तत्प्रयोगाद्बहिरनुष्ठानेन फलसाधनत्वम्। न चैतत् प्रस्तरप्रहरणे अस्ति । तस्य दर्शपूर्णमासप्रयोगाद्बहिरनुष्ठाने निष्फलत्वात् । तस्मात् नास्त्युक्तव्याप्तौ व्यभिचार इति ॥

अथ वादिनः सप्तदशी कक्ष्या—

नेयं व्याप्तिरस्ति, विपक्षे बाधकतर्काभावात् । यथा राजसूयान्तर्गताया एव अवेष्टेः पवित्रादिक्षत्रस्यधृत्यन्तानेकयागान्तरसाहित्येन स्वाराज्यफलसाधनत्वेऽपि 'एतया अन्नाद्यकामं याजयेत्' इति विधिबलेन फलान्तरसाधनत्वम्, एवं सत्राङ्गतया तद्द्वारा सत्रफलोपयोगिनोऽपि अग्निहोत्रहोमस्य सत्रप्रयोगाद्बहिरनुष्ठीयमानस्य स्वतन्त्रफलसाधनत्वोपपत्तेः। यदि च 'एतया' इति संनिहितपरामर्शिसर्वनामबलात् राजसूयप्रकरणाम्नाताया एव अवेष्टेः स्वातन्त्र्येण फलान्तरसाधनत्वमपि इष्यते; तर्हि स्वतन्त्रफलसाधनस्यैवाग्निहोत्रस्य तत्परामर्शकाग्निहोत्रनामबलात् सत्राङ्गत्वमपि इष्यताम्, विशेषाभावादिति ॥

अथ प्रतिवादिनोऽष्टादशी कक्ष्या—

उक्तव्याप्तौ असिद्धो विपक्षबाधकतर्काभावः । प्रकरणा-

T

न्तरे स्वतन्त्रफलसाधकतया विहितस्य अन्यस्मिन्प्रकरणे कर्मान्तराङ्गत्वेन विध्यङ्गीकारे वाक्यभेदप्रसङ्गस्य विपक्षबाधकस्य जागरूकत्वात्। मासाग्निहोत्रवाक्यं नैयमिकाग्निहोत्रस्यैव सत्रे विधानं करोति—इत्यभ्युपगमे असंनिहितनैयमिकाग्निहोत्रप्रत्यभिज्ञापनम्, प्रत्यभिज्ञापितस्य सत्रे विधानं च—इत्युभयमप्यत्र वचनेन संपादनीयम्। एकं चात्र वचनम्। न चैकं वचनं व्यापारद्वयाविष्टं भवितुमर्हति। न च प्रत्यभिज्ञापनं पदमात्रकृत्यम्, विधानं वाक्यकृत्यमिति अवाक्यभेदः शङ्कनीयः, पदं हि स्वशक्त्या नैयमिकाग्निहोत्रं स्मारयति परम्; न तु धात्वर्थे तदभेदं प्रत्यभिज्ञापयति; 'पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते' इति न्यायात्; अभेदबोधनं तु अग्निहोत्रनामजुहोतिसमभिव्याहारात्मकस्य वाक्यस्य कृत्यमिति स्यादेव वाक्यभेदः। प्रस्तरप्रहरणस्य अङ्गस्य सतः तत्प्रकरणाम्नातेन वाक्येन विधानमात्रं क्रियते, फलसंबन्धबोधनं तु मन्त्रलिङ्गकृत्यमिति न वाक्यभेदप्रसङ्गः। 'यवाग्वाग्निहोत्रं जुहोति' इत्यत्रापि 'दध्ना जुहोति' इत्यत्रेव संनिधिलभ्यं प्रत्यभिज्ञापनम्, न तु नामधेयलभ्यम्। 'एतया अन्नाद्यकामं याजयेत्' इत्यत्रापि तथैव। एतेन वाक्यान्तरगतत्वेन बहिरङ्गसंनिधिरपि प्रत्यभिज्ञापकश्चेत्, एकवाक्य-

T

गतत्वेनान्तरङ्गं नाम कथं न प्रत्यभिज्ञापकम्—इति शङ्कापि निरस्ता, संनिधेः प्रत्यभिज्ञापकत्वे तत्कल्पितवाक्यस्य श्रुतवाक्यतो भिन्नतया तत्र वाक्यभेददोषाप्रसङ्गात्। इह नाम्नः प्रत्यभिज्ञापकत्वे नाममात्रस्य तत्रासामर्थ्येन विधायकवाक्यस्यैव तत्रापि व्यापारस्य वक्तव्यतया वाक्यभेदस्यावर्जनीयत्वादिति ॥

अथ एकोनविंशतितमी वादिनः कक्ष्या—

विधिव्यापारभेदेनैव वाक्यभेदो भवति, न तु प्रत्यभिज्ञापनविधिव्यापाराभ्याम्। अन्यथा गृहमेधीये 'आज्यभागौ यजति' इति विधावपि वाक्यभेदः प्रसज्येत। तथा हि—चातुर्मास्येषु आम्नायते—'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्' इति। तत्संनिधौ आम्नायते—'आज्यभागौ यजति' इति। गृहमेधीयेष्टौ दर्शपूर्णमासतोऽतिदेशात्संभवत्प्राप्तिकयोः आज्यभागयोः पुनर्विधानं क्रियते, प्राकृतावाज्यभागावेव यथा स्याताम्, प्राकृतानि प्रयाजादीन्यङ्गान्तराणि यथा न स्युः— इत्येतदर्थम्। तत्र आज्यभागनामोपस्थापितयोः प्राकृतयोराज्यभागयोः प्रत्यभिज्ञापनं तयोर्गृहमेधीये विधानं च एकस्मिन्वाक्ये अभ्युपगम्यते। तद्वदिहापि स्यात्। न च तेन

T

वाक्येन विधानमात्रं क्रियते, न प्रत्यभिज्ञानम्; 'दर्शपूर्णमासवत्कुर्यात्'—इत्यतिदेशवाक्यरूपेण चोदकेन विपरिवर्तमानयोराज्यभागयोः वाक्येन प्रत्यभिज्ञापनस्य अकरणीयत्वात्, इह तु न तथा प्रत्यभिज्ञापकमन्यदस्तीति वाच्यम्; यतः चोदकात् आज्यभागप्राप्त्यनन्तरम् 'आज्यभागौ यजति' इति वाक्यं न प्रवर्तते, प्राप्तयोर्विधानस्यानपेक्षितत्वेन वाक्यस्य आज्यभागव्यतिरिक्ताङ्गान्तरनिषेधार्थत्वेन परिसंख्यारूपत्वकल्पनाप्रसङ्गात्। न च इष्टापत्तिः, आज्यभागविधिरूपस्वार्थत्यागः, प्रयाजादिनिषेधरूपपरार्थपरिग्रहः, चोदकप्राप्तप्रयाजादिबाधश्च— इति प्राप्तपरिसंख्यायां दोषत्रयप्रसङ्गात्। किं तु प्रागेव चोदककल्पनात् गृहमेधीयस्य इतिकर्तव्यतारूपव्यापारापेक्षस्य प्रत्यक्षश्रुतक्लृप्तोपकाराज्यभागव्यापारसंयोजनया निराकाङ्क्षतापादनेन तदाकाङ्क्षामूलचोदककल्पनाप्रतिबन्धद्वारा गृहमेधीयस्य प्रकृतिराहित्यरूपापूर्वतासिद्ध्यर्थम् इदमाज्यभागव्यापारविधानं प्रवर्तते। अतः चोदककृतविपरिवृत्त्यसिद्धेः प्राकृताज्यभागप्रत्यभिज्ञापनमपि 'आज्यभागौ यजति' इत्यत एव लभ्यम्। अतः तदभावेन अवाक्यभेदो न समर्थयितुं शक्यः— इति विपक्षबाधकतर्काभावात् नोक्ता व्याप्तिरस्तीति॥

T

अथ प्रतिवादिनो विंशतितमी कक्ष्या—

गृहमेधीयाज्यभागवाक्येन प्रत्यभिज्ञापनमात्रं क्रियते न विधानम्; विधानं तु प्रकरणकल्प्यवाक्यान्तरकृत्यमिति उपपद्यते । एवमेव हि वार्तिककृता प्रकरणान्तराधिकरणे गवामयनादिगतानि 'ज्योतिः' 'आयुः' इत्यादीनि अहःक्लृप्तिवचनानि एकाहक्रतुरूपाणामेव सोमयागानां सत्रैकदेशतया विधानार्थं प्रत्यभिज्ञापकानि, न तु तद्धर्मकर्मान्तरपराणि— इति स्वाभिमतसिद्धान्तं व्यवस्थापयता प्रत्यभिज्ञापनमात्रम् 'ज्योतिर्गौरायुः' इत्यादिवचनकृत्यम्, सत्रैकदेशतया फले विधानं तु 'यं कामं कामयते तमेतेनाप्नोति' इति फलवचनकृत्यम्—इति अवाक्यभेदः समर्थितः। उक्तं हि वार्तिके— 'एकेन वचनेन पर्युपस्थाप्य अपरेण फले विधीयते' इति । न चैवं मासाग्निहोत्रवाक्येन प्रत्यभिज्ञापनम्, प्रकरणकल्पितवाक्येन सत्राङ्गतया विधानमिति शङ्क्यम्; मासश्रुत्यवैयर्थ्याय प्रत्यभिज्ञापकवाक्य एव मासमुद्दिश्य होमविधानस्यापि अङ्गीकर्तव्यत्वात् । अतः वाक्यभेदप्रसङ्ग इति विपक्षबाधकतर्कसत्त्वात् उक्तव्याप्तिः सुदृढेति ॥

अथ वादिन एकविंशतितमी कक्ष्या—

गावामयनिकाहःक्लृप्तिवाक्यदृष्टान्तमवलम्ब्य गृहमेधी-

T

यवाक्येन प्रत्यभिज्ञापनमात्रं क्रियते न विधानम्—इत्यवाक्यभेदसमर्थनमयुक्तम्, तेषु वाक्येषु वार्तिककृता 'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुते:' इति विधेयभावनाभेदस्य तद्विध्यर्थम् 'ज्योति: कार्यम्' 'गौ: कार्य:' इत्यादिरूपेण भावनाविध्यर्थपदाध्याहारस्य च अङ्गीकृततया तेषां प्रत्यभिज्ञापनमात्रं कृत्यमिति वक्तुमशक्यत्वात्। वार्तिककृता तदनन्तरमुदाहृत एव 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति वाक्यान्तरे तुषनिष्कासश्रुत्यवैयर्थ्याय तदुभयविशिष्टकर्मविधानस्यापि अङ्गीकृतत्वेन तस्य सौमिकावभृथप्रत्यभिज्ञापनमात्रं कृत्यमिति वक्तुमशक्यत्वाच्च। तस्मात् ज्योतिरादिदृष्टान्तेन गृहमेधीयवाक्यस्य प्रत्यभिज्ञापनमात्रपरत्वोपपादनेन अवाक्यभेद: समर्थयितुं न शक्यते। किंतु तद्दृष्टान्तेन प्रत्यभिज्ञापनं विधानं च इत्युभयमपि गृहमेधीयवाक्ये अङ्गीकरणीयमिति, तत्र विधानद्वयाभावेनैव अवाक्यभेद: समर्थनीय:। तद्वत् मासाग्निहोत्रादिवाक्येष्वपि अवाक्यभेदसमर्थनमुपपद्यते—इति विपक्षे बाधकतर्काभावात् त्वदुक्तव्याप्ति: अप्रयोजिकेति॥

अथ द्वाविंशतितमी प्रतिवादिन: कक्ष्या—

विधेयभेदे सत्येव वाक्यभेद इति परिभाषामात्रम्; किंतु

T

अर्थभेदमात्रे वाक्यभेदनियमः । ‘चैत्रो गच्छति’ ‘मैत्रः पश्यति’ इत्यादिषु अविधिपरेष्वपि वाक्येषु भेददर्शनात् । ततश्च मासाग्निहोत्रवाक्ये प्रत्यभिज्ञाप्यविधेयरूपार्थद्वयाङ्गीकारे वाक्यभेदप्रसङ्गो न शक्यनिवारण इति दृढो विपक्षे बाधकतर्कः । गृहमेधीयवाक्येन तु प्रत्यभिज्ञापनमात्रं क्रियते । विधानं तु प्रकरणकल्प्यवाक्येनेति न वाक्यभेदः प्रसज्यते । न हि तत्र भावनाभेदोऽस्ति, सौर्यादिषु चोदकप्राप्तयोरिव— गृहमेधीये प्रत्यक्षवचनप्राप्तयोरपि आज्यभागयोः तद्भेदस्य अनभ्युपगन्तव्यत्वात् । न वा गुणश्रवणमस्ति । यत्तु ज्योतिरादिदृष्टान्तासिद्धेः तद्दृष्टान्तेन प्रत्यभिज्ञापनपरतामुपपाद्य अवाक्यभेदसमर्थनमशक्यमित्युक्तम्, तत् अभिप्रायानवबोधविलसितम्—न हि गावामयनिकज्योतिरादीनामेकाहज्योतिराद्यभेदो वारुणप्रघासिकावभृथस्य सौमिकावभृथाभेदश्च वार्तिककाराभिमत इति तदभिमतदृष्टान्तोपादानं कृतम्; वार्तिककृतैव टुप्टीकायाम् ‘तथावभृथः सोमात्’ इति साप्तमिकाधिकरणे सौमिकावभृथाद्वारुणप्रघासिकावभृथस्य भेदम्, ‘एकादशिनीवत् त्र्यनीकापरिवृत्तिः स्यात्’ इति दाशमिकाधिकरणे ज्योतिराद्येकाहक्रतुभ्यो गावामयनिकज्योतिरादीनां भेदं च प्रकरणान्तराधिकरणन्यायसिद्धं

T

सिद्धवत्कृत्य, तेभ्यः तेषु नाम्ना धर्मातिदेशस्य व्यवहृतत्वात् । अभेदे स्वत एव धर्माणां प्राप्त्या अतिदेशानपेक्षणात् । न वा अनुमान इव दृष्टान्तसद्भावायत्तमभिमतार्थसमर्थनमिति प्रकृतार्थसिद्धौ अवश्यापेक्षितदृष्टान्तोपादानं कृतम्, दृष्टान्ताभावेऽपि विधेयगुणभावनाश्रवणाभावेनैव प्रत्यभिज्ञापनमात्रं गृहमेधीयादिवाक्यकृत्यमिति उपपादयितुं शक्यत्वात् । किंतु यत्र प्रत्यभिज्ञापनमात्रं वाक्यकृत्यमित्यभ्युपगमे अनुपपत्तिरस्ति, तत्रापि तदभ्युपगमः प्रौढिवादेन कृतो दृश्यते; सः यत्रानुपपत्तिर्नास्ति गृहमेधीयादिवाक्ये, तत्र पारमार्थिकस्य तदभ्युपगमस्य ज्ञापकः—इत्यभिप्रेत्य । तस्मान्न कोऽपि विरोध इति ॥

अथ वादिनः त्रयोविंशतितमी कक्ष्या—

यदुक्तम्— विधानभेदे सत्येव वाक्यभेदः इत्येव नास्ति नियम इति, तन्नियमभञ्जनमनुक्तोपालम्भनम् । न हि तथा मया नियम उक्तः । किंतु यथा विधानभेदे वाक्यभेदो भवति, नैवं विधानप्रत्यभिज्ञाभ्यां संभवति— इत्येतावदुक्तम् । तत्र नास्ति कश्चन दोषः । न च तत्रापि प्रत्यभिज्ञापनं विधानमपीति व्यापारभेदेन वाक्यभेदः शङ्कनीयः, प्रसिद्धाभेदबोधनं हि प्रत्यभिज्ञापनमुच्यते; न त्वप्रसिद्धाभेद-

T

बोधनम् । ततश्च यथा—'रक्तः पटो भवति' इत्यत्र प्रत्यक्षादिप्रसिद्धरक्तिमगुणविशिष्टाभेदवति पटे रक्तपदसमानाधिकरणेन पटपदेन प्रत्यभिज्ञाप्यमाने तस्मिन् भवनक्रियासंबन्धमात्रं वाक्येन बोध्यते, यथा वा—'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्' इत्यभ्युदयेष्टिवाक्ये मन्त्रवर्णप्रसिद्धदातृत्वगुणविशिष्टाभेदवति अग्नौ दातृपदसमानाधिकरणेनाग्निपदेन प्रत्यभिज्ञाप्यमाने तस्मिन् हविःसंबन्धमात्रं वाक्येन बोध्यते, तत्र उभयत्रापि प्रत्यभिज्ञानांशेऽनुवादरूपत्वात् न वाक्यभेदः— तथा अत्रापि नैयमिकाग्निहोत्रप्रकरणगतोत्पत्तिवाक्यादिप्रसिद्धाग्निहोत्रनामविशिष्टाभेदवति होमे नामसमानाधिकरणेन धातुना प्रत्यभिज्ञाप्यमाने तस्य विधिसंबन्धमात्रं वाक्येन बोध्यते । अतो नात्र वाक्यभेदशङ्का प्रसरं लभते । न च तथापि गृहमेधीयवाक्यदृष्टान्तेन प्रत्यभिज्ञापनविधानाभ्यां न वाक्यभेदः प्रसज्यते इति समर्थनमनुपपन्नम्, तस्य आज्यभागप्रत्यभिज्ञापनमात्रपरत्वोपपत्तेरिति वाच्यम्; विध्यभावे समीहितसाधनत्वाप्रतीत्या समीहितविशेषाकाङ्क्षाविरहेण अन्योन्याकाङ्क्षालक्षणप्रकरणानुत्थित्या आज्यभागयोः तन्मूलकगृहमेधीयाङ्गत्वकल्पनासिद्धिप्रसङ्गात् । अत एवाहुराचार्याः—

'न चाविहितमङ्गं भवति' इति । यत्तु गावामयनिकज्योतिरादिदृष्टान्तासिद्धिवचनम् अभिप्रायानवबोधविलसितमिति वचनम्, तदेव वार्तिकग्रन्थानवबोधविलसितम्, वार्तिके हि 'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः' इति गावामयनिकज्योतिरादिषु एकाहज्योतिरादिभ्यो वारुणप्रघासिकावभृथे सौमिकावभृथाच्च भावनामात्रकृत एव भेदः न धात्वर्थकृतभेदः—इत्ययमेव पक्षः पारमार्थिकत्वेनोपन्यस्तः। न तत्र प्रौढिवादाश्रयणं युक्तम्। दशमसप्तमाधिकरणयोरतिदेशवचनं तु भावनाभेदादुपपद्यते। अपूर्वभावनया खलु इतिकर्तव्यतान्वयः न धात्वर्थेन। एवमेव मासाग्निहोत्रदर्शपूर्णमासादिषु नैयमिकाग्निहोत्रदर्शपूर्णमासादिभ्यो धर्मातिदेशसमर्थनमपि 'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति साप्तमिकाधिकरणे कृतं भावनाभेदादेव। न च अतिदेशवचनस्य भावनाभेदेनोपपत्तावपि धात्वर्थाभेदे अग्निहोत्रादिनाम्नां मासाग्निहोत्रादिषु गौणत्वोक्तेः नोपपत्तिः, नाम्नां धात्वर्थगोचरत्वादिति शङ्क्यम्; नित्याग्निहोत्रादिष्विव मासाग्निहोत्रादिषु प्राकरणिकदेवताभिधानादिभिः अग्निहोत्रादिनाम्नां प्रवृत्तिनिमित्ताभिव्यक्तिर्नास्ति, किंतु नैयमिकाग्निहोत्राद्यभेदानुसंधानेन तद्धर्मातिदेशानुसंधानेन च

T

प्रवृत्तिनिमित्तसत्त्वमवगन्तव्यमिति अस्फुटशक्तिकत्वाभिप्रायाया गौणत्वोक्तेः भाष्यादिदृष्टाया: गौणत्वात् । 'प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात् तदभावेऽप्रसिद्धं स्यात्' इति 'उक्तं क्रियाभिधानम्' इत्यधिकरणगुणसूत्रेणैव तथाभिप्रायस्य स्फुटीकरणात् । किंच 'तथावभृथः सोमात्' इति साप्तमिकाधिकरणे वरुणप्रघासेषु विधीयमानोऽवभृथः सोमिकावभृथ एव विवक्षितः, न तु ततोऽन्यः तद्धर्मधर्मकः इति अवभृथशब्दस्य प्रथमान्तत्वेनावसीयते । वारुणप्रघासिके अवभृथनामकर्मणि सौमिकावभृथात् धर्मग्रहणम्— इत्यर्थविवक्षायां हि अवभृथशब्दे पञ्चम्या भाव्यम् । एवमपि तत्राधिकरणे भाष्यादिषु यस्तस्मिन् अवभृथशब्दस्य गौणत्वव्यवहारः, तस्याभिप्रायः कथंचिदित्थमेव वर्णनीयः । ननु गावामयनिकज्योतिरादीनां वारुणप्रघासिकावभृथस्य च प्रसिद्धाभेदोऽस्तु नाम यज्यश्रवणात्, इह मासाग्निहोत्रमासदर्शपूर्णमासादिषु जुहोतियजतिश्रवणे सति कथमभेदः स्यादिति चेत् न, प्रकरणान्तरगतस्याप्याख्यातस्य धात्वर्थभेदादावौदासीन्यस्य व्यवस्थापितत्वेन नाम्ना प्राप्यमाणस्य प्रसिद्धाभेदस्यानिवारणात् । 'भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः' इत्यस्य अयं भावः—यजिश्रवणे हि प्रकरणा-

T

न्तरात् तदर्थभेदः शङ्क्येतापि, सोऽप्यत्र नास्ति । अत एव हि प्रकरणान्तराधिकरणवार्तिक एव 'नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः । भावना त्वनुपस्थानाद्भिद्यमाना न वार्यते— सामानाधिकरण्येन हि सर्वाणि नामधेयानि धात्वर्थानां नामधेयत्वेनावस्थितानि न भावनानाम् । तेन भावनान्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैकत्वे भावना तावत् अनन्यप्रमाणत्वात् आख्यातप्रत्ययान्तरेणानुपनीयमाना न कथंचित् प्रत्यभिज्ञाप्यते इत्युपपन्नं प्रयोजनान्यत्वम्' इति श्लोकतद्व्याख्यानाभ्यां मासाग्निहोत्रादिषु भावनाभेदमात्रम्, न धात्वर्थभेदः, नाम्ना तत्प्रत्यभिज्ञानादिति धात्वर्थाभेदेऽपि भावनाभेदमात्रेण प्रकरणान्तरस्य कर्मभेदे प्रामाण्यमुपपन्नम्, भावनान्यत्वानन्यत्वपरीक्षाया एव अध्यायप्रमेयत्वादिति, 'प्रकणान्तरे प्रयोजनान्यत्वम्' इति सूत्रमपि भावनाभेद एवार्थे समञ्जसम्, प्रयोजनशब्दस्य प्रधानवाक्यार्थभूतभावनापरत्व एव स्वारस्यादिति च स्पष्टमुक्तम् । तस्मिन्नधिकरणे वार्तिककाराणां धात्वर्थस्यापि भेदमाश्रित्य पक्षान्तरोपन्यासस्तु भावनाभेददृढीकरणार्थः प्रौढिवादः । यदि नैयमिकाग्निहोत्रस्य विहितस्य पुनर्विधानमत्र न संभवति, तदा विधेयगुणवाच्युपपदाश्रवणेन गुणसंक्रान्तिराहि-

T

स्यात् भावार्थाधिकरणन्यायतः स्वारस्येन धात्वर्थे निविष्टो विधिः कर्मान्तरमेव विदध्यात्, अतः प्रधानभूताख्यातपरतन्त्रनामापि स्वोपस्थापितमुख्यार्थसादृश्येन कर्मान्तर एव वर्तेत——इति शङ्क्येत। संभवति तु विहितस्यापि नैयमिकाग्निहोत्रस्य सत्राङ्गत्वसिद्ध्यर्थं पुनर्विधानम्——इति समर्थितमेव। एवं प्रकरणान्तराधिकरणन्यायस्य भावनाभेदमात्रनिविष्टत्वमभिप्रेत्यैव शंकरभगवत्पादैः श्रीकण्ठाचार्यैः विवरणाचार्यप्रभृतिभिश्च पुरुषार्थस्यैव सौत्रामणिबृहस्पतिसवादेः अग्निचयनवाजपेयादिप्रकरणान्तरेषु तत्तत्कर्माङ्गतया विधानं तत्र तत्र दृष्टान्ततया व्यवहृतम्। गुरुणा च निबन्धनटीकायाम् अग्निचयनवाजपेयाङ्गयोः सौत्रामणिबृहस्पतिसवयोः कर्मान्तरत्वं व्यवहृतवता विवरणटीकायां प्रसिद्धसौत्रामण्यादिरूपत्वमेवोक्तम्। तस्मात् मासाग्निहोत्रादिषु प्रकरणान्तरात् कर्मभेदः——इति मीमांसकव्यवहारे कर्मशब्दं धात्वर्थैकान्तिकमभिमन्यमानानां नैयमिकाग्निहोत्रात् मासाग्निहोत्रं भिन्नमिति गतानुगतिकप्रसिद्धिमवलम्बमानानां च केषांचित् जरन्मीमांसकानां प्रकरणान्तराधिकरणवार्तिकादिहृदयानभिज्ञानां मतमयुक्तमेव॥

इति मासाग्निहोत्रवादः॥ १॥

---

T

# हिंसिधात्वर्थवादः ॥

यथा मासाग्निहोत्रमग्निहोत्रपदवाच्यम्, एवं मीमांसकानां प्रकरणान्तराधीतक्रत्वर्थपशुसंज्ञपनं हिंसिधातुवाच्यम्; तथापि 'न हिंस्यात्' इति निषेधविषयो न भवति— इति सिद्धान्तस्थितिः ॥

अत्र वादिनां बहुविधाः पन्थानः—प्राभाकरास्तावत्—रागप्रयुक्ता हिंसा निषेधविषयः। क्रत्वर्थसंज्ञपने तु न रागतः प्रवृत्तिः। किंतु विधितः— इति व्यवस्थां कल्पयन्ति। कौमारिलनैयायिकादयस्तु– रागं विना प्रवृत्त्यसंभवात् नेयं व्यवस्था युज्यते; किंतु विधिसंस्पृष्टस्य निषेधविषयताया विरुद्धत्वेन—आहवनीयादिविधिः पदहोममिव—हिंसानिषेधः क्रत्वर्थसंज्ञपनं परिहृत्य प्रवर्तते—इति व्यवस्था वर्णनीया—इत्याहुः। सांख्यास्तु—न केनापि प्रकारेण व्यवस्था वर्णनीया। क्रत्वर्थसंज्ञपने विध्यधीनस्य इष्टसाधनत्वस्य निषेधाधीनस्यानिष्टसाधनत्वस्य च समावेशसंभवात्। पशुवधप्रयुक्तस्य अल्पस्यानिष्टस्य वित्तव्ययायासदुःखस्येव अभ्युपगमेन क्रतुसाध्यमहाफलार्थतया प्रवृत्तेरुपपन्नत्वेन विधिनिषे-

T

धाधीनप्रवृत्तिनिवृत्तिसमावेशदोषस्य अनवकाशत्वात्—इत्याहु: । रामानुजमतानुवर्तिनस्तु सांख्यवत् क्रत्वर्थसंज्ञपनस्य निषेधविषयत्वमनङ्गीकुर्वाणा: तत्संमतविधिनिषेधविरोधनिराकरणोपायमपि अनालोचयन्त: श्रूयते हि—'हिरण्यशरीर ऊर्ध्वं स्वर्गमेति' 'न वा उवे तन्म्रियसे नरिष्यसि' इति पशुहिंसाया अहिंसात्वमिति श्रीकण्ठाचार्यसूक्तापातप्रतिपन्नमर्थमवलम्बमाना: क्रत्वर्थसंज्ञपनं हिंसैव न भवति इत्यभ्युपगमेन तस्य निषेधविषयत्वप्रसक्तिं परिहरन्ति । इदमेव मतं पूर्वपक्षतया निवेश्य श्रीकण्ठाचार्याणामाशयगतं कौमारिलोदीरितं सिद्धान्ततया परिगृह्य कक्ष्याविशेषानुषङ्गिकसांख्यप्राभाकरमतनिराकरणान्तर्भावा वादकथा प्रस्तूयते—

तत्र क्रत्वर्थपशुसंज्ञपनं हिंसिधातुवाच्यम्, मारणत्वात्, यन्मारणं तत् हिंसिधातुवाच्यं यथा शत्रुमारणम्— इति प्रथमा कक्ष्या ॥

अप्रयोजकमिदमनुमानम्, क्रोधादिकृतस्य शरीरावयवदाहच्छेदादे: निग्रहत्वेऽपि व्रणशान्त्यर्थं कृतस्य तस्यानुग्रहरूपत्वेन अनिग्रहत्ववत्—क्रत्वर्थान्यमारणस्य हिंसिधातुवाच्यत्वेऽपि 'न वा उवे तन्म्रियसे नरिष्यसि देवाँ इदेषि पथिभि: सुगेभिर्यत्र यन्ति सुकृतो नापि दुष्कृत: तत्र त्वा

*$V_T$ 3

देवः सविता दधातु' इति श्रुतिसिद्धपशुस्वर्गपर्यवसायितया पश्वनुग्रहरूपत्वेन क्रत्वर्थस्य तस्य तदवाच्यत्वोपपत्तेः। तस्मात् क्रत्वर्थपशुमारणं न हिंसिधातुवाच्यम्, क्रत्वर्थत्वात्, यत्क्रत्वर्थं तन्न हिंसिधातुवाच्यम्— यथा प्रोक्षणम्— इति द्वितीया कक्ष्या ॥

अथ तृतीया—

मदीयानुमानं तावन्नाप्रयोजकम्, क्रत्वर्थमारणेऽपि हिंसिधातुप्रवृत्तिनिमित्तस्य सत्त्वेन तस्य तद्वाच्यत्वाभावायोगात्। मरणोद्देश्यकमरणफलोपहिततत्कारणक्रियात्वं हि तस्य प्रवृत्तिनिमित्तम्। मरणकारणत्वमात्रस्य योग्यतासाधारणस्य शत्रुमरणोद्देश्यकलक्ष्यापतितायुधक्षेपादौ मरणफलकत्वमात्रस्य कारणकारणरूपान्यथासिद्धसाधारणस्य पङ्कपतितगवादिमरणफलकतटाकनिर्माणादौ च अतिप्रसक्तत्वेऽपि विशिष्टस्य अनतिप्रसक्तत्वात्। न च क्रत्वर्थपशुमारणस्य हिंसात्वे तदनुग्रहत्वानुपपत्तिः; व्रणशान्त्यर्थकृतदाहछेदादेः प्रवृत्तिनिमित्तानुसारेण दाहछेदादिरूपत्वेऽप्यनुग्रहत्ववत्— क्रत्वर्थपशुमारणस्य तदनुसारेण हिंसात्वेऽप्यनुग्रहत्वोपपत्तेः। तस्मान्नाप्रयोजकं मदीयमनुमानम्। त्वदीयमेवानुमानमप्रयोजकम्, क्लृप्तप्रवृत्तिनिमित्ताधीनस्य तत्तद्धात्वर्थत्वस्य क्रत्वर्थत्वे सत्य-

T

प्युपपत्तेरिति ॥

अथ चतुर्थी कक्ष्या—

त्वदनुमानं तावदप्रयोजकमेव, त्वदुक्तमात्रस्य हिंसिधातुप्रवृत्तिनिमित्तत्वाभ्युपगमे क्रत्वर्थपशुमारणस्य 'न हिंस्यात्सर्वा भूतानि' इति निषेधविषयत्वापत्त्या तत्प्रवृत्तिनिमित्ते क्रत्वर्थपशुमारणव्यावर्तकविशेषणस्य निवेशनीयतया तावन्मात्रस्य तत्प्रवृत्तिनिमित्तत्वासिद्धेः। न च 'न हिंस्यात्' इति निषेधो रागप्रयुक्तहिंसाविषयत्वात् विधिप्रयुक्तं क्रत्वर्थसंज्ञपनं न स्पृशति, कामाधिकारे करणांशे रागतः प्रवृत्तिः, अङ्गेषु वैधीति विशेषाभ्युपगमात्; तथा च तद्व्यावर्तकविशेषणं हिंसापदप्रवृत्तिनिमित्ते न निवेशनीयमिति वाच्यम्; तस्य विधिप्रयुक्तानुष्ठानत्वेऽपि हिंसात्वाभ्युपगमे 'न हिंस्यात्' इति वाक्ये तेन रूपेण क्रोडीकृतस्य तस्य निषेध्यताया अनिवार्यत्वात्। सेतिकर्तव्यताकस्य फलकरणत्वेन फलसिद्धिमिच्छतस्तदर्थकरणे इव अङ्गेष्वपि रागावश्यंभावेन तेष्वपि रागत एव प्रवृत्त्युपपत्त्या अर्धजरतीयकल्पनायोगाच्च। भगवता जैमिनिना तृतीयाध्याये 'षट्त्रिंशत्प्रक्रमा प्राची चतुर्विंशतिरग्रेण त्रिंशज्जघनेन' इति विहिता सौमिकी महावेदिः केवलप्रधानार्था, 'इयति शक्ष्यामहे' इति तद्वाक्यशेषे एता-

T

वति भूभागे कर्तुं शक्ष्यामह इत्यर्थके तुमुन्प्रत्ययार्थचिकीर्षासंयोगात् । न त्वङ्गप्रधानार्था, अङ्गानामीप्सितफलसाधनत्वाभावेनाचिकीर्षितत्वात्— इत्येवम् 'चिकीर्षया च संयोगात्' इति सूत्रेण पूर्वपक्षं कृत्वा, 'तद्युक्ते तु फलश्रुतिः तस्मात्सर्वचिकीर्षा स्यात्' इति गुणसूत्रेण सकलाङ्गयुक्ते फलश्रुतेः सर्वत्र प्रधानेऽङ्गकलापे च चिकीर्षा अस्तीति अङ्गानामपि चिकीर्षितत्वाविशेषादङ्गप्रधानार्था महावेदिरिति सिद्धान्तयता—अङ्गेष्वपि रागत एव प्रवृत्तेः स्थापितत्वाच्च । षष्ठाध्यायेऽपि 'सामान्यं तच्चिकीर्षा हि' 'तानित्यं तच्चिकीर्षा हि' इत्यादिसूत्रगतैश्चिकीर्षाशब्दैरङ्गेषु रागतः प्रवृत्तेर्व्यवहृतत्वाच्च । ननु अङ्गेष्विच्छा नास्तीति नोच्यते, इच्छां विना प्रवृत्त्ययोगात्; किंतु करणांशे फलसिद्ध्यर्थत्वेन रागशब्दाभिलप्यफलेच्छाधीनेच्छया प्रवृत्तिः; कामाधिकारेषु प्रथमपरामृष्टस्वर्गादिफलकरणभावस्य यागस्य विधिशब्दाभिलप्यनियोगाख्यकार्यविषयतया अन्वये सति विषयावच्छिन्नतया तस्य लिङ्वाच्यस्य कार्यस्य प्रतीतिरिति कार्यप्रतीतेः प्रागेव यागे फलकरणत्वस्य प्रतीततया तत्र फलरागाधीनेच्छया प्रवृत्त्यौचित्यात् अङ्गानां प्रथमं कार्येण अन्वयः पश्चात्कार्यद्वारा फलोपकारकत्वावगतिरिति तेषु प्रथ-

न्वितकार्यसंपादनेच्छया प्रवृत्त्यौचित्याद्वेति चेत्; मैवम्, चिरातीते यागे स्वर्गकरणत्वघटकस्य नियोगाख्यकार्यस्य प्रतीतेः प्राग्यागे स्वर्गकरणत्वप्रतीत्यसंभवात् । मतान्तरेष्विव गुरुमतेऽपि द्वारव्यतिरेकनिश्चयाभावेन योग्यतासंदेहमात्रात्करणत्वावगतिसमर्थने, तथैव साक्षात्कृत्यसाध्यस्यापि नियोगस्य कृतिसाध्यतासंघटकयागादितदवच्छेदकरूपविषयप्रतीतिं विनापि प्रतीतिसंभवेन यागादिरूपविषयावच्छिन्नतयैव कार्यप्रतीतिरिति प्रक्रियाया अनाश्रयणीयत्वात् । तदाश्रयणावश्यंभावेऽपि स्वरूपेणैव यागादेर्विषयतया कार्यावच्छेदकत्वसंभवेन विषयताप्रतीतेः पूर्वं यागे स्वर्गकरणत्वपरामर्शस्यानपेक्षणात् । स्वर्गकामकृतिसाध्यत्वं स्वर्गकरणत्वमन्तरेण न संभवतीति चेत्, माभूत्, तावता स्वर्गकरणत्वावगतिमन्तरेण शब्दतो नियोगस्य स्वर्गकामकृतिसाध्यत्वावगतौ कानुपपत्तिः । न हि वह्निमन्तरेण धूमो न संभवतीत्येतावता पर्वते धूमोऽस्तीति शब्दतः तत्र धूमावगतिर्वह्न्यवगममन्तरेण न संभवति । ननु गुरुमतप्रक्रियया घटयितुमशक्यापि करणांशे रागतः प्रवृत्तिरङ्गेषु वैधीति मर्यादा कुमारिलमते स्यादेव, तन्मते प्रथमं यागस्य स्वर्गकरणत्वप्रतीतिः तन्निर्वाहार्थमपूर्वकल्पना कल्पितापूर्ववाचकशब्दाभ्या-

हारेण 'यागेन अपूर्वं कृत्वा स्वर्गं भावयेत्' इति वाक्यार्थ-प्रतीतिः, पश्चादपूर्वभावनेतिकर्तव्यतारूपेण अङ्गानामपूर्वा-न्वय इति स्वीकारादिति चेत्, सत्यम्, अपूर्वार्थतया अ-ङ्गानुष्ठानेऽपि अङ्गचिकीर्षायाः फलरागाधीनत्वं न हीयते। न हि तन्मते विधिसिद्धिरेव विधेः फलमिति तदर्थमङ्गानु-ष्ठानम्। किंत्वपूर्वं विना स्वर्गादिफलं न सिध्यतीति परंपरया फलरागाधीनमेव तदनुष्ठानम्। तस्मात्क्रत्वर्थपशुसंज्ञपनस्य हिंसात्वाभ्युपगमे 'न हिंस्यात' इति निषेधविषयत्वमनि-वार्यमिति तद्व्यावर्तकविशेषणावश्यंभावात् त्वदनुमानं ता-वदप्रयोजकमेव। अत एव मदनुमानं नाप्रयोजकम्, क्रत्वर्थ-मारणस्य हिंसिधात्वर्थत्वे तस्य निषेधप्रसङ्गस्य विपक्षे बाध-कस्य सत्त्वादिति ॥

अथ पञ्चमी—

लाघवान्मदुक्तमात्रं हिंसिधातुप्रवृत्तिनिमित्तम्। क्रत्वर्थ-मारणस्य हिंसात्वेऽपि 'न हिंस्यात' इति निषेधो न प्रस-ज्यते। स हि निषेधः शीघ्रप्रतीतिकपुरुषार्थहिंसाव्यावर्तनेन निर्वृत्तः, कल्पनीयविलम्बोपस्थितिकक्रत्वर्थहिंसां न स्पृशति। तथाहि—'न हिंस्यात्' इत्यत्र पुरुषार्थैव हिंसा हिंसिधातु-नानूद्यते, न क्रत्वर्थापि; कर्तुराख्यातवाच्यत्वपक्षे समानपद-

T

श्रुत्या हिंसायास्तच्छेषत्वप्रतीतेः, तस्य आख्यातवाच्यभावनाक्षेप्यत्वपक्षेऽपि तदाक्षिप्तकर्तृशेषत्वप्रतीतेः। नात्र क्रतोर्वाचकं किंचिदस्ति। येन 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति' इत्यनारभ्याधीतवाक्ये चित्याग्नेर्यजिशब्दोक्तयागशेषत्ववत् अस्याः क्रतुशेषत्वमवगम्येत। नापि क्रतोराक्षेपकं किंचिदस्ति, येन पर्णताया जुह्वाक्षिप्तक्रतुशेषत्वमिव अस्याः क्रतुशेषत्वमवगम्येत। न च प्रकरणेन क्रतोर्विपरिवृत्तिरस्ति, येन 'नानृतं वदेत्' इति दर्शपूर्णमासप्रकरणाम्नातवाक्ये अनूद्यमानस्यानृतवदनस्येव क्रत्वर्थत्वप्रतीतिर्भवेत्। तस्मादिह हिंसिधातुना अनुवादः शीघ्रप्रतीतायाः पुरुषार्थहिंसाया इति तस्या एव निषेधो न क्रत्वर्थायाः। शब्दशक्तिसाम्येऽपि शीघ्रोपस्थितशक्यस्य वाक्यार्थान्वयो न विलम्बोपस्थितिकस्य— इति हि न्यायमर्यादा। अत एव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्यगतपूर्णमासपदेन उत्पत्तिवाक्यश्रुतपौर्णमासीकालयोराग्नेयाग्नीषोमीययागयोरेव झटिति प्रवृत्तिनिमित्तावगत्या शीघ्रोपस्थितयोः फलान्वयः स्यात्; उपांशुयाजस्य तु 'उपांशुयाजमन्तरा यजति' इति पौर्णमासीकालकर्तव्याग्नेयाग्नीषोमीययागद्वयान्तराले विधानादर्थसिद्धपौर्णमासीकालस्य झटिति प्रवृत्तिनिमित्तान-

T

वगत्या विलम्बोपस्थितिकस्य फलान्वयो न स्यात्; शीघ्रोपस्थितिकपौर्णमासीकालसंबन्धस्य यागद्वयस्य फल-संयोजनेनैव वाक्यस्य चारितार्थ्यात्— इति उपांशुयाज-स्यापि श्रुतपौर्णमासीकालत्वेन झटिति प्रवृत्तिनिमित्तावगत्या शीघ्रोपस्थितिकत्वासिद्ध्यर्थमेव अन्तरालविधिसामर्थ्यलभ्ये-ऽपि उपांशुयाजस्य पौर्णमासीकालसंबन्धे 'तावब्रूतामग्नी-षोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति प्रत्यक्ष-विधिरपेक्ष्यत इति ॥

अथ षष्ठी कक्ष्या—

यत्र प्रवृत्तिनिमित्तावगतौ शैघ्र्यविलम्बविशेषः तत्र शीघ्रावगतप्रवृत्तिनिमित्तस्यैवार्थस्य वाक्यार्थान्वयः, नान्य-स्य—इति नियमः। अत एव उपांशुयाजे प्रवृत्तिनिमित्ता-वगतिशैघ्र्यसाम्यसिद्ध्यर्थं प्रत्यक्षः कालविधिरपेक्ष्यते। यत्र तु प्रवृत्तिनिमित्तावगतिशैघ्र्यविलम्बविशेषाभावेऽपि तुल्य-कालावगतिकेषु एकप्रवृत्तिनिमित्तक्रोडीकृतेष्वर्थेषु क्रत्वर्थपु-रुषार्थत्वादिविशेषावगतौ शैघ्र्यविलम्बविशेषोऽस्ति, तत्र तेन विशेषेण क्रत्वर्थस्य पुरुषार्थस्य वा शीघ्रप्रतीतिकस्यैव वा-क्यार्थान्वय इति नास्ति नियमः। अन्यथा 'यदाहवनीये जुह्वति' इत्यनारभ्याधीतवाक्येऽपि आख्यातोपात्तभावना-

क्षिप्रकर्तृशेषतया पुरुषार्थानामेव होमानामाहवनीयविधिः, न क्रत्वर्थानां नारिष्ठामनहोमादीनामित्यापत्तेः । एवं न्यायस्थितौ हिंसिधातुप्रवृत्तिनिमित्तस्य क्रत्वर्थसंज्ञपनसाधारण्ये तस्यापि 'न हिंस्यात्' इति निषेधगोचरत्वमनिवार्यं भवेदित्यतः तद्व्यावृत्तमेव हिंसिधातुप्रवृत्तिनिमित्तं निर्वक्तव्यमिति ॥

अथ सप्तमी कक्ष्या—

यत्र प्रवृत्तिनिमित्ताविशेषेण क्रत्वर्थपुरुषार्थोभयग्रहणे विधिवैरूप्यमापद्यते, तत्र क्रत्वर्थपुरुषार्थयोरुभयोः अन्यतरस्यैव वाक्यार्थान्वयः नान्यस्येत्यपि नियम आदर्तव्यः । अत एव अश्वदानेष्टिहिरण्यभरणादीनां क्रत्वर्थपुरुषार्थोभयविधाश्वदानादिसंयोगो नाङ्गीक्रियते, क्रत्वर्थाश्वदानादिसंयोगेनापततः क्रत्वर्थत्वस्य पुरुषार्थाश्वदानादिसंयोगेनापततः स्वतन्त्रपुरुषार्थसाधनत्वस्य च एकेन वाक्येन बोधयितुमशक्यत्वात् । किं तु अश्वदानादिश्रुतिसाधारण्येऽपि यथायथं कस्यचित्क्रत्वर्थसंयोग एव कस्यचित्पुरुषार्थसंयोग एवेति व्यवस्था अङ्गीक्रियते । तथा हि— 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं

गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति विहिताश्वदाननिमित्तेष्टिः क्रत्वर्थाश्वदाननिमित्ता, उत पुरुषार्थाश्वदाननिमित्तेति संशये, पौण्डरीकादिषु 'अन्वहं द्वादश शतानि ददाति अश्वसहस्रमुत्तमे' इत्यादिवाक्यश्रुतक्रतुदक्षिणारूपाश्वदानस्य विहितत्वेनादुष्टत्वात् तस्मिन्दोषसंकीर्तनं नान्वेति। सुहृदादिभ्यः क्रियमाणस्य पुरुषार्थाश्वदानस्य 'न केसरिणो ददाति' इति प्रतिषिद्धत्वेन दुष्टत्वान् तत्र दोषसंकीर्तनमन्वेति। अतस्तद्वशाल्लौकिकाश्वदाननिमित्ता इयमिष्टिरिति 'दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात्' इति सूत्रेण पूर्वपक्षं कृत्वा, लौकिकं वैदिकं वा अश्वदानं कृतवतो वरुणग्रहशब्दोक्तजलोदरव्याध्युपनिपातादर्शनात् दोषसंकीर्तनमिदम्—यथा वरुणग्रहे सति तद्विमोचनसाधनमवश्यानुष्ठेयम्, एवमश्वदाने कृते सति इयमिष्टिः— इत्येवमवश्यकर्तव्यतापरं दृष्टान्ताभेदोपचारवदर्थवादमात्रम्। अतो न तद्वशात् लौकिकाश्वदाननिमित्तेयमिष्टिः। किंतु वैदिक्या इष्टेर्वैदिकमेव निमित्तं बुद्धिस्थं भवतीति बुद्धिसंनिधिलक्षणस्थानप्रमाणानुसारात् क्रत्वर्थत्वे क्रतुफलातिरेकेण पुरुषार्थत्व इव फलान्तरं न कल्पनीयमिति लाघवानुसाराच्च न लौकिकाश्वदाननिमित्ता—इत्ये-

वम् 'अर्थवादो वानुपपातात्तस्माद्यज्ञे प्रतीयेत' इति सूत्रेण सिद्धान्तितम्। तथा 'तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति विहितं हिरण्यभरणं क्रत्वर्थं पुरुषार्थं वेति संशये, कृत्यप्रत्ययेन हिरण्यस्य संस्कार्यताप्रतीतेः क्रतुदक्षिणादिरूपस्यैव हिरण्यस्याग्रे विनियोगसद्भावेन संस्कार्यतौचित्यात् क्लृप्तक्रतुफलव्यतिरेकेण फलान्तरस्याकल्पनीयत्वेन लाघवाच्च क्रत्वर्थत्वमित्येवं पूर्वपक्षं कृत्वा कृत्यप्रत्ययेन फलभागित्वमात्रप्रतीतावपि संस्कार्यत्वानवगतेः कार्यान्तरदर्शनेनैव संस्कार्यत्वस्यावगन्तव्यत्वात् अप्रकरणाधीते च कार्यान्तरानवगमात् न संस्कार्यताधीबलेन क्रत्वर्थता। किं तु रात्रिसत्रन्यायेनार्थवादिकफलविपरिणत्या श्रुतफलसद्भावेन क्रतूपकारफलस्याप्यकल्पनीयतया पुरुषार्थमेवेति 'अप्रकरणे तु तद्धर्मस्ततोऽविशेषात्' इति सूत्रेण सिद्धान्तितम्। एवमादिष्वधिकरणेषु क्रत्वर्थं पुरुषार्थं वेत्येवं विचारमवतार्य, यथान्यायं क्रत्वर्थत्वं पुरुषार्थत्वं वा निर्णीतम्। न तु क्रतुपुरुषोभयार्थत्वमिति क्वचिन्निर्णयः कृतोऽस्ति। न वा तथा क्वचित्संशयकोटिमात्रोदाहरणमस्ति। तत् कुतः? लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषतेति वाक्यवैरूप्यापत्तेः। एवमिहापि निषेधस्य क्रत्वर्थपुरुषार्थोभयविधहिंसासंयोगे तस्यापि

T

तदुभयरूपतापत्त्या एकेन वाक्येन तदुभयरूपबोधनस्याशक्यतया अन्यतरसंयोग एव स्वीकर्तव्ये पूर्वोक्तरीत्या शीघ्रप्रतीतिकपुरुषार्थहिंसासंयोग एवादर्तव्यः। न च एकस्यैव दध्नः खदिरत्वस्य च क्रत्वर्थत्वं पुरुषार्थत्वं च दृष्टम्, तथेहापि स्यादिति वाच्यम्; तत्र 'दध्ना जुहोति' 'दध्नेन्द्रियकामस्य जुहुयात' खादिरो यूपो भवति' 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति तयोः क्रतुपुरुषसंबन्धबोधकवाक्यभेदस्य सत्त्वात्। इहैकेन वाक्येन हिंसासामान्यनिषेधस्य क्रत्वर्थहिंसांशे क्रत्वर्थत्वस्य पुरुषार्थहिंसांशे पुरुषार्थत्वस्य च बोधयितुमशक्यत्वात्। न च 'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रस्तरप्रहरणविधायकमेकमेव वाक्यं श्रूयते, तस्य क्रत्वर्थत्वं पुरुषार्थत्वं चेत्युभयमभ्युपगम्यते, तथेहापि स्यादिति वाच्यम्; तत्र श्रुतवाक्येन दर्शपूर्णमासवाक्यैकवाक्यतापन्नेन क्रत्वर्थत्वबोधनम्, तृतीयाश्रुतिविनियुक्तायुरादिफलसमाशासनयुक्तकृत्स्नसूक्तवाकमन्त्रकरणकत्वान्यथानुपपत्तिकल्पितेन वाक्यान्तरेण फलार्थत्वबोधनमिति तत्रापि वाक्यभेदसत्त्वात्। इह श्रुतकल्प्यभेदेनापि वाक्यभेदाभावादिति ॥

अथाष्टमी कक्ष्या—

हिंसानिषेधवाक्यस्य क्रत्वर्थपुरुषार्थोभयविधहिंसास्पर्शि-

T

मात्रेण तस्य क्रत्वर्थहिंसांशे क्रत्वर्थता पुरुषार्थहिंसांशे पुरुषार्थतेति द्वैरूप्यं न प्रसज्यते; येन तदुभयबोधने वाक्यवैरूप्यमापद्येत, क्रत्वर्थपुरुषार्थोभयविधहिंसानिषेधस्यापि पुरुषार्थत्वोपपत्तेः। न हि क्रत्वर्थेन संबद्धं यद्विधीयते तत्सर्वं क्रत्वर्थमिति नियमः। 'गोदोहनेन पशुकामस्यापः प्रणयेत्' इति दार्शपौर्णमासिकाप्प्रणयनाश्रिततया विधीयमानस्य गोदोहनस्य पुरुषार्थत्वदर्शनात्। न च कर्मिपदसमभिव्याहाराभावे क्रत्वर्थसंबन्धितया विधीयमानस्य क्रत्वर्थतेति नियमः, 'अनतिदृश्नꣳ स्तृणाति अनतिदृश्नमेवैनं प्रजया पशुभिः करोति' इति दार्शपौर्णमासिकस्तरणाश्रितत्वेन विधीयमानाया स्तरणीयभूम्यदर्शनापादकबर्हिर्निबिडतारूपाया अनतिदृश्नतायाः पुरुषार्थत्वदर्शनात्। लिप्सासूत्रे द्वितीयवर्णके गोदोहनवदनतिदृश्नतापि हि पुरुषार्थोदाहरणत्वेन शबरस्वामिना लिखिता। तत्र प्राभाकरैः अङ्गेषु फलश्रुतिरर्थवादः स्यादिति पर्णतार्थवादन्यायसाम्यमाशङ्क्य 'यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति' इति उभयोरपि पर्णतापापश्लोकश्रवणयोर्वर्तमानापदेशेन तुल्यकालताप्रतीतेः तुल्यकालयोश्च कार्यकारणभावायोगात् विधीयमानपर्णताप्रशंसार्थमपापश्लोकश्रवणमर्थवादः, स्तरणी-

यभूमेरनतिदृश्नतायां यजमानस्य प्रजया पशुभिरनतिदृश्नतायाश्चेति भिन्नयोरुभयोरभेदोपचारस्य 'आयुर्घृतम्' इतिवत् कार्यकारणभावसंबन्धमुपचारनिमित्तमन्तरेण अनुपपत्तेः तयोः कार्यकारणभावो अविवक्षित इति पर्णतावैषम्यप्रदर्शनेन तत्समर्थनं कृतम् । न च यत्र विधेयफलाभेदव्यपदेशोऽपि नास्ति, तत्र क्रत्वर्थसंबन्धितया विधीयमानस्य क्रत्वर्थतेति नियमः; 'ओमित्येतदक्षरमुद्गीथमुपासीत' इत्यादिवाक्यैः सौमिकोद्गीथाद्याश्रितत्वेन विधीयमानानामुपासनानाम् 'आपयिता ह वै कामानां भवति' इत्यादिवाक्यशेषश्रुतकामाप्तिक्रतुफलाप्रतिबन्धादिफलार्थत्वदर्शनात् । 'तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम्' इति ब्रह्ममीमांसासूत्रेण हि पर्णताफलार्थवादन्यायसाम्यमुपासनाफलार्थवादानामाशङ्क्य, पर्णताया जुहूसंबन्धेऽप्यव्यापाररूपतया फलनिष्पादकत्वं न स्यादिति तत्सिद्धये क्रतूपरागेण व्यापाररूपतां संपादयितुं जुहूलिङ्गेन क्रतुमुपस्थाप्य तत्संबन्धबोधकशब्दः कल्प्यते । जुहूशब्दस्यैव वा जुहूसंबन्धिनि क्रतौ लक्षणा कल्प्यते । तत्कल्पने च प्रतीतजुहूद्वारा क्रतुशेषत्वनिर्वाहार्थं तस्याः क्रतूपकारकत्वकल्पनमावश्यकमिति तत एव नैराकाङ्क्ष्यात्

न रात्रिसत्रन्यायेनार्थवादिकफलविपरिणामः कल्प्यते। उपासनानां स्वयं व्यापाररूपाणां स्वत एव फलपर्यवसानं संभवतीति न उद्गीथानुपस्थापितक्रतुसंबन्धबोधकशब्दकल्पनादिकमपेक्ष्यते। तस्मादप्रतीतक्रतूपकारफलकल्पनात् वरम् अर्थवादप्रतीतफलविपरिणामकल्पना। अतस्तासां पुरुषार्थत्वात् क्रतुष्वनियमः। अत एव 'तेनोभौ कुरुतो यश्चैवं वेद यश्च न' इति वाक्यशेषेणैव तेषु तासामनियमो दर्शित इति तन्न्यायवैषम्यमुक्तम्। तस्मात् यत्क्रत्वर्थत्वेन प्रतीतं प्रति शेषतया विधीयते तत्क्रत्वर्थमिति नियमः। अत एव प्राभाकरैर्वारुणचतुष्कपालेष्टौ अश्वदानस्य 'योऽश्वं प्रतिगृह्णाति' इति कर्तृपरयच्छब्दयुक्तवाक्ये स्वरसप्रतीतया निमित्ततया केवलमन्वये क्रत्वर्थत्वं न सिध्यति, शेषतयाप्यन्वये वृत्तिद्वयविरोधः। न च एतदिष्टिविधायकवाक्यस्य अनारभ्याधीतत्वे अश्वदानस्य क्रत्वपूर्वार्थत्वप्रत्यायकं किंचिदस्ति, प्रकरणतः क्रत्वपूर्वविपरिवृत्त्यसंभवात्। वैदिकस्य वैदिकमेव निमित्तमिति नियमस्य क्षामवत्यादिषु व्यभिचारात् अश्वदानमात्रस्य निमित्तत्वं प्रतिपादयतो 'योऽश्वं प्रतिगृह्णाति' इति वाक्यस्य बुद्धिसंनिधानरूपस्थानप्रमाणेन संकोचायोगात्। न च अश्वदानस्य पर्णतावदव्यभिचरितक्रतुसंब-

T

न्धोऽस्ति। 'येऽश्वदाः सह ते सूर्येण' इत्यादिश्रुतिप्रतिपन्नानां सूर्यसायुज्यफलानां वैदिकानां मित्रादिभ्यः क्रियमाणानां लौकिकानामश्वदानानां बहुलमुपलम्भात् । तस्मात् लौकिक-वैदिकसाधारण्येन अश्वदानमात्रे निमित्ते पुरुषार्थतया इयमिष्टिरवश्यकर्तव्या सिध्येत् । न तु क्रत्वर्थतयेति 'दोषात्त्विष्टिर्लौकिके स्यात्....'— इत्यधिकरणोक्तक्रत्वर्थत्वनिर्वाहार्थम् इयमिष्टिः अश्वसहस्रदक्षिणावति पौण्डरीके श्रूयते इति कृत्वाचिन्तयेदमधिकरणमित्युक्तम् । यत् क्रत्वर्थव्यापत्तिनिमित्ततया विधीयते तदपि तद्व्यापत्तिप्रयुक्तक्रतुवैकल्य-समाधानार्थतया क्रत्वर्थं भवति—यथा 'भिन्ने जुहोति' इति पात्रभेदननिमित्ते विहितो होमः । न चेह तथा 'न हिंस्यात्' इति वाक्ये हिंसायाः क्रत्वर्थत्वापादकं प्रकरणमस्ति । न वा हिंसानिषेधे तस्याः शेषित्वेन तद्व्यापत्तेर्निमित्तत्वेन वा अन्वयोऽस्ति । तस्मात् प्रवृत्तिनिमित्तानुसाराल्लौकिकवैदिकसाधारण्येन हिंसामात्रस्य निषेधः क्रियत इति स्यात् यदि क्रत्वर्थपशुसंज्ञपनमपि हिंसा स्यात् । अतः तद्व्यावृत्तमेव हिंसापदप्रवृत्तिनिमित्तं वाच्यमिति ॥

अथ नवमी—

निषेध्यनिषेधयोः क्रत्वर्थपुरुषार्थत्वविषयैकरूप्ये अस्ति

T

तन्नियमः । अत एव दर्शपूर्णमासप्रकरणाम्नाते 'नानृतं वदेत्' इति वाक्ये प्रकरणबलात् निषेध्यनिषेधावुभावपि क्रत्वर्थौ ग्राह्याविति क्रतूपयोगिद्रव्यादिसंपादनार्थतया अर्थप्राप्तं क्रत्वर्थमेवानृतवदनं निषेध्यम्, तन्निषेधोऽपि क्रतोरङ्गं न पुरुषार्थः । तेन क्रत्वर्थानृतवदने तदङ्गभूतनिषेधातिक्रमात् क्रतोर्वैगुण्यम् । दर्शपूर्णमासमध्येऽपि पुरुषार्थानृतवदने 'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तस्य वैगुण्यं यथाचोदितसिद्धितः' इति न्यायात् क्रतोर्न वैगुण्यं किंतु पुरुषप्रत्यवायः इति निर्णीतं कर्त्रधिकरणे । 'मलवद्वाससा न संवदेत न सहासीत नास्या अन्नमद्यात्' इति दर्शपूर्णमासप्रकरण एव आम्नातेषु वाक्येषु निषेध्यानां निषेधानां च अनृतवदनतन्निषेधवत् प्रकरणबलात्क्रत्वर्थत्वमाशङ्क्य, 'यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुद्ध्य यजेत' इति मलवद्वाससः क्रतौ सर्वात्मना उदासीनीकरणरूपस्यापरोधस्य विहितत्वात् तया संवादसहासने न प्राप्नुतः; तदन्नादनं तु 'अथो खल्वाहुः अभ्यञ्जनं वाव स्त्रिया अन्नं अभ्यञ्जनमेव न प्रतिगृह्यम्' इति अभ्यञ्जनशब्दोक्तस्त्रीसंगमरूपतया व्याख्यातत्वात् कथमपि न प्राप्नोति— इति पुरुषार्थानामेव संवादादीनां निषेध्यत्वात् निषेधा अपि

पुरुषार्था इति निर्णीतम् 'प्रागपरोधान्मलवद्वाससः' इत्यधिकरणे । तथा 'यो ब्राह्मणायापगुरेत्तं शतेन यातयाद्यो निहनत्सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पांसून्संगृह्णात्तावतः संवत्सरान्पितृलोकं न प्राजानादिति तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यादेतावता हैनसायुक्तो भवति' इति दर्शपूर्णमासप्रकरण एव श्रुता निषेध्या निषेधाश्च प्रकरणात्क्रत्वर्था ग्राह्या इति दर्शपूर्णमासयोरार्त्विज्यार्थमन्वाहार्यमात्रेण ब्राह्मणानामनानतौ तदानमनेन क्रतुनिर्वृत्त्यर्थतया प्राप्तास्तेष्वायुधोद्यमनादिरूपा अपगोरणादयो निषेध्याः तन्निषेधाश्च दर्शपूर्णमासयोरङ्गभूता इति पूर्वपक्षं कृत्वा, स्ववाक्ये एव अपगोरणादिनिषेधानां शतयातनादिपरिहारार्थत्वप्रतीतेः स्ववाक्यगतेन फलेन फलवत्त्वसंभवे प्रकरणालोचनालभ्यक्रतूपकारफलकल्पनानौचित्यात् प्रकरणादुत्कृष्टैरेतैर्वाक्यैः पुरुषार्थानामपगोरणादीनां पुरुषार्था एव निषेधाः क्रियन्ते इति सिद्धान्तितम् 'शंयौ सर्वपरीदानात्' इत्यधिकरणे । एवं सर्वत्र निषेध्यनिषेधयोः क्रत्वर्थपुरुषार्थविषयैकरूप्यानियमो दृश्यते । एवं च 'न हिंस्यात्' इति निषेधस्य क्रत्वर्थपुरुषार्थोभयविधहिंसानिषेधरूपत्वे स्वयमप्ययं क्रत्वर्थपुरुषार्थो-

T

भयरूपो भवन् स्वस्य क्रतुपुरुषसंबन्धबोधनार्थं वाक्यं भिन्द्यादिति तत्परिहारार्थं शीघ्रप्रतीतपुरुषार्थहिंसामात्रस्यैव निषेध्यत्वमङ्गीकरणीयमिति ॥

अथ दशमी—

असिद्धोऽयं निषेध्यनिषेधयोरुक्तप्रकारैकरूप्यनियमः ; ज्योतिष्टोमप्रकरणे 'न ददाति न जुहोति न पचति' इत्याम्नातानां पुरुषार्थदानहोमपाकप्रतिषेधानां क्रत्वर्थत्वस्य दशमाध्याये व्यवस्थापितत्वात् । तत्तत्कर्मविशेषप्रकरणाम्नातानां स्त्र्युपगमनमांसभक्षणादिरूपपुरुषार्थनिषेधानाम् 'स्त्र्युपायमांसभक्षादि पुरुषार्थमपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात्' इति व्याकरणाधिकरणे वार्तिककृता उक्तत्वाच्च । तद्वत् क्रत्वर्थप्रतियोगिकनिषेधस्यापि पुरुषार्थत्वं संभवतीति क्रत्वर्थसंज्ञपनस्य पुरुषार्थनिषेधाविषयत्वसिद्ध्यर्थं तद्व्यावृत्तमेव हिंसापदप्रवृत्तिनिमित्तं वाच्यमिति ॥

अथैकादशी—

निषेध्यनिषेधयोः क्रत्वर्थत्वपुरुषार्थत्वविषयवैरूप्ये बुद्धिगौरवात्, लाघवानुरोधेन पुरुषार्थस्य निषेधः पुरुषार्थः, क्रत्वर्थस्य निषेधः क्रत्वर्थः—इति तदैकरूप्यनियमस्तावदौत्सर्गिकः। एवं क्लृप्तस्योत्सर्गस्य बाधकवति स्थले त्यागेऽपि अन्यत्र त्यागो

T

न युज्यते । द्वितीयनियमस्य क्वचिद्बाधकोपनिपातेन त्यागोऽपि न दृश्यते । एवं च अहिंसाशास्त्रेण पुरुषार्थहिंसायाः पुरुषार्थो निषेधः क्रियत इति अनारभ्याधीततया संप्रतिपन्नेऽर्थे स्थिते, तेन क्रत्वर्थहिंसाया अपि निषेधः क्रियत इत्यभ्युपगमे, तन्निषेधोऽपि क्रत्वर्थः स्यादिति वाक्यवैरूप्यपरिहारार्थं क्रत्वर्थपुरुषार्थान्यतरहिंसानिषेध एव वाक्यार्थ इत्यङ्गीकर्तव्यं, शीघ्रोपस्थितपुरुषार्थनिषेध एव वाक्यार्थः पर्यवस्यति—इति अतिप्रसङ्गाभावात् न क्रत्वर्थहिंसाव्यावृत्तं हिंसिधातुप्रवृत्तिनिमित्तं वाच्यमिति ॥

अथ द्वादशी—

आद्यनियमः कथंचिदौत्सर्गिको वाप्युत्प्रेक्षितुं शक्यः । द्वितीयनियमस्तु औत्सर्गिकोऽप्यसिद्धः । दूरे तस्याव्यभिचरितत्वम् , तद्विरुद्धस्य पुरुषार्थनिषेधानां क्रत्वर्थकरम्बितप्रतियोगितानियमस्य औत्सर्गिकस्य अवश्याभ्युपगन्तव्यत्वात् । न च तदसिद्धिः, अपगोरणादिनिषेधानां पुरुषार्थानां निषेध्यकोटौ क्रत्वर्थानामपि अपगोरणादीनामनुप्रवेशावश्यंभावात् । अन्यथा अनृतवदनवत् क्रत्वर्थतया प्रसक्तानामपगोरणादीनां पुरुषार्थनिषेधे निषेध्यकोटावनुप्रवेशानङ्गीकारे क्रतुनिर्वृत्त्यर्थं ब्राह्मणापगोरणादिषु स्वाच्छन्द्यप्रसङ्गात् । तस्मात्

क्रत्वर्थत्वेन पुरुषार्थत्वेन वा यावन्तोऽपगोरणादयः प्रसक्ताः, तेषां सर्वेषां पुरुषार्थतया निषेधः 'तस्माद्ब्राह्मणाय नापगुरेत' इत्यादिवाक्यैः क्रियते— इत्येवं शंय्वधिकरणार्थनिर्णय आस्थेयः । अत एव 'सर्वपरीदानात्' इति सौत्रो हेतुः सर्वेषां सर्वावस्थागतानामपि अपगोरणादीनां प्रतिषेधात्— इति भाष्यकारेण व्याख्यातः । एवम् 'प्रागपरोधान्मलवद्वाससः' इत्यधिकरणे पुरुषार्थतया निर्णीते मलवद्वासःसंवादनिषेधे पत्न्यादिसंवादोऽपि तत्क्रतूपयोगिद्रव्यनिधानस्थलादिपरिज्ञानोपायतया क्रत्वर्थत्वेन प्राप्तस्यैव मलवद्वाससा पत्न्या अन्यया वा सह संवादस्य निषेध्यकोटावनुप्रवेशो वाच्यः; अन्यथा तस्य अनृतवदनस्येव क्रत्वर्थनिषेधाभावात् पुरुषार्थनिषेधेनापि तदसंस्पर्शे कदाचित् क्रत्वर्थतया तदनुष्ठानापत्तेः । अनेनैव न्यायेन पुरुषार्थेषु हिंसानिषेधादिषु क्रतूपयोगिद्रव्यसंपादनादिप्रतिबन्धकप्राणिवधादीनामपि निषेध्यकोटावनुप्रवेशो वाच्यः, तथैव क्रत्वर्थत्वाविशेषात् । पशुसंज्ञपनस्य हिंसात्वे तस्यापि निषेध्यकोटावनुप्रवेशः स्यात् । अतः तद्व्यावृत्तमेव हिंसिधातुप्रवृत्तिनिमित्तं वाच्यमिति ॥

अथ त्रयोदशी—

क्रतुनिर्वृत्त्यर्थमनुष्ठेयत्वेनापतद्द्विविधमस्ति । एकं लोकतः

T

प्राप्तमनियतोपायरूपं विध्यसंस्पर्शात् क्रतोरनङ्गं केवलं तदु- पकारकं क्रतूपयोगिद्रव्यादिराहित्यावस्थाविशिष्टस्य पुरुष- स्यैव शेषभूतम्— यथा द्रव्यसंपादनाद्यर्थमनृतवदनमलव- द्वास:संवादादि । अन्यद्वैदिकं विधिसंस्पृष्टं क्रत्वङ्गभूतम्— यथा पशुसंज्ञपनादि । तत्र आद्यं पुरुषार्थनिषेधेषु निषेध्य- कोटावनुप्रविशति; स्वयमपि पुरुषार्थत्वात्, अनृतवादादिकं विना द्रव्यसंपादनादिषु उपायान्तरसद्भावाच्च । द्वितीयं तु न प्रविशति, क्रत्वङ्गतया विहितस्य नियतोपायस्य त्यागे विधिविरोधापत्तेः; क्रतोरनिर्वृत्तिप्रसङ्गाच्च । ननु अनृतवद- नस्य क्रत्वङ्गस्यैव निषेधः कर्त्रधिकरणेऽङ्गीकृतः । एवं हि तत्र अनृतवदननिषेधोदाहरणभाष्यम्— व्रीहिमयं संकल्प्य न यवमयः कार्य इति । व्रीहिद्रव्यकेण पूर्णमासेन दर्शेन वा यक्ष्ये–इति संकल्पाभिवदनं क्रत्वङ्गम्; सत्यं उदाहृतसंकल्पा- भिवदनमात्रं क्रत्वङ्गम्; न तु व्रीह्यलाभे यवमुपादाय तद- भिवदनस्य अनृतरूपत्वापादनमपि । तस्यैव क्रत्वङ्गस्य नि- षेधः । तेन संकल्पितव्रीह्यलाभे प्रतिनिधिमुपादाय संकल्पवैत- थ्यपरिहारेण क्रतुं निर्वर्तयेदिति पर्यवस्यति । तथापि मलव- द्वासोऽधिकरणे क्रत्वर्थस्यैव पत्नीसंवादस्य निषेधः पूर्वपक्षे सि- द्धान्ते वा अङ्गीकृतः । स तु मलवद्वास:संवादनिषेधः 'त-

T

स्मान्मलवद्वाससा न संवदेत' इति दर्शपूर्णमासप्रकरणगतवाक्यार्थः पूर्वपक्षे। सिद्धान्ते तु 'यस्य व्रत्येऽहन्' इति वाक्यान्तरार्थः। 'न संवदेत' इति वाक्यं तु पुरुषार्थनिषेधपरमित्येतावान्विशेषः। सत्यं तत्र वचनबलाद्रजोदिवसेषु क्रत्वङ्गपत्नीसंवादादित्यागेऽपि नास्ति तद्विधिविरोधः, शुद्धिसमयेषु चारितार्थ्यात्। क्रतुसाद्गुण्यं च वचनबलात्। क्वचित् पत्नीसंवादाद्यनपेक्षयैव। इह तु पशुसंज्ञपनस्य पुरुषार्थनिषेधाभ्युपगमे निर्विषयतया तद्विधिविरोधः, हृदयाद्यवदानराहित्येन क्रतोरनिर्वृत्तिश्च— इत्यपरिहार्यमुभयम्। ननु इहापि नैतद्दोषद्वयमापतति। तथाहि— न तावद्विधिनिषेधयोर्विरोधोऽस्ति, विधिना कर्त्रिष्टसाधनत्वस्य निषेधेन तदनिष्टसाधनत्वस्य च बोधयितुं शक्यत्वात्। न च एकस्य इष्टानिष्टोभयसाधनत्वं विरुद्धम्, घृतपानादेः पुष्ट्यादिमेहादिरूपेष्टानिष्टसाधनत्वस्य, यागादेः स्वर्गादितात्कालिकक्लेशादिरूपेष्टानिष्टसाधनत्वस्य च दर्शनादिति चेत्। मैवम्; तथा सति 'न हिंस्यात्' इति शास्त्रस्य क्रत्वर्थपशुहिंसांशे अननुष्ठापकत्वलक्षणाप्रामाण्यप्रसङ्गात्। 'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते' इत्युक्तरीत्या विधीनां प्रवर्तकत्वेनैव निषेधानां निवर्तकत्वेनैव

T

शास्त्रत्वस्य समर्थनीयत्वात् । न च पशुहिंसा क्रतुनिर्वृत्त्यर्थं कार्या प्रत्यवायपरिहारार्थं च वर्जनीया वा—इति विकल्पापादकतया पाक्षिकनिवर्तकत्वं संभवतीति वाच्यम्; तथा सति तदंशे पाक्षिकनिषेधबोधकत्वम् अंशान्तरे नित्यनिषेधबोधकत्वमिति वैरूप्यदोषस्य वैधहिंसाननुष्ठानपक्षे क्रत्वनिर्वृत्तिदोषस्य च अनिवार्यत्वात् । किं च हिंसानिषेधशास्त्रस्य क्रत्वर्थसंज्ञपनसाधारण्ये विधिनिषेधशास्त्रयोर्बोध्यविरोधोऽप्यापद्येत । तथा हि— इष्टसाधनत्वमात्रं न प्रवृत्त्यौपयिकम, मधुविषसंपृक्तान्नभोजनादिसाधारण्यात्; किं तु बलवदिष्टसाधनत्वम्; बलवत्त्वं च इष्टोपायानुष्ठानप्रयुक्तात्सर्वविधादनिष्टात उद्देश्यस्य तत्साध्यस्येष्टस्य अधिकत्वम् । तच्च सार्थवादेषु विधिषु यागाद्यनुष्ठानप्रयुक्ततात्कालिकक्लेशादिदर्शनकृतालस्यभञ्जनार्थं प्रवृत्तैः स्तुत्यर्थवादैः स्तुतिरूपेण समर्प्यते । निरर्थवादेषु विधेरेव तदाक्षेपे शक्तिः कल्प्यते । तथा अनिष्टसाधनत्वमात्रं न निवृत्त्यौपयिकम्, तात्कालिकक्लेशादिकराम्नितयागादिसाधारण्यात्; किं तु बलवदनिष्टसाधनत्वम्; अत्र बलवत्त्वम् इष्टोपायानुष्ठानसाध्यादुद्देश्यादिष्टात् तदनुष्ठानप्रयुक्तस्यानिष्टस्य अधिकत्वम् । तत् सार्थवादेषु निषेधेषु तात्कालिकेष्टरुचिप्रयुक्तप्रवृत्तिप्रतिबन्धार्थं निन्दार्थवादैः निन्दारूपेण स-

T

मर्प्यते । निरर्थवादेषु निषेधानामेव तदाक्षेपे शक्तिः कल्प्यते— इति वस्तुस्थितिः । एवं च क्रत्वर्थसंज्ञपनस्य निषेधविषयत्वे विधिनिषेधयोः परस्पराधिकेष्टानिष्टसाधनत्वबोधकताविरोधोऽपि अनिवार्यः । तस्मात् क्रत्वर्थसंज्ञपनस्य हिंसात्वेऽपि उक्तदोषत्रयभिया पुरुषार्थनिषेधो न स्पृशति । ततश्च क्रत्वङ्गनिषेधः क्रत्वङ्गमिति नियमे बलेन स्थिते, वाक्यवैरूप्यभिया षोडशिग्रहनिषेधन्यायप्राप्तः क्रत्वर्थोऽपि निषेधः न स्पृशति— इति न तद्व्यावृत्तहिंसिधातुप्रवृत्तिनिमित्तकल्पनाक्लेशोऽनुभाव्य इति ॥

अथ चतुर्दशी—

निषेधवाक्यानां निवर्तकत्वेनैव शास्त्रत्वमिति नायं नियमः, अस्यैव हिंसानिषेधशास्त्रस्य पञ्चसूनानान्तरीयकहिंसानिवर्तकत्वाभावात् । अतः— यथा अस्य तदंशे 'पञ्चसूना गृहस्थस्य चुल्ली पेषण्यवस्करः । खण्डनी तोयकुम्भश्च वध्यते याम्तु वाहयन । आसां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः । पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्' इति स्मृत्युक्ततदपनोदकपञ्चमहायज्ञप्रवर्तकत्वेन शास्त्रत्वम्— एवं वैधपशुसंज्ञपनांशेऽपि तत्तत्प्राणिवधोपदिष्टप्रायश्चित्तप्रवर्तकत्वेन शास्त्रत्वं निर्व्यूढं भवेत्,

T

यदि तस्य हिंसात्वमभ्युपगम्येत । अतो न तावत् तस्
हिंसात्वे तद्विधिनिषेधयोः प्रवर्तकत्वनिवर्तकत्वविरोधः । अ
एव न क्रत्वनिर्वृत्तिदोषप्रसङ्गोऽपि, निषेधस्य क्रतुसंज्ञपनां
निवर्तकत्वाभावात् । नापि तयोर्बोध्यविरोधः, यतः निषे
स्यौपयिकेऽनिष्टसाधनत्वे अनुप्रविष्टं बलवदनिष्टं बहुविधम्
एकमिष्टापेक्षया अधिकम् इष्टप्राप्तेः पूर्वमवश्यंभावि, अन्य
गुरुलघूपायद्वयसाध्ये फले गुरूपायानुष्ठानप्रयुक्तक्लेशादिरू
इष्टप्राप्तेः पूर्वं गुरूपायानुष्ठाने अवश्यंभावि, अपर
इष्टापेक्षयाधिकमिष्टप्राप्त्यनन्तरभावि इष्टोपायादधिकक्लेशादि
साध्येन उपायेन परिहर्तव्यम्, इतरत् इष्टप्राप्त्यनन्तरभा
इष्टापेक्षया न्यूनम् इष्टप्राप्त्युपायाल्लघुनोपायेन परिहर्तुं शक्य
म् । एतत्सर्वम् अनुष्ठातृपुरुषाननुमतत्वेन—अङ्गीकृता ग्लानि
न दोषाय—इति न्यायाविषयतया जिहासितत्वात् बलवदनि
ष्टमुच्यते । यदिष्टप्राप्तेः पूर्वभावि इष्टापेक्षया अल्पतरम्
यत् इष्टप्राप्त्यनन्तरभावि अल्पतरत्वेन सह्यतया अनुमतम्
तदुभयं न बलवदनिष्टम्; बुभुक्षोः पूर्वभाविपाकादिक्लेशानु
संधानेऽपि अनन्तरभाविस्वैरसंचारविरोधिश्रान्त्याद्यनुसं
धानेऽपि तदुभयानुमत्या पाकप्रभृति यावदिष्टभोजनान्तं
व्यापारे प्रवृत्तिदर्शनात् । बलवदनिष्टत्वाद्यं त्रयं निवृत्ति

T

प्रयोजकम् ; न तु चतुर्थम ; तत्तु स्वपरिहारोपाये प्रवृत्तिप्रयोजकम्—न खलु मूषकग्रहणार्थं गिरिखनने, निर्बाधलघुमार्गवतः पुरादेः प्राप्त्यर्थं सबाधगुरुमार्गगमने, तृप्त्यर्थं च मरणपर्यवसायिनि मधुविषसंपृक्तान्नभोजने वा कश्चित् प्रवर्तते । प्रवर्तते अतिरुच्यान्नोपस्थितौ किंचिदधिकभोजने, तत्प्रयुक्तमजीर्णादिकं लघुना प्रतिविधानौषधेन समाधास्यामि—इति । एवं च निषेधवाक्यैः निषेध्यस्य अनिष्टसाधनत्वे बोध्यमाने यस्य निषेध्यस्य अनुष्ठाने प्रसक्तस्यानिष्टस्य यथाभूतं बलवत्त्वम्, तथाभूतमेव तत्तदनुष्ठाने तन्निन्दार्थवादैर्लक्षणया समर्प्यते, निषेधैरेव वा आक्षिप्यते—इति हिंसानिषेधवाक्येन सर्वासामपि हिंसानामनिष्टसाधनत्वे बोध्यमाने, तदर्थवादः तन्मूलाक्षेपो वा क्रतुसंज्ञपनांशे तद्विध्यविरोधाय तत्कृतानिष्टस्य चतुर्थप्रकार एव बलवत्त्वे पर्यवस्येत् । न हि इष्टस्य अनिष्टस्य वा बलवत्त्वमेकरूपमेव बोधनीयमिति नियन्तुं शक्यते । श्येनादिविधीनां शत्रुमारणादिप्रयुक्तभाविनरकरूपाधिकानिष्टावश्यंभावेन तदविरोधाय श्येनाद्यनुष्ठानकृतात्सर्वस्मादनिष्टात् आधिक्यरूपमर्थं परित्यज्य अनुष्ठानक्लेशादिमात्रात् इष्टस्याधिक्ये पर्यवसानस्य वक्तव्यत्वात् । अतः क्रत्वर्थसंज्ञपनस्य हिंसात्वेन तन्निषेधातिक्रमप्रयुक्तदुरितानु-

T

बन्धित्वस्य अपरिहार्यत्वात्, तस्य तदननुबन्धित्वमिच्छद्भिः भगवद्बादरायणमतानुसारिभिः तद्व्यावृत्तमेव हिंसिधातुप्रवृत्तिनिमित्तं कल्पनीयमिति ॥

अथ पञ्चदशी—

निषेधशास्त्राणां निवर्तकत्वं तावदौत्सर्गिकम्। तदबुद्धिपूर्वकात्प्रमादिकान्निवर्तनस्याशक्यत्वात् तदंशे तेषां निवर्तकत्वं परित्यज्य प्रायश्चित्ते प्रवर्तकत्वमाश्रीयते। बुद्धिपूर्वकं तु तस्मिन्निवर्तकत्वमप्यभ्युपगन्तव्यम्। अत एव खण्डिन्यादिषु चक्षुषा प्राणिवधप्रसक्तिदर्शने पञ्चमहायज्ञानुष्ठानावश्यंभावनिश्चयेऽपि बुद्धिपूर्वकतद्वधान्निवृत्तिः। अतः क्रतुसंज्ञपनस्य बुद्धिपूर्वकप्राणिवधत्वात् ततो निवर्तकत्वमपि निषेधशास्त्रस्यावश्यमाश्रयणीयम्। तदा प्रागुक्तदोषत्रयमापतेदिति तत्परिहारार्थं तस्य हिंसात्वेऽपि न तन्निषेधवाक्यं स्पृशति— इति युक्तम्। न च दोषत्रयपरिहारार्थमिहापि निवर्तकत्वोत्सर्ग एव त्यज्यतामिति वाच्यम्; निषेधास्पर्शेन तत्परिहारे संभवति क्लृप्तोत्सर्गत्यागायोगादिति ॥

अथ षोडशी—

बुद्धिपूर्वकनिषेधानुष्ठानेऽपि निषिद्धस्य विधिस्पर्शे निषेधशास्त्रस्य न निवर्तकत्वम्; किं तु प्रायश्चित्ते प्रवर्तकत्वमा-

T

त्रम्— इति क्लृप्तं वर्णिवधपरिहारार्थसाक्ष्यनृतवदनमपि विषयीकृत्य प्रवृत्तं पुरुषार्थानृतवदननिषेधशास्त्रे— तद्धि शास्त्रं ततो न निवर्तकम्; किं तु केवलम् 'वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् । तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः' इति स्मृत्युक्तप्रायश्चित्ते प्रवर्तकम् । न च तदनृतवदनम् अविहितत्वान्न निषिद्धम्, सारस्वतचरुरपि नैमित्तिकः न तत्प्रायश्चित्तरूप इति शङ्कनीयम्; तस्यानृतवदनस्य पुरुषार्थत्वे 'नानृतं वदेत्' इति पुरुषार्थनिषेधगोचरत्वावश्यंभावात् । त्वयापि हि वैधहिंसाया न विहितत्वान्निषेधागोचरत्वमुच्यते; किंतु वाक्यवैरूप्यक्रत्वनिर्वृत्तिप्रसङ्गभयात् । न च इह तदुभयप्रसङ्गोऽस्ति । सारस्वतचरुरपि तत्प्रायश्चित्तरूप एव, 'तत्पावनाय' इति पापनिवृत्तिफलसंकीर्तनात् । तथा च क्रत्वर्थसंज्ञपनस्य हिंसात्वे हिंसानिषेधशास्त्रस्य तदंशे अनृतवदननिषेधशास्त्रस्य वर्णिवधपरिहारार्थानृतवदनांश इव निवर्तकत्वाभावेऽपि तदपनोदकप्रायश्चित्ते प्रवर्तकत्वमात्रेण शास्त्रत्वं चरितार्थं भवेत् । अतस्तदनुष्ठाने प्रायश्चित्ताभावमिच्छद्भिः तद्व्यावृत्तमेव हिंसिधातुप्रवृत्तिनिमित्तं वाच्यम् । तेन क्लृप्तस्य निवर्तकत्वोत्सर्गस्य त्यागो न युक्त इति शङ्कापि निरस्ता; बुद्धिपूर्वकानृत-

T

वदननिषेधातिक्रमे तत्त्यागस्यापि क्लृप्तत्वात् निषेधशास्त्राणां निषेध्यसमर्पकशब्दसमर्पितयावदर्थनिषेधबोधकत्वमपि औत्सर्गिकमिति क्रतुसंज्ञपनस्य हिंसात्वमभ्युपगम्य निषेधसंस्पर्शानभ्युपगमे तस्योत्सर्गस्य त्यक्तव्यतया क्लृप्तोत्सर्गत्यागस्य तन्मतेऽपि समानत्वात्। न च निवर्तनस्य निषेधबोधनफलतया शेषित्वेन शेषशेष्यन्यतरोत्सर्गत्यागप्रसक्तौ शेषोत्सर्गत्यागो युक्त इति वाच्यम्; निवर्तनस्य निषेधबोधाधीनतया प्राथमिकेन निषेधबोधेन सर्वहिंसाक्रमणे सति, तदनुसारेण निवर्तनोत्सर्गत्यागस्यैव युक्ततरत्वात्। प्राधान्यबलात्प्राथम्यबलाधिक्यस्य 'असंजातविरोधित्वादर्थवादो यथाश्रुतः। व्याख्येयस्तद्विरुद्धस्य विध्युद्देशस्य लक्षणा' इत्युपक्रमाधिकरणन्यायसिद्धत्वेन प्रधानाश्रयणबलात्प्राथम्यबलाधिक्यस्य कैमुतिकन्यायप्राप्तत्वादिति ॥

अथ सप्तदशी—

निषेधशास्त्राणां निषेध्यपरशब्दप्रतिपाद्ययावदर्थनिषेधबोधकत्वरूपस्योत्सर्गस्य हिंसानिषेधशास्त्र एव त्याग आवश्यकः। अन्यथा सर्वस्वारकत्वङ्गात्मव्यापादने मरणान्तप्रायश्चित्ते च प्रवृत्त्यभावप्रसङ्गात्। न हि आत्मव्यापादनप्रयुक्तं नरकदुःखम् 'सुरापस्य ब्राह्मणस्योष्णामासिञ्चेयुः सुरा-

T

सास्ये मृतः शुद्ध्यति' इति शास्त्रविहितकामकृतसुरापान-प्रायश्चित्तसुरापात्महननरूपब्रह्महत्त्योभयप्रयुक्तनरकदुःखं वा अल्पीयः। येन उभयमभ्यनुज्ञायैव ज्योतिष्टोमतुल्यरूपसर्वस्वाराख्यैकाहक्रतुसाध्यस्वर्गार्थं तदीयार्भवपवमानकालकर्तव्ये स्वव्यापादने पूर्वकृतसुरापानप्रयुक्तनरकानुत्पत्त्यर्थं उक्तमरणान्तप्रायश्चित्ते वा कश्चित्प्रवर्तेत। न वा उक्तस्वव्यापादनादिजन्यं दुरितं लघुना उपायेन निवर्तयितुं शक्यम्। न वा मृतेन पश्चात् तदुभयनिवर्तनोपायभूतं लघु गुरु वा किंचिदनुष्ठातुं शक्यम्; येन कयाचित्प्रायश्चित्त-क्रियया स्वव्यापादनादिजनितदुरितमपनेष्यामि इति तद-लक्षीकृत्य तस्मिन्नुभयस्मिन्पुरुषः प्रवर्तेत; तदनुसारेण हिंसासुरापाननिषेधशास्त्रयोस्तदंशे निवर्तकत्वोत्सर्गं परि-त्यज्य तत्प्रायश्चित्ते प्रवर्तकत्वमात्रं परिगृह्य श्रुतनिषेध्यप-रशब्दप्रतिपाद्ययावदर्थनिषेधबोधकत्वोत्सर्गः परिपाल्येत। तस्मात्तदंशे हिंसानिषेधशास्त्रस्य वर्णितोत्सर्गत्याग आव-श्यकः। एवमाहवाभिमुखशत्रुवधादिषु प्रवृत्त्यर्थमपि त-त्त्याग आवश्यकः। 'न दोषो हिंसायामाहवे' इत्यादि-शास्त्रेष्वाहत्य दोषाभावस्मरणात्। तस्माद्धिंसानिषेधशास्त्र एव केषुचिदंशेषु प्रथमोत्सर्गत्यागस्य क्लृप्तत्वात् क्रत्वर्थ-

संज्ञपनरूपांशान्तरेऽपि तस्यैव त्याग उचितः । न तु
तमपरित्यज्य निवर्तकत्वोत्सर्गपरित्यागः । एवं मरणान्तप्रा-
यश्चित्तादिवत् पुरुषार्थनिषेधकोटेर्बहिर्भूतामपि क्रत्वर्थहिं-
सां पुनः क्रत्वर्थनिषेधप्रतियोगित्वेन गृहीत्वा प्राथमिकोत्स-
र्गस्य सर्वात्मना त्यागो न भवतीति लोभात् क्रत्वर्थहिंसानि-
षेधस्यापि अहिंसावाक्यार्थत्वस्वीकारे प्रागुक्तवैरूप्याद्यापत्तिः
तस्मात्क्रत्वर्थसंज्ञपनस्य हिंसात्वेऽपि न्यायतो हिंसानिषेधशा-
स्त्रस्य ततो व्यावृत्तेः न तद्व्यावृत्तं हिंसिधातुप्रवृत्तिनिमित्तं
वाच्यमिति ॥

अथाष्टादशी—

'न हिंस्यात्' इति पुरुषार्थहिंसानिषेधे हिंसामात्रस्य
प्रथमं निषेध्यत्वप्रतीतौ यत्र मरणान्तप्रायश्चित्तादौ निषेधशा-
स्त्रस्य निवर्तकत्वेन प्रायश्चित्तप्रवर्तकत्वेन वा चारितार्थ्यं
नास्ति, तन्मात्रस्य बाधकवशान्निषेध्यत्वत्यागेऽपि दृष्टान्तस-
त्त्वमात्रेण क्रत्वर्थहिंसांशस्यापि तत्त्यागो न युक्तः। तत्र प्राय-
श्चित्तप्रवर्तकत्वेनापि निषेधचारितार्थ्यात् । न हि सामान्य-
तः प्राप्तानां मध्ये कस्यचिद्बाधकवशात् त्यागे सति तद्दृष्टान्ते-
न अन्यस्यापि त्यागो युक्तः। तथा सति आग्रयणदक्षिणारूपे
वत्से चोदकप्राप्तानामन्वाहार्यधर्माणां मध्ये पाकस्य दक्षिणा-

रूपवत्सनाशप्रसङ्गात् तत्त्यागे सति तद्दृष्टान्तेन तथाभूतबाधकराहितस्य अन्यस्यापि तद्धर्मस्य त्यागप्रसङ्गः । तस्मात्क्रत्वर्थहिंसाया अपि पुरुषार्थनिषेधः प्राप्नोतीति तमनङ्गीकुर्वद्भिः तत्परिहाराय तद्व्यावृत्तं हिंसिधातुप्रवृत्तिनिमित्तं वाच्यमिति ॥

अथैकोनविंशतितमी—

न दृष्टान्तसद्भावमात्रेण क्रत्वर्थहिंसायाः पुरुषार्थनिषेधे निषेध्यकोटिबहिर्भाव उच्यते; किं तु मरणान्तप्रायश्चित्तादिव्यावर्तकविशेषणक्रोडीकृतत्वेन । तथा हि—मरणान्तप्रायश्चित्तं सर्वस्वारक्रत्वङ्गस्वात्मव्यापादनम् आहवाभिमुखशत्रुहननम् उचितदण्डरूपगोचोरहननं स्तेयप्रायश्चित्तरूपस्तेनहननम्— इति बहूनि हननानि पुरुषार्थहिंसानिषेधे निषेध्यकोटेर्व्यावर्तनीयानि । तावद्व्यावर्तनार्थं तद्व्यतिरिक्तत्वरूपबहुविशेषणोपादाने गौरवम्; एकेन रूपेण सर्वं व्यावर्तनीयहिंसाजातं क्रोडीकृत्य तद्व्यतिरिक्तत्वरूपैकविशेषणोपादाने लाघवमिति तथा तावत्क्रोडीकारकरूपसंभवे तत्क्रोडीकृतव्यतिरिक्तत्वमेव पुरुषार्थहिंसानिषेधप्रतियोगिकोटौ निवेशयितुमुचितम् । संभवति च अत्र तथाभूतं रूपं वध्यानुग्रहपर्यवसायित्वम् । अनुगतं हि तत् सर्वत्र; मरणान्तप्रायश्चित्त-

*V. 5

स्य महापातकनिवर्तकत्वात्, सर्वस्वारे स्वात्मव्यापादनस्य तत्साध्यस्वर्गार्थत्वात्, आहवाभिमुखचोरस्तेनहतानामपि 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्ब्रह्मनिष्ठश्च रणे चाभिमुखो हतः' 'राजभिः कृतदण्डास्तु त्यक्त्वा पापानि मानवाः । निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा' 'स्तेनः प्रकीर्णकेशो मुसली राजानमियात्कर्माचक्षाणः पूतो वधमोक्षाभ्यामघ्नन्नेनस्वी राजा' इत्यादिस्मृत्यनुसारेण वध्येष्टसाधनत्वात् । तेन च रूपेण क्रत्वर्थहिंसापि क्रोडीक्रियत एव । यदि 'आततायिनमायान्तमपि वेदान्तपारगम् । निहत्य भ्रूणहा न स्यादहन्ता भ्रूणहा भवेत्' इति स्मृतिविहितमाततायिब्राह्मणहननम् 'आदित्यां मह्लां गर्भिणीमालभेत' इति श्रुतिविहितगर्भिणीहननान्तरीयकं गर्भहननं च न तेन क्रोडीक्रियत इत्यपरितोषः, तदा तेषामनुपदिष्टवैशेषिकप्रायश्चित्तत्वे सति विध्यनुज्ञातत्वं क्रोडीकारकमस्तु । तथा च उक्तधर्मक्रोडीकृतव्यतिरिक्तरूपपुरुषार्थनिषेधप्रतियोगिहिंसाविशेषणविवक्षावशात् मरणान्तप्रायश्चित्तादिवत्क्रत्वर्थहिंसापि पुरुषार्थनिषेधप्रतियोगिकोटेर्व्यावर्तिता भवति । पुनः क्रत्वर्थहिंसाया अपि क्रत्वर्थनिषेधो निषेधशास्त्रस्यार्थ इति स्वीकारे प्रागुक्तवैह

प्यादिदोषापत्तिः । एवं न्यायत एव क्रत्वर्थहिंसाया निषेधाविषयत्वसमर्थनसंभवात् न तद्व्यावृत्तं हिंसिधातुप्रवृत्तिनिमित्तं वाच्यमिति ॥

अथ विंशतितमी—

मरणान्तप्रायश्चित्तादिकं हिंसानिषेधाद्व्यावर्तनीयमिति तावदविवादम् । तत् प्रथममेव हिंसिधातुप्रवृत्तिनिमित्तसंकोचनेन वा पश्चाद्बाधकोपनिपातेन वा— इति विचारणायाम्, आद्यपक्षे हिंसानिषेधवाक्यार्थप्रथमप्रतीतावेव तद्व्यावर्तनं लभ्यत इति लाघवं भवति; द्वितीयपक्षे तु प्रथमं मारणमात्रनिषेधप्रतीतौ मरणान्तप्रायश्चित्तादिबहुविधहिंसाविधिवाक्यविरोधस्फूर्त्यनन्तरं तन्निरासाय क्लृप्तमुत्सर्गं परित्यज्य मरणान्तप्रायश्चित्तादिव्यावर्तकविशेषणं निषेध्यकोटौ निवेश्य पूर्वप्रतीतमुपमृद्य अहिंसावाक्यार्थप्रतीत्यन्तरं संपादनीयमिति गौरवं स्यात्— इत्यतो लाघवानुसारात्, 'न वा उवे तन्म्रियसे नरिष्यसि' इति संज्ञपनीयस्य पशोरहिंस्यत्वप्रतिपादकमन्त्रस्वारस्यानुसाराच्च प्रवृत्तिनिमित्तसंकोचपक्ष एव न्याय्य इति ॥

अथैकविंशतितमी—

अहिंसावाक्यार्थप्रतीतिलाघवानुसरणं तावदयुक्तम्; तद्धु-

पजीव्यहिंसिधातुशक्तिग्रहकाले लाघवेन मरणान्तप्रायश्चित्तादिव्यावर्तकविशेषणरहितस्य तत्प्रवृत्तिनिमित्तत्वावधारणे सति तदनुसारेण अहिंसावाक्यार्थनिर्णयविलम्बरूपस्य गौरवस्य फलमुखत्वेन अदोषत्वात्। अन्यथा वाक्यार्थनिर्णयविलम्बरूपगौरवपरिहारार्थमिह प्रवृत्तिनिमित्तसंकोचकल्पनेन क्रत्वर्थसंज्ञपनं न हिंसा— इत्यभ्युपगमे, सौत्रामण्यां वर्णत्रयेऽपि निषिद्धस्पर्शाघ्राणादिकायाः पैष्ट्याः सुरायाः ग्रहणं न ग्रहणं पानं न पानम्, अश्वमेधे राजानुज्ञया अश्वसंरक्षकैः क्रियमाणम् अश्वमेधविषयमन्त्रब्राह्मणकल्पादिवेदिनां ब्राह्मणानामब्राह्मणानां च अभ्यवहार्यस्य आच्छिद्य हरणं न परस्वहरणम्, वामदेव्योपासकस्य प्रार्थयमानसर्वयोषिदपहरणं न तत्संगतिः— इत्यपि तन्निषेधवाक्यार्थप्रतीतिलाघवार्थमभ्युपगमप्रसङ्गात्। तस्मात् यथा 'यदाहवनीये जुहोति' इत्याहवनीयरूपहोमाधिकरणविधिवाक्ये जुहोतिधातोः 'अश्वस्य पदे पदे जुहोति' इति 'आवृश्चने जुहोति' इत्यादिवाक्यनिर्ज्ञाताधिकरणान्तरविशिष्टहोमातिरिक्तहोमविषयत्वं कल्प्यते; न तु तस्य तदतिरिक्तहोमे शक्तिसंकोचः क्रियते; एवमिहापि स एव न्यायोऽनुसरणीयः। तथा 'न वा उवे तन्म्रियसे नरिष्यसि' इत्यादिमन्त्रस्वारस्यानु-

T

सरणमप्ययुक्तम्, क्लृप्तप्रवृत्तिनिमित्तानुसारेण ‘अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः’ ‘आरण्यानुत्सृजन्त्यहिंसायै’ ‘न दोषो हिंसायामाहवे’ इत्यादिश्रौतस्मार्तव्यवहारानुसारेण च क्रत्वर्थसंज्ञपनादीनामपि हिंसिधात्वर्थत्वस्थितौ, तदनुसारेण ‘न म्रियसे’ इत्यौपचारिकप्रायपाठानुसारेण च ‘न रिष्यसि’ इत्यस्यापि औपचारिकत्वस्यौचित्यात्। तस्मात् अवश्यव्यावर्तनीयहिंसान्तरव्यावृत्त्यर्थं पुरुषार्थनिषेधप्रतियोगिहिंसाविशेषणवशादेव क्रत्वर्थहिंसायाः पुरुषार्थनिषेधाविषयत्वलाभात् तस्याः क्रत्वर्थनिषेधस्यापि अहिंसावाक्यार्थत्वस्वीकारे वैरूप्यादिदोषापत्तेः तस्यैव तद्वाक्यार्थत्वाभ्युपगमशङ्कायाश्च शीघ्रप्रतीतपुरुषार्थहिंसानिषेधविषयत्वौचित्येन अनवकाशीकरणात् क्रत्वर्थसंज्ञपनस्य हिंसात्वेऽपि न निषेध्यत्वप्रसक्तिरिति न तद्व्यावर्तकहिंसिधातुप्रवृत्तिनिमित्तकल्पनागौरवमुररीकरणीयम्— इति सिद्धं मदीयमनुमानं नाप्रयोजकं त्वदीयमेवानुमानमप्रयोजकमिति। ‘पशुहिंसाया अहिंसात्वम्’—इति भाष्यं तु औपचारिकाहिंसापरम्, हिंसायाः सत्याः मुख्याहिंसात्वानुपपत्तेः। ‘हिंसायाः’—इत्यनुवादेन हि वस्तुतो हिंसात्वाभ्युपगमः स्फुटीकृतः। तस्मात् ‘अपशवो वा अन्ये गोऽश्वेभ्यः पशवः’ इति पशुत्वेनानूदितानां गवाश्व-

व्यतिरिक्तानामपशुत्वोक्तिवत्— इयमहिंसात्वोक्तिरौपचारिकी —इत्येव युक्तम् । अत एव अत्राधिकरणभाष्ये 'हिंसारूपं हि परप्राणविमोचनम्'— इति जगदनुग्रहार्थस्यापि प्रलये सर्वसंहारस्य हिंसात्वं व्यवहृतम् । तस्मात् क्रत्वर्थसंज्ञपनस्य हिंसारूपत्वेऽपि विधिविरोधात् निषेधाविषयता— इत्येव भाष्यकाराणामाशयः ॥

इति हिसिधात्वर्थवादः ॥ २ ॥



T

# गुणगुण्यैकशक्तिवादः ॥

क्रत्वर्थसंज्ञपनस्य हिंसिधातुवाच्यत्वनिरूपणप्रसङ्गेन नीलादिगुणवद्द्रव्याणां नीलादिशब्दवाच्यत्वम् ‘सर्वत्र प्रसिद्धोपदेशात्’ इत्यधिकरणे भाष्ये ब्रह्मणः सर्वशब्दवाच्यत्वोपपादनार्थं दृष्टान्ततया उपात्तं व्यवस्थापयितुं नीलादिशब्दाः गुणमात्रवाचकाः गुणिनि मतुब्लोपेन अभेदोपचारेण लक्षणया शक्तिभ्रमेण वा प्रयुज्यन्ते— इति नैयायिकादिमतं पूर्वपक्षतया परिगृह्य वादकथा प्रस्तूयते—

तत्र नीलघटः नीलत्वजातिप्रवृत्तिनिमित्तकतया नीलशब्दवाच्यः, नीलत्वजात्यधिकरणत्वात्, यत् नीलत्वजात्यधिकरणम्, तत् नीलत्वजातिप्रवृत्तिनिमित्तकतया नीलशब्दवाच्यम्— यथा नीलरूपम्— इति प्रथमा कक्ष्या ॥

अप्रयोजकमिदमनुमानम्, अनुकूलतर्काभावात्। नीलघटो न नीलत्वजातिप्रवृत्तिनिमित्तकतया नीलशब्दवाच्यः, नीलरूपान्यत्वात्, यत् नीलरूपान्यत्, न तत् नीलत्वजातिप्रवृत्तिनिमित्तकतया नीलशब्दवाच्यम्—यथा शुक्लरूपम्; नी-

लशब्दवाच्यत्वाभावव्याप्यनीलरूपान्यत्ववांश्च अयम्; तस्मात् न नीलत्वजातिप्रवृत्तिनिमित्तकतया नीलशब्दवाच्यः—इति द्वितीया ॥

शब्दप्रवृत्तिनिमित्ताश्रयस्य तद्वाच्यत्वाभावानुपपत्तेः वाद्यनुमानं नाप्रयोजकम्। प्रत्यनुमानमेव अप्रयोजकम्— इति तृतीया ॥

गुणगतजातीनां परंपरया द्रव्याश्रितत्वाभ्युपगमे प्रवृत्तिनिमित्ताश्रयत्वमात्रं न शब्दवाच्यत्वप्रयोजकम्। किं तु साक्षात् तदाश्रयत्वम्। अन्यथा परंपरया गुणशब्दप्रवृत्तिनिमित्ताश्रयस्य द्रव्यस्यापि गुणशब्दवाच्यत्वे गुणवचनेभ्यो मतुपो लुगनुशासनं विरुध्येत। अतो वाद्यनुमानम् अप्रयोजकम्। प्रत्यनुमानं च नाप्रयोजकम्— इति चतुर्थी ॥

अथ पञ्चमी—

शब्दवाच्यताप्रयोजके तत्प्रवृत्तिनिमित्ताश्रयत्वे साक्षात्त्वविशेषणाभावे मतुब्लोपानुशासनविरोधो न प्रसज्यते। द्विविधा हि गुणशब्दाः—द्रव्यपर्यन्ता गुणमात्रविश्रान्ताश्च; 'नीलम् उत्पलस्य' 'नीलमुत्पलम्'—इति द्विविधव्यवहारदर्शनात्। तथा च यथा द्रव्यवाचिनां नीलादिशब्दानां गुणपरत्वविवक्षायां नैल्यं नीलत्वं नीलिमा—इति भाव-

T

प्रत्ययः, तथा तेषां गुणवाचिनां द्रव्यपरत्वविवक्षायां मतुप्प्रत्ययोऽपि भवेत्— दृश्यते हि पुण्यपापशब्दानाम् 'अयं पुरुषः पुण्यः' 'अयं पापः' 'अस्य पुण्यम्' 'अस्य पापम्' 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन कर्मणा' इत्यादिद्विविधव्यवहारदर्शनात् धर्माधर्ममात्रवाचकत्वेन तद्धर्मिपर्यन्तत्वेन च द्विविधानां मध्ये धर्माधर्ममात्रवाचकानां धर्मिपर्यन्तत्वविवक्षायाम् 'पुण्यवान्' 'पापवान्' इत्यादिमतुबन्तव्यवहारः। तथा अत्रापि तत्प्राप्तौ तल्लोपानुशासनम् । तेन गुणविश्रान्ता नीलादिशब्दाः मतुब्लोपेन द्रव्यपर्यन्तं नेतव्याः; न तु मतुबन्ततया—इति सिध्यति । अतः साक्षात्त्वविशेषणं गौरवान्न निवेशनीयम्— इति नाप्रयोजकं वाद्यनुमानम्, प्रत्यनुमानमेव अप्रयोजकमिति ॥

अथ षष्ठी—

गुणवाचिनामेव नीलादिशब्दानां तद्वत्सु द्रव्येषु लक्षणया प्रयोगसंभवात् न तेष्वपि शक्तिः कल्पनीया, गौरवात् । अतो मतुब्लोपानुशासनं गुणवाचिनः शब्दा गुणिषु लक्षणया प्रयोक्तव्याः, न तु मतुबन्ततया— इति लक्षणानियमार्थमेव उपपादनीयम् । गुणपरनीलिमादिशब्दनिष्पत्तिरपि लक्ष्यमाणद्रव्यपरनीलादिशब्दात् भावप्रत्ययेन उपपादनी-

या। अतो मतुब्लोपानुशासनानुरोधेन लक्षणीयद्रव्यातिप्रसङ्गवारणाय साक्षात्त्वविशेषणापेक्षणात् वाद्यनुमानमप्रयोजकम्, प्रत्यनुमानं च न अप्रयोजकमिति ॥

अथ सप्तमी—

गुणशब्दानां गुणिषु शक्त्यन्तरकल्पने हि गौरवं भवेत्। लाघवात् साक्षात्परंपरासाधारण्येन तेषां स्वप्रवृत्तिनिमित्ताश्रयमात्रे शक्तिरिति लाघवोपनीतैकधर्मावच्छेदेन गुणेषु गुणिषु च एकशक्तिग्रहणपक्षे क्व गौरवप्रसक्तिः। यद्यपि अस्मिन्पक्षे शक्यव्यक्तिबाहुल्यलक्षणं गौरवमस्ति, तथापि प्रथमप्रवृत्तावच्छेदकलाघवानुसारेण पश्चादापतत्फलमुखं व्यक्तिगौरवं न दोषः। तस्मात् नीलादिशब्दप्रवृत्तिनिमित्ते साक्षात्त्वं न निवेशनीयम्। नापि मतुब्लोपानुशासनं लक्षणानियमार्थमिति उपपादनीयम्। तस्माद्वाद्यनुमानं नाप्रयोजकम्, प्रत्यनुमानमेवाप्रयोजकमिति ॥

अथाष्टमी—

लुगनुशासनं लक्षणानियमार्थम्— इत्येव उपपादनीयम्; साक्षात्त्वं च अवश्यं निवेशनीयम्; अन्यथा त्वदुक्तरीत्या घटवतो भूतलस्य परंपरया घटत्वाश्रयत्वेन तस्यापि घटशब्दवाच्यत्वापत्तेः। नं च प्रवृत्तिनिमित्तं प्रति अपृथक्सिद्धा-

श्रयत्वं विवक्षितमिति नातिप्रसङ्ग इति वाच्यम्; अपृथक्सिद्धिर्हि न तावत् द्वयोरेकस्य अपराश्रयत्वनियतिः, तत्तद्घटव्यक्त्यत्ययानन्तरमपि अनुवर्तमानाया नीलत्वजातेस्तदाश्रितत्वनियमाभावात् । नापि सति धर्मिणि तदाश्रयत्वनियतिः, घटे प्रथमक्षणावच्छिन्ने नीलरूपानुत्पत्त्या तस्मिन्नामपाकनिहिते नीलरूपनाशेनैव तस्याः सत्यपि घटे तदाश्रितत्वनियमासिद्धेः । नापि धर्मिणि परंपराघटके च सति धर्म्याश्रितत्वानियतिः अपृथक्सिद्धिः, साक्षान्नीलत्वजात्याश्रये नीलरूपे परंपराघटकाभावेन तदसंग्रहापत्तेः । अतः संबन्धानुवृत्तिप्रयोजकयावत्सत्त्वे तदाश्रयत्वानियमः तदपृथक्सिद्धिरिति वाच्यम् । तथा सति घटत्वस्य परंपरया भूतलसंबन्धे घटभूतलसंसर्गोऽपि प्रयोजक इति तत्सत्त्वे घटत्वस्य भूतलाश्रितत्वनियतिसद्भावात् कथमपृथक्सिद्धिविशेषणेन तद्व्यावृत्तिः, कथं च घटस्य रूपादिशब्दवाच्यत्वप्रसक्तेर्व्यावृत्तिः । न हि रूपत्वादीनां नीलत्वादीनां च द्रव्यात्पृथक्सिद्धिसदसत्त्वे केनचिद्विशेषेण उपपादयितुं शक्ये । अतः साक्षात्त्वविशेषणमेव नि[illegible]नीयम् । लुगनुशासनं च लक्षणानियमार्थमित्येवोपपादनीयम् । तस्मादप्रयोजकं वाद्यनुमानम्, प्रत्यनुमानं च नाप्रयोजकमिति ॥

अथ नवमी—

घटत्वस्य भूतलं रूपत्वस्य रूपि च आश्रय एव न भवति, 'घटो भूतलम्' 'रूपं घटः' इत्येवमादिव्यवहारादिरूपस्य आश्रयताग्राहकप्रमाणस्य अभावात्। न हि आश्रयाश्रयमात्रम् आश्रयद्वारा भवत्याश्रयः। किं तु यस्य तत्रापि आश्रयताग्राहकं प्रमाणमस्ति, स एव तदाश्रयो भवति— यथा कारणकारणमात्रं न कारणम्, कुलालपित्रादेस्तथात्वेऽपि अकारणत्वात्; किंतु तस्यापि यत्र कारणताग्राहकं प्रमाणमस्ति, तदेव यागादि स्वर्गादिकारणं भवति— तथा इहापि योजनीयम्। तस्मात् न साक्षात्त्वं निवेशनीयम् नापि लुगनुशासनं लक्षणानियमार्थमित्युपपादनीयम्। अतो नाप्रयोजकं वाद्यनुमानम्, प्रत्यनुमानमेव अप्रयोजकमिति।

अथ दशमी—

यदि घटभूतलादिकं रूपत्वघटत्वाद्याश्रयो न भवति तथात्वग्राहकप्रमाणाभावात्, तर्हि घटादिकं नीलत्वाद्याश्रयोऽपि न भवेत्, वाद्यभिमतस्य तथात्वग्राहकप्रमाणस्य अभावादेव 'नीलो घटः' इत्यादिव्यवहारोऽस्तीति चेत्; न, स हि मतुब्लोपानुशासनानुसारेण मतुपः प्रयोगे यावानर्थः, तावन्तमर्थं द्रव्यपरस्य नीलादिशब्दस्य गमयति। मतुप्प्रयोगे

द्रव्यस्य नीलत्वाद्याश्रयगुणाश्रयतैव तदर्थो भवेत्; न तु नीलत्वाद्याश्रयता। अत:— यथा 'दण्डी पुरुष:' इति व्यवहार: पुरुषस्य दण्डत्वाश्रयत्वे न प्रमाणम्, तथा 'नीलो घट:' इत्यादिव्यवहारोऽपि घटस्य नीलत्वाद्याश्रयत्वे। अत: कारणकारणरीतिं परित्यज्य आश्रयाश्रयमात्रम् आश्रयद्वारेण आश्रयो भवति— इति वादिनो रीतिरास्थेया। तामेव रीतिमनुरुध्य प्रतिवादिना अतिप्रसङ्गवारणाय लक्षणानियमार्थंलुगनुंशासनानुरोधाय च साक्षात्त्वं निवेशनीयमित्यापादितम्। अतो वाद्यनुमानमप्रयोजकम्, प्रत्यनुमानं च न अप्रयोजकमिति ॥

अथैकादशी—

घटादीनां नीलत्वाद्याश्रयत्वे प्रमाणाभावोऽसिद्ध:, नीलो घट:' इत्यादिप्रतीतिव्यवहारसद्भावात्। न हि 'नीलो गुण:' इत्यादिप्रतीतिव्यहारयोश्च 'नीलो घट:' इत्यादिप्रतीतिव्यवहारयोश्च मात्रयापि विशेषमीक्षामहे। येन गुणविषयौ तौ नीलत्वाद्याश्रयगोचरौ, गुणिविषयौ तदाश्रयाश्रयगोचरौ— इति वैषम्यं कल्प्येत। उभयविषययोरपि तयोर्विशेषाभावादेव हि तौ प्रमाणीकृत्य गुणगुणिनो: केचिदत्यन्ताभेदं मन्यन्ते। अन्ये 'घटस्य नीलो गुण:' इत्यादिप्रती-

तिव्यवहारावनुरुध्य तयोर्भेदाभेदं च समर्थयन्ते । तयोर-त्यन्तभेदवादिनश्च— कथं तर्हि 'नीलो घटः' इत्यादि-प्रतीतिव्यवहारौ इत्याशङ्क्य मतुब्लोपात् अभेदोपचाराद्वा इति मतुब्लोपतुल्यत्वेन अभेदोपचारमपि तदुपपादकमुपा-ददते । तयोरनुभवसाक्षिकविशेषसद्भावे तु 'नीलो घटः' इत्यादिप्रतीतिव्यवहारालम्बनमभेदसमर्थनं भेदाभेदसमर्थनं च अत्यन्तनिरालम्बनं स्यात्; अभेदोपचारवर्णनमपि विरुध्ये-त । तस्मान्मतुब्लोपानुशासनं पुण्यवानित्यादिरीत्या मतुब-न्तप्रयोगो न कार्य इत्येतदर्थमित्येव युक्तम् । नैवम् 'घटं भूतलम्' 'रूपं घटः' इत्यादिप्रतीतिव्यवहारौ स्तः यौ घटभूतलादीनां रूपत्वघटत्वाद्याश्रयत्वे प्रमाणीभवेताम् न च 'बर्हिषि हवींष्यासादयति' इति वचनानुसारेण सा-क्षाद्बर्हिराश्रितानां हविषां बर्हिराश्रयभूता वेदिरपि आश्रयः इत्यत्र— यथा 'वेद्यां हवींष्यासादयति' इति वचनम्, केवलं बर्हिषां कूपाच्छादनतृणन्यायेन हविराधारता न संभवतीति लौकिकदृष्टिश्च प्रमाणम्— तथा इह किंचित्प्रमाणं दृश्यते अतो वाद्यनुमानं नाप्रयोजकम्, प्रत्यनुमानमेवाप्रयोजक-मिति ॥

अथ द्वादशी—

T

रूपत्वस्य घटाश्रयत्व इव घटत्वस्य भूतलाश्रयत्व इव च नीलत्वस्य घटाश्रयत्वेऽपि प्रमाणाभावो न असिद्धः, गुणविषययोर्द्रव्यविषययोश्च नीलप्रतीतिव्यवहारयोः लोकतः स्पष्टं विशेषानवगमेऽपि आद्यौ नीलत्वजात्याश्रयविषयौ द्वितीयौ तद्विशिष्टवैशिष्ट्यविषयौ—इति विशेषस्य अवश्याभ्युपगन्तव्यत्वात् । अन्यथा 'नीलः स्फटिकः' 'पीतं सुवर्णम्' 'उष्णं सलिलम्' इत्यादिप्रतीतिव्यवहारे स्फटिकसुवर्णसलिलानामपि नीलत्वपीतत्वोष्णत्वादिजात्याश्रयतापत्त्या नीलपीतोष्णादिशब्दवाच्यत्वप्रसङ्गात् । एवं द्रव्यविषययोः नीलादिप्रतीतिव्यवहारयोः विशिष्टवैशिष्ट्यविषयत्वमालोच्यैव भगवता कात्यायनेन मतुब्लोपानुशासनं कृतम् । अथ प्रमाणाभावेऽपि आश्रयाश्रयमात्रम् आश्रयद्वारा आश्रयो भवति—इति परिभाषामात्रं क्रियते, तदा घटभूतलादीनां रूपघटादिशब्दवाच्यत्वप्रसङ्गवारणाय साक्षात्त्वविशेषणं निवेशनीयम् । मतुब्लोपानुशासनं च लक्षणानियमार्थमित्युपपादनीयम् । तस्मादप्रयोजकं वाद्यनुमानम्, प्रत्यनुमानं च नाप्रयोजकमिति ॥

अथ त्रयोदशी—

गुणविषययोरिव द्रव्यविषययोरपि नीलादिप्रतीतिव्यवहारयोः नीलत्वाद्याश्रयतायां प्रामाण्यमुपपद्यत एव । 'नीलः

T

स्फटिकः' इति प्रतीतिव्यवहारयोस्तु भ्रान्तितन्मूलव्यवहाररूपत्वात् न तस्यां प्रामाण्यं प्रसज्यते— न हि स्फटिकः संनिहितेन्दीवरादिनीलिमगतनीलत्वस्य साक्षादाश्रयः। नापि परंपरया, नीलिम्नः तदाश्रयस्येन्दीवरस्य च स्फटिकाश्रयत्वाभावात्; परंपराघटकस्य द्वारस्य आश्रितत्वे हि तद्द्वारा तदाश्रितमपि आश्रितं भवेत्— यथा द्वारस्य कारणत्व एव तद्द्वारा तत्कारणमपि द्वारानन्तरभाविनि कारणं भवति। अन्यथा यागस्य स्वर्गकारणतानिर्वाहार्थम् अपूर्वमात्रं कल्प्येत; न तस्य स्वर्गकारणत्वमपि। एवं च सर्वथा नीलत्वानाश्रये स्फटिके भवन्ती नीलप्रतीतिः भ्रान्तिरूपेति तस्याः तन्मूलव्यवहारस्य च नीलत्वाश्रयतायां प्रामाण्याभावमात्रेण कथम् 'नीलो घटः' इत्यादिप्रतीतिव्यवहारयोः स्वतः प्राप्तं प्रामाण्यमपैति। 'पीतं सुवर्णम्' इति प्रतीतिव्यवहारौ तु पीतिमाश्रयतायां प्रमाणमेव। पीतिमगुरुत्वाधिकरणपार्थिवावयवव्यतिरेकेण तदन्तर्गतस्य सुवर्णशब्दवाच्यस्य तैजसांशस्य अनङ्गीकारात्; नैमित्तिकद्रवत्वस्य जतुवत् पार्थिव एव उपपत्तेः। न हि द्रुतसुवर्णमध्ये पार्थिवभागः तन्मध्यनिक्षिप्तपाषाणखण्डवत् अद्रुत एवावतिष्ठते। येन द्रवत्वाश्रयभूतमन्यत् कल्प्येत। प्रत्युत 'पीतं द्रुतम्'

इत्येवानुभूयते। कथ्यमानजलरूपापरावृत्तेरिव सुवर्णरूपापरावृत्तेरपि तदीयद्रवत्वेन अत्यन्तानलसंयुक्तवज्ररूपापरावृत्तेरिव वस्तुस्वभावेन वा उपपत्तेः। सुवर्णस्य पार्थिवत्वेऽपि अत्यन्तानलसंयोगेन तदीयद्रवत्वस्य वज्ररूपस्येव अनुवृत्तेरपि वस्तुस्वभावादेवोपपत्तेः। अथवा सुवर्णं तैजसमेवास्तु, शुद्धसुवर्णे दृश्यमानस्यात्यन्तपीतिम्नः 'यदग्ने रोहितं रूपं तेजसस्तद्रूपम्' इति श्रुतौ तेजोरूपत्वेन प्रतिपन्ने लौहित्य एव अवान्तरविशेषत्वोपपत्तेः। श्रुतिषु तेजोऽबन्नरूपत्वेन वर्णितेभ्यो लोहितशुक्लकृष्णवर्णेभ्योऽतिरिक्तस्य रूपस्याप्रामाणिकत्वात्। गुरुत्वमपि करकावस्थे जले काठिन्यमिव सुवर्णावस्थे तेजसि अनुभवबलादुपपन्नम्। उद्भूतरूपस्य तेजसः परप्रकाशकत्वदृष्टावपि अत्र तदभावः तथैवानुभवबलादुपपन्नः। सुवर्णगततेजोंऽशस्य परप्रकाशकत्वाभावोऽपि परपक्षे पार्थिवांशगतपीतिम्ना अभिभवादिति अन्यत्रादृष्ट एव स्वभावविशेषः कल्पनीयः। न हि परपक्षेऽपि अन्यत्र रत्नदीपादौ उपष्टम्भकपार्थिवभागरूपस्य तेजोगतभास्वरत्वाभिभावकत्वं दृष्टम्। एवम् 'उष्णं जलम्' इति प्रतीतिव्यवहारावपि जलस्योष्णत्वाश्रयतायां प्रमाणमेव; जलवत् स्वतः द्रवत्वरहितस्यापि पार्थिवस्य घृतलाक्षादेर्द्रवत्ववत् स्वतः शीत-

स्यापि जलस्य अग्निसंयोगान्नैमित्तिकस्य उष्णस्पर्शस्योपपत्तेः तत्र तेजोऽन्तरोत्पत्तिकल्पनाया गौरवपराहतत्वात् । न हि अयःपिण्डारूढवह्निवत् अतितप्ततैलोद्भूतवह्निज्वालावच्च तप्तजलसंयुक्तं किंचित्तेजोऽनुभूयते । तस्मात् 'नीलो घटः' इति प्रतीतिव्यवहारयोर्नीलत्वाश्रयतायां प्रामाण्यस्य दृष्टान्तोपन्यासेन प्रतिक्षेप्तुमशक्यत्वात् प्रागुक्तरीत्या वाद्यनुमानं नाप्रयोजकम्, प्रत्यनुमानमेवाप्रयोजकमिति ॥

अथ चतुर्दशी—

नीलस्फटिकादिदृष्टान्ताः प्रतिवादिनो नैयायिकस्य मतमनुसृत्य उपन्यस्ताः—तन्मते हि 'नीलः स्फटिकः' इति प्रतीतिः परंपरासंबन्धेन संनिहितोपाधिगतनीलगुणवैशिष्ट्यविषया प्रमैव । तथा 'पीतं सुवर्णम्' इति प्रतीतिः तैजसे सुवर्णे तदुपष्टम्भकपार्थिवभागगतपीतगुणवैशिष्ट्यविषया । 'उष्णं सलिलम्' इति प्रतीतिः तदन्तःप्रविष्टानुद्भूतरूपतेजोगतोष्णगुणवैशिष्ट्यविषया । न च तन्मतमर्यादासिद्धदृष्टान्तोपन्यासस्य सता असता वा वाद्युपन्यस्तदूषणेन किंचिद्धीयते । सन्ति वाद्यभिमता अपि दृष्टान्ताः प्राक् आदिशब्देन गृहीताः 'नीलं वस्त्रम्' 'लोहितं काष्ठम्' इत्यादिप्रतीतिव्यवहाराः। न हि वस्त्रं रञ्जकद्रव्यावयवानां काष्ठम् आश्र-

याशस्य वह्नेर्वा नाश्रय इति वक्तुं शक्यम् । तस्मात् वादिनापि तन्मतसिद्धदृष्टान्तानुसारेण द्रव्यविषययोर्नीलादिप्रतीतिव्यवहारयोः नीलत्वाद्याश्रयत्वविषयताभिमानस्त्यक्तव्य इति ॥

अथ पञ्चदशी—

'नीलं वस्त्रम्' इत्यादिप्रतीतिव्यवहारा अपि नीलत्वाद्याश्रयताविषया एव न; किंतु भ्रान्तिरूपाः 'अनीलमेव वस्त्रं रञ्जकद्रव्यसंयोगान्नीलं भासते' 'अलोहितमेव काष्ठं तदुपारूढवह्निसंपर्काल्लोहितं भासते' इति विरुद्धप्रतीतिव्यवहारयोः तत्प्रतीतिव्यवहारदशायामप्यनुवृत्तेः । न चैवम् 'अनील एव घटो नीलतया भासते' इति विरुद्धप्रतीतिव्यवहारौ स्तः । 'घटो नीलगुणो न भवति'—इति प्रतीतिव्यवहारौ तु नीलत्वाश्रयताबाधकौ, गुणत्वाभावेन चारिताथ्र्यात् । तस्मादबाधितौ प्रतीतिव्यवहारौ घटस्य नीलत्वाश्रयतायां प्रमाणीभवेतामेव—इति ॥

अथ षोडशी—

नीलत्वजात्याश्रयत्वविषयतायामबाधितौ एतौ प्रतीतिव्यवहारौ—इत्येतदसिद्धम्, इहापि बाधकसद्भावात् । तथाहि—मतुब्लोपानुशासनं तावत् एकं बाधकम्—प्रत्ययश्रवणप्रयु-

T

क्तयौगिकार्थप्रतीतिसद्भावे हि तल्लोपानुशासनं सार्थकं भवेत्। अत एव 'पञ्चाला नाम केचन क्षत्रियाः तेषां निवासो जनपदः'—इति विवक्षायाम् 'सोऽस्य निवासः'—इत्यर्थे प्राग्दीव्यतीयः प्रत्ययो भवति—इति मत्वा 'तस्य जनपदे लुप्' इति यल्लोपानुशासनं जरद्वैयाकरणैः कृतम्; तन्न कर्तव्यम्, जनपदविशेषे वर्तमानेन तत्संज्ञारूपेण पञ्चाल इति शब्देन पञ्चालनामकक्षत्रियाणां निवासो जनपदः इति यौगिकार्थप्रतीत्यनुदयात्, ततो रूढ्या जनपदविशेषस्यैव प्रतीत्युदयादिति दूषितं पाणिनिना 'लुब्योगाप्रत्याख्यानात्' इति सूत्रेण 'अशिष्यम्' इति पूर्वसूत्रादनुवृत्तिमता । अथ अरुणाधिकरणन्यायविरोधरूपः अन्यद्बाधकम्— अरुणाधिकरणे हि 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति श्रुतिगतस्य अरुणापदस्य अरुणिमगुणपरत्वमङ्गीकृत्य अरुणिमगुणैकहायनीद्रव्योभयसाधनकक्रयभावनाविधिः अङ्गीकृतः । स तु गुणवचनानां गुणमात्रशक्त्यङ्गीकारे संगच्छते । अरुणाशब्दस्य पिङ्गाक्ष्यादिशब्दसामानाधिकरण्यरूपेण वाक्यप्रमाणेन द्रव्यपरत्वप्रतीतावपि तस्य गुणमात्रशक्तिपक्षे द्रव्यपरत्वस्य लक्षणया उपपादनीयत्वेन श्रुतिविरुद्धवाक्यबाधनोपपत्तेः । तस्य गु-

णिसाधारणशक्तिपक्षे तु स न संगच्छते, श्रुत्यविरुद्धस्य वाक्यप्रमाणस्य उपेक्षानर्हत्वात् । तस्मात् 'नीलो घटः' इति प्रतीतेः घटगतनीलत्वजात्याश्रयताविषयत्वे बाधकसद्भावेन भ्रान्तित्वापत्तेः तत्प्रामाण्यमभ्युपगच्छता विशिष्टवैशिष्ट्यविषयत्वमेवाभ्युपगन्तव्यम् । तस्माद्घटस्य रूपत्वाश्रयत्वे नीलत्वाश्रयत्वे च प्रमाणाभावस्तुल्य इति ॥

अथ सप्रदशी—

मतुब्लोपानुशासनस्वारस्यभङ्गस्तावत् न बाधकः, 'नीलो घटः' 'नीलो गुणः' इति प्रतीत्योरविशेषानुभवविरोधेन तत्स्वारस्यभङ्गस्य उचितत्वात्; मतुब्लोपे नीलादिगुणविशिष्टद्रव्यप्रतीतिः, अन्यत्र नीलत्वादिविशिष्टद्रव्यप्रतीतिः— इति व्यवस्थया उभयसामञ्जस्यसमर्थनसंभवाच्च । अरुणाधिकरणन्यायविरोधस्तु न प्रसज्यते, गुणशब्दानां गुणगुण्युभयवाचकत्वेऽपि अरुणावाक्ये गुणिपरिग्रहे विभक्तेः शब्दसाधुत्वमात्रार्थतया वैयर्थ्यं स्यात्; गुणिगतकरणकारकत्वस्य समानाधिकरणपदान्तरगततृतीयाविभक्तिलब्धत्वात् । न च गुणपरिग्रहेण तद्गतकरणकारकत्वार्थकतया सार्थकत्वे संभवति वैयर्थ्याङ्गीकारो युक्तः । न च द्रव्यैकपरपिङ्गाक्ष्यैकहायनीपदगतविभक्तिद्वयवत् अनन्यगतिक-

T

त्वमस्ति । अरुणापदस्य गुणार्थत्वपरिग्रहेण तत्सार्थकत्व-समर्थनसंभवात् । अतः प्रकृतिश्रुत्यविरोधेऽपि विभक्ति-श्रुतिविरोधेन वाक्यबाधनमुचितमालोच्य पूर्वमीमांसकैः गु-णार्थपरिग्रहः कृतः । अस्माभिस्तु सामानाधिकरण्यस्यापि अनुग्रहसंभवे तद्बाधनायोगात् अरुणाशब्दस्य गुणिपर्यन्तत्व-माश्रित्यैव विभक्त्यर्थस्य विशेषणसंक्रान्तिः इष्यते । तस्मात् बाधकाभावेन 'नीलो घटः' इति प्रतीतेः 'नीलो गुणः' इति प्रतीतेरिव नीलत्वाश्रयतायां प्रामाण्यमुपपद्यत एव। अतो घटस्य नीलशब्दप्रवृत्तिनिमित्ताश्रयत्वात् शब्दवाच्य-त्वप्रयोजके प्रवृत्तिनिमित्ताश्रयत्वे साक्षात्त्वविशेषणस्य गौरव-पराहतत्वाच्च नीलशब्दप्रवृत्तिनिमित्ताश्रयस्य घटस्य नीलश-ब्दवाच्यत्वम् अव्याहतमिति विपक्षे बाधकतर्कस्य अप्रति-हततया वाद्यनुमानमेव प्रयोजकम् , प्रत्यनुमानमप्रयोजक-मिति सिद्धं घटस्य नीलशब्दवाच्यत्वम् । नीलशब्दन्यायेन अन्येऽपि रूपविशेषवाचिनो रसगन्धविशेषवाचिनश्च गुण-गुण्येकशक्तिमन्तः प्रत्येतव्याः ॥

इति गुणगुण्येकशक्तिवादः ॥ ३ ॥



T

# गुणगुण्यनेकशक्तिवादः ॥

अथ एषां गुणवचनानां शब्दानां गुणगुणिनोर्भिन्ना शक्तिरिति सैद्धान्तिकं पक्षान्तरमाश्रित्य कथा प्रस्तूयते—

नीलगुणाश्रयो घटो नीलशब्दस्य वाच्यः, घटनीलगुणान्याप्रतियोगिकाभावप्रतियोगित्वात्, यो घटनीलगुणान्याप्रतियोगिकाभावप्रतियोगी, स नीलशब्दवाच्यः— यथा नीलगुणः— इति प्रथमा कक्ष्या ॥

अप्रयोजकमिदमनुमानम्, नीलगुणस्य नीलशब्दप्रवृत्तिनिमित्तनीलत्वजात्याश्रयत्वेन नीलशब्दवाच्यत्वेऽपि घटस्य तदनाश्रयत्वेन नीलशब्दावाच्यत्वोपपत्तेः। तस्मात् घटो न नीलशब्दवाच्यः, नीलत्वजात्यनाश्रयत्वात्, यो नीलत्वजात्यनाश्रयः, स न नीलशब्दवाच्यः—यथा शुक्लगुणः। नीलशब्दवाच्यत्वाभावव्याप्यनीलत्वजात्यनाश्रयत्ववांश्च अयम्, तस्मात् न नीलशब्दवाच्यः—इति द्वितीया कक्ष्या ॥

न अप्रयोजकमिदमनुमानम्, नीलत्वजातिवत् नीलगुणस्यापि नीलशब्दप्रवृत्तिनिमित्तत्वेन तदाश्रयस्य नीलश-

T

न्दवाच्यताया अव्याहतत्वात् । त्वदनुमानमेव अप्रयोजकम्, घटस्य नीलत्वानाश्रयत्वेऽपि नीलशब्दप्रवृत्तिनिमित्तान्तराश्रयत्वेन तद्वाच्यत्वोपपत्तेः—इति तृतीया ॥

त्वदनुमानम् अप्रयोजकमेव, लाघवात् नीलत्वजातिमात्रस्य नीलशब्दप्रवृत्तिनिमित्तत्वोपपत्तौ तया अङ्गीकृतानां नीलगुणानामपि तत्प्रवृत्तिनिमित्तत्वकल्पनायोगात् । अत एव मदनुमानं न अप्रयोजकम्, प्रवृत्तिनिमित्तानाश्रयस्य तद्वाच्यत्वायोगात्—इति चतुर्थी ॥

मदनुमानं तावत् न अप्रयोजकम्, 'नीलो गुणः' इति व्यवहारात् गुणगतनीलत्वजातेरिव 'नीलो घटः' इति व्यवहारात् तद्गतनीलगुणस्यापि तत्प्रवृत्तिनिमित्तत्वकल्पनावश्यंभावात्; व्यवहारमनुरुध्य प्रवृत्तिनिमित्तकल्पनौचित्यात् । अत एव त्वदनुमानमप्रयोजकम्, प्रवृत्तिनिमित्ताश्रयस्य तद्वाच्यत्वोपपत्तेः—इति पञ्चमी ॥

त्वदनुमानं तावत् अप्रयोजकमेव, नीलशब्दस्य स्ववाच्यनीलगुणसंबन्धात् घटे लक्षणया 'नीलो घटः' इति व्यवहारोपपत्तौ तत्रापि नीलशब्दस्य शक्त्यन्तरकल्पने गौरवात् । अत एव मदनुमानं न अप्रयोजकम्, प्रवृत्तिनिमि-

T

त्तानाश्रयस्य शब्दवाच्यताया व्याहतत्वात्— इति षष्ठी ॥

अथ सप्तमी—

यदि नीलादिशब्दानां द्रव्ये लक्षणा स्यात्, तदा 'वर्णदृढादिभ्यः ष्यञ् च' इति पाणिनिसूत्रेण वर्णवाचिभ्यो नीलादिशब्देभ्यः 'तस्य भावे'— इत्यर्थे विहितौ ष्यञिमनिचौ प्रत्ययौ नीलादिगुणस्य भावे नीलत्वादिजातौ भवेताम् । नीलादिद्रव्यस्य भावे नीलादिगुणे तौ दृश्येते— घटस्य नैल्यं नीलिमा इति हि लोके नीलादिगुण एव उच्यते । अतः नीलादिशब्दानां द्रव्यवाचकत्वमवश्यमभ्युपगन्तव्यमिति द्रव्ये तेषां शक्तिकल्पनं न गौरवेण त्यक्तुं शक्यते— इति ॥

अथ अष्टमी कक्ष्या—

वैयाकरणैः नीलादिशब्दाः केवलाः लुप्तमतुबन्ताश्च— इति द्विविधाः इष्यन्ते । तत्र आद्याः गुणेषु, द्वितीयाः तद्विशिष्टद्रव्येषु च प्रवर्तन्ते । तदिह वर्णदृढादिसूत्रे नीलादिशब्दाः केवलाः धर्मविषया ग्राह्याः, द्वितीयाः धर्मिविषया वा— इति संदेहे धर्मिपरदृढादिशब्दसाहचर्यात् द्वितीया एव ग्राह्या इति च तैरिष्यते । एवमकल्पितनित्यशब्दस्वरूपपरिज्ञानार्थं चित्रतुरगन्यायेन कल्पितप्रकृतिप्रत्ययतल्लोपादि-

T

युक्तानित्यशब्दनिष्पादने प्रवृत्तैः वैयाकरणैः मतुब्लोपस्य व्यवहृतत्वेऽपि वस्तुतत्त्वमनुरुध्य सिद्धशब्दानामेव अर्थनिर्णये प्रवृत्तैः न्यायविद्भिः न्यायानुसारेण शब्दार्थनिर्णयः कार्यः। तदनुसारेण च मतुब्लोपस्य वैयाकरणकल्पितत्वात् केवला एव नीलादिशब्दाः गुणेषु गुणिषु च प्रवर्तन्ते—इत्यभ्युपगन्तव्यम्। ततश्च लाघवात् गुणवाचिनामेव तेषां गुणिषु लक्षणया प्रवृत्त्युपपत्तेः गङ्गादिशब्दानां तीरादिष्विव—तेषां गुणिषु शक्त्यन्तरं न कल्पनीयम्। ननु गुणवाचिनामेव नीलादिशब्दानां गुणिषु लक्षणा चेत्, मतुब्लोपानुशासनं न कर्तव्यं स्यात्, न हि गङ्गादिशब्दानां तीरादिषु लक्षणया प्रवृत्त्यर्थं तीरादिप्रत्यायककिंचित्प्रत्ययलोपानुशासनं क्रियते। अतः तदनुशासनेन इदमवगम्यते— प्रत्ययप्रयोगे यावानर्थः तावदर्थकत्वमपि नीलादिशब्दानामस्तीति वैयाकरणानामभिप्रायः—इति। मतुप्प्रत्ययप्रयोगे च नीलगुणवत्त्वमर्थो भवति—इति निर्विवादम्। अतो नीलादिशब्दानां गुणिषु शक्तिकल्पनमावश्यकम्। अन्यथा शब्दार्थनिर्णयाभियुक्तवैयाकरणकृतमतुब्लोपानुशासनवैयर्थ्यप्रसङ्गात्— इति चेत्, मैवम्, यतो नीलादिशब्दानां गुणिषु लक्षणाभ्युपगमेऽपि न मतुब्लोपानुशासनवैयर्थ्यं प्रसज्यते— यथा हि गङ्गाश-

ब्दस्य लक्षणया तीरे कदाचित्प्रयोगः 'गङ्गायां घोषः इति; कदाचित्तीरवाचकशब्देन सह प्रयोगः 'गङ्गातीरे घोषः' इति— एवं गुणशब्दानां कदाचित् लक्षणया गुणिषु प्रयोगः— 'नीलो घटः' 'पीतो घटः' इत्यादि, कदाचिद्द्रव्यवाचिना मतुपा सह प्रयोगः 'नीलवान्घटः' 'पीतवान्घटः' इति— एवं द्विविधव्यवहारप्रसक्तौ लक्षणया प्रयोग एव साधुः मतुबन्तप्रयोगस्तु असाधुः इति ज्ञापनार्थत्वोपपत्तेः। एवं च नीलादिशब्दानां शक्त्या गुणमात्रपरत्वं लक्षणया गुणिपर्यन्तत्वम्– इति स्थिते गुणिपर्यन्तानामेव तेषां वर्णदृढादिसूत्रे ग्रहणमिति धर्मिपरदृढादिशब्दसाहचर्यात् नैल्यादिशब्दैः नीलादिगुणानामिव तद्गतनीलत्वादिजातीनामभिधानदर्शनाच्च अवसीयते। न च शक्तादेव प्रत्ययनिष्पत्तिः, न लाक्षणिकात्— इति नियमोऽस्ति; धर्मवाचकानामेव शब्दानां वृत्तिविषये लक्षणया धर्मिपर्यन्तत्वस्य 'निद्रायते' 'करुणायते' 'ओजायते' इत्यादौ बहुलमुपलम्भात्। तेषु हि अनिद्रो निद्रावान्भवतीत्याद्यर्थेषु निद्रादिशब्दाः निद्रावदादिधर्मिलक्षकाः— एवमलोहितो लोहितो भवति लोहितायते— इति शब्दनिष्पत्त्यर्थं प्रत्ययविधायके 'लोहितादिडाज्भ्यः क्यष्' इति सूत्रे लोहितग्रहणमपि लक्षणया

T

धर्मिपरम्, लोहितगुणरहितस्य घटादेः पाकादिना लोहितगुणवैशिष्ट्यवत् अलोहितगुणस्य लोहितगुणतायाः क्वचिदपि भावस्य अदर्शनात्। तस्मात् नीलादिशब्दानां द्रव्यपरत्वस्य लक्षणया उपपन्नत्वात् अप्रयोजकं त्वदनुमानम्, मदनुमानं च न अप्रयोजकम्— इति॥

अथ नवमी—

नीलादिशब्दानां द्रव्यवाचकत्वाभावे द्रव्यपरेभ्यस्तेभ्यः ष्यञादिप्रत्ययविधिरेव न संभवति। भावार्थे हि तद्विधानम्; 'तस्य भावस्त्वतलौ' इति भावार्थाधिकारात्। भावशब्देन च यस्माच्छब्दात् भावार्थप्रत्ययविधानं क्रियते, तत्प्रवृत्तिनिमित्तभूतो धर्म उच्यते; न तु तद्वाच्यधर्मिगतधर्ममात्रम्, घटत्वशब्देन घटशब्दप्रवृत्तिनिमित्तजातेरिव घटगतक्रियागुणादिधर्मान्तरस्य अनभिधानात्। यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशः तदभिधाने त्वतलौ—इत्यादिवदद्भिः शब्दविद्भिरपि तथैवाङ्गीकृतत्वाच्च। न च शक्त्या शब्दप्रवृत्तौ निमित्तस्य शक्यतावच्छेदकस्येव लक्षणया शब्दप्रवृत्तौ निमित्तस्य मुख्यार्थस्यापि शब्दप्रवृत्तिनिमित्त्वाविशेषात् इह भावशब्देन ग्रहणमस्त्विति वाच्यम्, तथा सति लक्षणया तीरे गङ्गाशब्दप्रवृत्तिनिमित्तस्य प्रवाहत्वस्यापि

T

गङ्गात्वशब्देन अभिधानप्रसङ्गात् । तस्मात् नीलादिशब्दानां गुणेष्विव द्रव्येष्वपि शक्तिरङ्गीकरणीया । अत एव 'वर्णो वर्णेन' इति वर्णवाचिनां वर्णवाचिभिः सह समानाधिकरणसमासविधायकसूत्रेण गुणवाचिनां गुणिवाचिनां च तेषामविशेषेण ग्रहणमिष्यते । तत एव हि द्रव्येष्वपि नीललोहित इत्यादिप्रयोगाः । तेषु श्वेतलोहितादिगुणानां भिन्नभिन्नावयवाश्रितत्वेऽपि अवयवगुणेन समुदायः तथा निर्दिश्यते इति सामानाधिकरण्यं भाष्यादिषु उपपादितम् । अत एव नातिश्वेते नातिरक्ते गुणिनि गुणे च 'श्वेतरक्तस्तु पाटलः' इति श्वेतरक्तशब्दप्रयोगः । तस्य च गुणगुण्युभयसाधारण्यम् 'गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इत्यग्रिमवचनेन स्फुटीकृतम् । तस्मात् नीलादिशब्दानां द्रव्येष्वपि शक्तेरवश्यंभावात् नाप्रयोजकं मदनुमानम् , त्वदनुमानमेव अप्रयोजकम्— इति ॥

अथ दशमी—

नीलादिशब्दानां द्रव्येष्वपि शक्तिरिष्यते चेत्, गुणेषु तत्प्रवृत्तिनिमित्तानां नीलत्वादिजातीनां परंपरासंबन्धेन द्रव्याश्रितत्वस्यापि 'नीलो गुणः' 'नीलो घटः' इत्यादिव्यवहारैकरूप्यानुसारेण कल्पयितुं शक्यत्वात् त्वदभिमत-

T

'नीलो घटः' इत्यादिप्रतीतिव्यवहारयोः नीलादिगुणविशिष्टद्रव्यविषयत्वमेव न सिध्येत्। दूरे नीलादिगुणानां प्रवृत्तिनिमित्तत्वम्। अतः तयोः नीलत्वादिजातिविशिष्टद्रव्यविषयत्वपक्षमपहाय नीलादिगुणविशिष्टद्रव्यविषयत्वपक्षमाश्रयता तीरे गङ्गाशब्दस्य प्रयोगप्रतीत्योः तस्मिन्प्रवाहत्ववैशिष्ट्यविषयत्वमपहाय प्रवाहसंबन्धितीरत्वविषयत्वमिच्छता गङ्गाशब्दस्य तीर इव—नीलादिशब्दानां द्रव्येषु लक्षणैवाभ्युपेतव्या। एवं न्यायतः स्थितौ क्वचिल्लक्ष्यतावच्छेदकेऽपि प्रयोगानुसारेण भावप्रत्ययो भविष्यति, प्रयोगमूलत्वाद्व्याकरणस्य। 'वर्णो वर्णेन' इत्यत्र तु प्रयोगानुसारणे द्रव्यलक्षकाणामपि नीलादिशब्दानां ग्रहणं भविष्यति। अतः त्वदनुमानमप्रयोजकम्, मदनुमानं नाप्रयोजकमिति॥

अथैकादशी—

द्रव्येषु नीलादिशब्दप्रवृत्तौ नीलादिगुणानां निमित्तत्वाभावे तेषु नैल्यनीलिमादिशब्दप्रयोगो न स्यात्, नीलत्वादिजातीनां निमित्तत्वे तासु तेषां प्रयोगश्च स्यात्, भावार्थप्रत्ययानां प्रवृत्तिनिमित्तवाचित्वात्— इति दोषसद्भावादेव नीलत्वादिजातिप्रवृत्तिनिमित्तत्वाप्रसक्तेः, तद्भयात् द्रव्येषु न शक्तिर्वक्तव्या। व्याकरणं च नान्यथाकरणीयम्; किंतु गु-

T

णेषु नीलिमादिशब्दसिद्धये गुणविशिष्टेषु द्रव्येषु शक्तिरङ्गीकरणीया। अतो नाप्रयोजकं मदनुमानम्, त्वदनुमानमप्रयोजकमिति ॥

अथ द्वादशी—

शक्यमत्र लाघवमूलकैकशक्तिपक्षानुसारेण नीलिमादिशब्दप्रयोगस्य नीलत्वादिजातिविषयतायां इष्टापत्त्या परिहर्तुम्, 'घटस्य नैल्यम्' 'घटस्य नीलत्वम्' इति प्रतीतिव्यवहाराणां विषयैक्यानुभवात्। न च वाच्यम् 'पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन' इति सूत्रभाष्ये गुणवाचिना सह षष्ठीसमासनिषेधस्य बलाकायाः शौक्ल्यं काकस्य कार्ष्ण्यम्— इत्युदाहृतम्, अतः ष्यञादिप्रत्ययान्तानां गुणवाचिशब्दानां शुक्लत्वादिगुणवाचित्वमेव अङ्गीकर्तव्यमिति; तस्मिन्सूत्रे गुणशब्दस्य रूपादिपञ्चकासाधारण्याभावात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इत्यादिसूत्रेष्विव धर्मान्तरसाधारण्यात्। अत एव भाष्ये कण्टकस्य तैक्ष्ण्यम्— इत्यपि गुणवाचिना सह षष्ठीसमासनिषेधस्य उदाहरणान्तरं दर्शितम्। अवश्यं च नीलत्वादिजातिष्वपि त्वया नीलिमादिशब्दोऽभ्युपेयः। अन्यथा तासु नीलत्वादिशब्दोऽपि न स्यात्। भावार्थत्वेन त्वतलोः इमनिजाद्यविशे-

षात् । तस्मादिष्टापत्त्या परिहारसंभवात् शक्तिपक्षे 'नीलो
घटः' इत्यादिप्रतीतिव्यवहारयोः त्वदभिमतं नीलगुणवि-
शिष्टविषयत्वं न सिध्येदिति तत्सिद्धिमन्विच्छता लक्षणैवाश्रय-
णीया इति अप्रयोजकं त्वदनुमानम्, मदनुमानं च नाप्रयो-
जकमिति ॥

अथ त्रयोदशी---

यदि साक्षात्परंपरासंबन्धाभ्यां गुणगतजातिरेव गुण-
गुणिनोः नीलादिशब्दप्रवृत्तौ निमित्तमिति सैव नीलिमादि-
शब्दभागपि भवेत्, तदा 'घटस्य नीलिमा' इतिवत् 'घटरू-
पस्य नीलिमा' इत्यपि व्यवहारः प्रसज्येत। न चैवं सति स
नीलत्वशब्दभागपि न भवेत् इति वाच्यम्, न हि वर्णदृढा-
दिसूत्रेण त्वतलोर्विधिः; येन द्रव्यविषयेभ्य एव नीलादिश-
ब्देभ्यस्तावपि स्याताम्; किं तु 'तस्य भावस्त्वतलौ' इति
सूत्रेण। तत्र च 'तस्य' इति षष्ठीसमर्थमात्रात् त्वतलौ विधी-
यमानौ गुणवाचिभ्योऽपि नीलादिशब्देभ्यो भवेतामेव। अपि
च द्रव्येष्वपि नीलादिशब्दानां यदि नीलत्वादिजातिरेव प्रवृ-
त्तिनिमित्तं भवेत्, तदा तेभ्यो नीलत्वादिविशिष्टतयैव
द्रव्याणां प्रतीतिः स्यात्; न तु नीलत्वादिविशिष्टगुणविषय-
तया। तथैव च तेभ्यस्तत्प्रतीतिरभ्यर्थ्यते; मतुब्लोपानुशा-

T

सनदर्शनात् व्यवहारमूलभूतप्रत्यक्षानुसाराच्च । प्रत्यक्षेण यथाभूतमर्थम् आप्तः पश्यति, तथाभूतार्थबुबोधयिषया स वाक्यं प्रयुङ्क्ते । श्रोतुश्च वक्तृतात्पर्यमवगच्छतः ततो वाक्यात्तथाभूतार्थविषय एव प्रत्ययो भवतीति वस्तुस्थितिः । इह च नीलं घटमवलोकयतः पुरुषस्य नीलगुणविशिष्टद्रव्यविषयिणी बुद्धिः जायते ; न तु नीलगुणगतनीलत्वजातिविशिष्टद्रव्यबुद्धिः ; रूपरूपिणोः समानवित्तिवेद्ययोः प्रकारप्रकारिभावेन भाननियमस्य सर्वसंप्रतिपन्नत्वात् । तथा च प्रत्यक्षमूलः 'नीलो घटः' इति व्यवहारः तज्जन्यशाब्दप्रत्ययश्च कथं नीलगुणविशिष्टद्रव्यविषयौ न भवेताम् । न च 'नीलो घटः' इति प्रतीतेः 'नीलो गुणः' इति प्रतीत्यविशेषानुभवस्यापि सामञ्जस्यार्थं मतुब्लोपमनपेक्ष्य 'नीलो घटः' इति व्यवहारो नीलत्ववैशिष्ट्यविषयः, तमपेक्ष्य तद्व्यवहारो नीलगुणवैशिष्ट्यविषयः— इति कल्प्यतामिति वाच्यम् ; मतुब्लोपवार्तिकानन्तरं प्रवृत्तेन 'अव्यतिरेकात्सिद्धमिति चेद्दृष्टो व्यतिरेकः' इति वार्तिकेन—शुक्लादिशब्दैरभिधीयमानानां गुणानामव्यतिरेकात् गुण्यव्यभिचारात् शुक्लं वस्त्रम् इति गुणिना सहैवाभिधानात् शुक्लादिशब्दशक्त्यैव गुण्यभिधानसिद्धेः मतुब्लोपानुशासनं

व्यर्थमिति शङ्कामुद्भाव्य, वस्त्रस्य शुक्लः इति गुणाभिधानस्य गुणिव्यभिचारदृष्टेः केवलगुणवाचकोऽपि शुक्लादिशब्दोऽस्तीति तस्य द्रव्यपर्यन्तत्वविवक्षायां मतुपः प्राप्तौ तल्लोपानुशासनं मार्थकमिति परिहारार्थं प्रवृत्तेन—मतुल्लोपानपेक्षस्यापि द्रव्येषु शुक्लादिशब्दस्य गुणिविशिष्टाभिधायकत्वावगमात् शब्दशक्तिनिर्णयाभियुक्तवृद्धव्यवहारविरुद्धस्य लौकिकानामितरसारूप्यानुभवस्य प्रमाणीकरणायोगात्। तत्प्रमाणीकरणे लुप्तमतुप्प्रयोगजन्यज्ञानात्यन्तसारूप्यानुभवबलात् तदन्यस्यापि 'नीलो घटः' इति ज्ञानस्य गुणवैशिष्ट्यविषयत्वकल्पनस्यैव उचितत्वात्। 'नीलो घटः' इति प्रयोगयोरेव सारूप्यम्, न तज्जन्यज्ञानयोरिति कल्पने 'नीलो गुणः' 'नीलो घटः'— इति प्रयोगयोरेव नीलत्वांशे सारूप्यम् न तज्जन्यज्ञानयोरिति वक्तुं शक्यत्वात्। तस्मात् अव्यतिरेकवार्तिकानुरोधाय 'घटरूपस्य नीलिमा'— इत्यादिव्यवहारप्रसङ्गपरिहाराय च द्रव्येषु नीलादिशब्दानां नीलादिगुणा एव प्रवृत्तिनिमित्ततया स्वीकार्याः। न तु नीलत्वादिजातयः; इत्यतः त्वदुक्तदोषप्रसक्त्यभावेन नीलादिशब्दानां नीलगुणादिविशिष्टेषु द्रव्येषु शक्तेरवश्याश्रयणीयत्वात् सिद्धं घटादीनां नीलादिशब्दवाच्यत्वसाधकं मदनुमानं

T

नाप्रयोजकम्, तेषां तद्वाच्यत्वसाधकं त्वदनुमानमेव अप्रयोजकमिति ॥

इति गुणगुण्यनेकशक्तिवादः ॥ ४ ॥



T

# गुणगुण्येकशक्तिपक्षश्रेयस्त्ववादः ॥



एवं नीलादिशब्दानां गुणगुणिविषयैकानेकशक्तिपक्षौ द
र्शितौ । अनयोरेकशक्तिपक्ष एव श्रेयानिति निर्णयार्थं क
प्रस्तूयते——

तत्र नीलो घटः इति घटपदसमानाधिकरणनीलप
गता शक्तिः नीलगुणविशिष्टविषया, नीलगुणप्रवृत्तिनिमि
केति यावत्, नीलगुणशक्तपदगतघटविषयकशक्तित्वात्,
नीलगुणशक्तपदगता घटविषयकशक्तिः, सा नीलगुणविशि
विषया——यथा प्रकृतनीलगुणविशिष्टपरामर्शिनः 'स घट
इति वाक्ये श्रुतस्य सर्वनाम्नः शक्तिः । हेतौ नीलगुण
क्तत्वं नीलत्वजात्या प्रवृत्तिनिमित्तेन विवक्षितम्, अतः नी
लगुणघटोभयविषयवस्तुपदादिशक्तौ न व्यभिचारः——इ
पूर्वपक्षिणः प्रथमा कक्ष्या ॥

गौरवलक्षणप्रतिकूलतर्कपराहतामिदमनुमानम्, नील
जात्या प्रवृत्तिनिमित्तेन नीलगुणे शक्तस्य नीलपदस्य नीलगु
प्रवृत्तिनिमित्तेन द्रव्ये शक्त्यन्तरस्वीकारे हि अनेकार्थत्वल

गौरवं स्यात् । अतः पक्षीकृतेयं शक्तिः न नीलगुणविशिष्टविषया, नीलत्वजातिप्रकारकबोधानुकूलशक्तित्वात्, या नीलत्वजातिप्रकारकबोधानुकूला शक्तिः, सा न नीलगुणविशिष्टविषया—यथा तदीयनीलगुणविषया शक्तिः । परमते नीलपदस्य गुणविषया शक्तिः पक्षीकृतद्रव्यविषयशक्तितो भिन्ना दृष्टान्तः । मन्मते पक्षीकृतैव शक्तिः गुणविषयत्वाकारेण दृष्टान्तः । साध्यसाधनवत्त्वेन संप्रतिपत्तिर्हि दृष्टान्तत्वप्रयोजका । न तु सर्वथा पक्षादन्यत्रापि इति द्वितीया कक्ष्या ॥

अनेकशक्तिकल्पनागौरवं न मदनुमानबाधकम्, 'नीलो घटः' 'नीलो गुणः' इति प्रयोगद्वयनिर्वाहकतया तस्य प्रामाणिकत्वात् । न हि गुणविषयशक्त्या गुणिविषयस्यापि व्यवहारस्य निर्वाहोऽस्ति । न च लक्षणया तन्निर्वाहः त्वयापि अभ्युपगम्यते । अतः त्वदनुमानमेव 'नीलो घटः' इति प्रयोगासंभवलक्षणप्रतिकूलतर्कपराहतम्—इति तृतीया कक्ष्या ॥

गुणगतनीलत्वजात्यैव प्रवृत्तिनिमित्तेन गुण इव द्रव्येऽपि प्रवृत्तिः संभवति, लाघवेन साक्षात् परंपरया वा प्रवृत्तिनिमित्ताश्रयमात्रस्य शब्दवाच्यताप्रयोजकत्वात् । तस्मात् एकयैव शक्त्या प्रयोगद्वयस्यापि निर्वाहात् मदनुमानं न प्रतिकूल-

T

तर्कबाधितम्, त्वदनुमानमेव तद्बाधितम्— इति चतुर्थी कक्ष्या ॥

एवं सति 'नीलो घटः' इत्यस्य नीलत्वजातिविशिष्टो घटः इत्येवार्थः स्यात्; न तु नीलगुणविशिष्टो घट इति। नीलगुणविशिष्टो घटः इत्येव च तदर्थो वर्णनीयः नीलगुणविशिष्टप्रत्यक्षमूलकस्य प्रत्यक्षदृष्टार्थबुबोधयिषया प्रयुक्तस्य तस्य तदेकविषयत्वनियमात्; मतुब्लोपानुशासनेन मतुबन्तप्रयोगसमानार्थत्वावगतेश्च; नीलगुणविषयनीलिमादिशब्दगतभावप्रत्ययानुरोधाच्च; यः शब्दो यद्धर्मविशिष्टे प्रवर्तते ततो भावप्रत्ययः तस्मिन्धर्मे— इति नियमदर्शनात्। अस्मादनेकशक्तिकल्पनावश्यंभावात् मदनुमानं न गौरवलक्षण प्रतिकूलतर्कपराहतम्, त्वदनुमानमेव 'नीलो घटः' इति प्रयोगासंभवरूपतर्कपराहतम्—इति पञ्चमी कक्ष्या ॥

नीलगुणवैशिष्ट्यविषयप्रत्यक्षावगतार्थतात्पर्येण प्रयुक्तस्य 'नीलो घटः'— इत्यस्य नीलगुणवैशिष्ट्यप्रतिपादकत्वं भवतु नाम। तावता नीलशब्दस्य नीलगुणविशिष्टे शक्तिर्न सिध्यति; त्वदुदाहृतस्य मतुब्लोपानुशासनस्यैव तत्प्रतिकूलत्वात् नीलशब्दमात्रस्य नीलगुणवैशिष्ट्यप्रतिपादनसामर्थ्ये तदनुशासनवैयर्थ्यापत्तेः। केवलगुणवाचकाः ये नीलादिशब्दाः

तेभ्यो मतुपः प्रसक्तिरस्तीति तल्लोपानुशासनं सार्थकमिति चेत्; न, तेभ्य एव लुप्तमतुप्प्रत्ययेभ्यो गुणिप्रतीत्युपपत्तौ स्वतो गुणविशिष्टशक्तियुक्तनीलादिशब्दकल्पने प्रमाणाभावात्। गुणवाचिनामेव मतुब्लोपे सति लुप्तमतुबर्थावगमार्थं गुणविशिष्टेऽपि शक्तिरङ्गीकरणीया इति चेत्; न; लुप्तप्रत्ययार्थं लुप्त एव प्रत्ययः स्मृतो बोधयतीति पक्षे तं प्रकृतिर्लक्षयतीति पक्षे च तत्र तेषां शक्तेरनङ्गीकरणीयत्वात्। प्रत्ययलोपस्थले प्रकृतेस्तदर्थेऽपि शक्त्यन्तरकल्पनाभ्युपगमे तादृशस्थले लाघवात् प्रत्ययार्थमात्रे प्रकृतेः शक्त्यन्तरकल्पनेन एकप्रत्ययोपात्तसंख्याकारककृतीष्टसाधनत्वादिरीत्या प्रकृतिगतसामान्यविशेषशक्त्युपस्थापितयोः प्रकृत्यर्थलुप्तप्रत्ययार्थयोः संसर्गप्रतीतेरुपपादयितुं शक्यतया गौरवपराहतप्रकृत्यर्थविशिष्टप्रत्ययार्थगोचरशक्त्यन्तरकल्पनायोगात्। तस्मान्मदनुमानं न प्रतिकूलतर्कपराहतम्, त्वदनुमानमेव तद्बाधितम्—इति षष्ठी॥

मतुब्लोपानुशासनं लुप्तमतुप्प्रकृत्यंशस्यैव गुणविशिष्टे शक्तिरस्तीत्यत्र ज्ञापकत्वेन नोपन्यस्तम्, येन तदनुशासनं तत्प्रतिकूलं स्यात्। किंतु द्रव्ये प्रवर्तमानस्य नीलशब्दस्य नीलगुणविशिष्टपर्यन्तप्रतिपादकत्वम् अङ्गीकरणीयम्; न तु नीलत्वाश्रयमात्रप्रतिपादकत्वम्— इत्यत्र ज्ञापकत्वेन। न

च तावता नेष्टसिद्धिः, मतुप्प्रकृत्यंशस्य गुणविशिष्टे शक्तिं विना तत्प्रतिपादकत्वस्य निर्व्यूढत्वादिति वाच्यम्; तेन प्रकृत्यंशस्य गुणविशिष्टे शक्त्यसिद्धावपि मतुब्लोपं विना द्रव्ये प्रयुज्यमानस्यापि नीलादिशब्दस्य तत्तुल्यन्यायेन गुणविशिष्टपर्यन्तत्वसिद्धौ ततः तस्य तत्र शक्तिसिद्धेः। न च तथाभूतनीलशब्दान्तरसद्भावे प्रमाणाभावः, मतुब्लोपानुशासनवार्तिकानन्तरं प्रवृत्तस्य 'अव्यतिरेकात्सिद्धमिति चेत् दृष्टो व्यतिरेकः' इति वार्तिकस्य तत्र प्रमाणत्वात्। तद्धि वार्तिकम् 'नीलो घटः' इति स्वत एव नीलशब्दस्य द्रव्यपर्यन्तत्वदृष्टेः मतुबनुशासनम् व्यर्थम्— इति शङ्कामुद्भाव्य द्रव्यपर्यन्तवत् गुणमात्रविश्रान्तोऽपि अस्ति नीलादिशब्दः, 'घटस्य नीलो गुणः' इत्यादिव्यवहारदर्शनात्। ततश्च गुणमात्रविश्रान्तस्य नीलादिशब्दस्य द्रव्यपर्यन्तत्वविवक्षायां मतुबुत्पत्त्या तच्छ्रवणं स्यात्, तन्माभूत्— इत्येतदर्थं तल्लोपानुशासनमिति परिहारं दर्शयितुं प्रवृत्तम्। तेन मतुब्लोपं विना द्रव्ये प्रवर्तमानो नीलादिशब्दोऽस्तीति स्पष्टमेव अवसीयते। तस्मात् गौरवस्य प्रामाणिकत्वात् मदनुमानं न प्रतिकूलतर्कबाधितम्, त्वदनुमानमेव तद्बाधितम्— इति सप्तमी ॥

द्रव्यपर्यन्तनीलादिशब्दसद्भावे प्रमाणाभावो मया नोक्तः ; किंतु गुणविशिष्टरूपेण द्रव्यपर्यन्तस्य सद्भावे । न च ' अव्यतिरेकात्सिद्धम् ' इत्यादिवार्तिकं गुणविशिष्टरूपेण द्रव्यपर्यन्तस्य तस्य सद्भावे प्रमाणम् , तस्य नीलत्वादिजातिविशिष्टे तत्र शक्तिसद्भावे प्रामाण्येनापि चारितार्थ्यात् । लाघवेन साक्षात्परंपरासाधारण्येन प्रवृत्तिनिमित्ताश्रयत्वमात्रस्य शब्दवाच्यत्वप्रयोजकतया नीलत्वजातिविशिष्टे द्रव्ये तस्य शक्त्यवश्यंभावेन तत एतस्य वार्तिकस्य उपपत्त्या नीलगुणविशिष्टे द्रव्ये शक्त्यन्तरकल्पनायाः अप्रामाणिकत्वाच्च । अव्यतिरेकवार्तिकस्य ' नीलो गुणः ' इति गुणवत् ' नीलो घटः ' इति द्रव्यस्यापि गुणगतनीलत्वजात्याश्रयतया प्रतीयमानत्वेन गुणगुणिनोः अव्यतिरेकात् अभेदात् गुण इव द्रव्येऽपि मतुब्लोपं विनैव सिद्धम् ' नीलो घटः ' इति व्यवहारप्रयोजकम्— इति शङ्कामुद्भाव्य ' घटस्य नीलः ' इति गुणगुणिनोर्भेददृष्टेः ' नीलो घटः ' इति प्रतीतिः परंपरया नीलत्वाश्रयविषयेति द्रव्ये नीलगुणवैशिष्ट्यबुबोधयिषायां गुणविषयनीलादिशब्दात् मतुपः प्राप्तौ तल्लोपानुशासनम्— इति परिहारार्थत्वोपपत्तेः । तस्मात् त्वदनुमानं प्रतिकूलतर्कपराहतम् , मदनुमानं च न तद्बा-

T

धितम्— इति अष्टमी ॥

द्रव्यस्य नीलत्वजात्याश्रयत्वे स्यादेतदेवम्; तत्रैव नास्ति प्रमाणम्। न च आश्रयाश्रयमात्रम् आश्रयद्वारा भवत्या-श्रयः— इति नियमोऽस्ति, रूपत्वघटत्वादिकं प्रति घटभूत-लादीनामाश्रयत्वात्। न च 'नीलो घटः' इति प्रतीति-बलादेव घटस्य नीलत्वाश्रयत्वमभ्युपगन्तव्यम्; तस्य द्रव्य-विषयलुप्तमतुबन्तप्रयोगसमानार्थतौचित्यात्। न हि द्रव्य एव तत्तुल्यप्रयोगस्य क्लृप्तं विषयं विना विषयान्तरक-ल्पनं युक्तम्। अतः शक्त्यन्तरकल्पनागौरवस्य प्रामाणि-कत्वात् मदनुमानं न प्रतिकूलतर्कबाधितम्, त्वदनुमान-मेव बाधितम् इति नवमी ॥

अथ दशमी कक्ष्या—

घटस्य नीलत्वाश्रयत्वे मा भूत् प्रमाणान्तरगवेषणा; 'नीलो घटः' इत्यव्यतिरेकप्रयोग एव तत्र प्रमाणम्; तत्र नीलशब्दस्य 'नीलो गुणः' इति प्रयोगसाम्येन नीलत्ववै-शिष्ट्यविषयत्वात्। द्रव्यविषयलुप्तमतुबन्तप्रयोगसाम्येन नीलगुणवैशिष्ट्यविषयत्वकल्पने 'गौरोऽहम्' इत्यादिव्रह्मवि-दनुसंधानमूलके प्रयोगे गौरादिशब्दानां गौरादिगुण इव तद्विशिष्टे शरीरे शरीरविशिष्टे जीवे जीवविशिष्टे अन्तर्या-

T

मिणि च शक्तिः कल्पनीया—इत्येवं शक्तिचतुष्टयकल्पनाप्रसङ्गात् । न च तेषां साक्षाद्गुणविशिष्ट एव शक्तिः, अन्यत्र लक्षणेति न उक्तदोषप्रसङ्गः इति वाच्यम्; तथा सति तत्पर्यवसानदृष्टान्तेनैव अन्तर्यामिणि सर्वशब्दपर्यवसानव्यवस्थापनाय दृष्टान्तं संपादयितुं प्रवृत्तस्य अस्य वादस्य तत्प्रतिकूलत्वापत्तेः । न च साक्षात्परंपरासाधारण्येन नीलगुणवैशिष्ट्येनैव अन्तर्यामिपर्यन्तं शक्तिरिष्यत इति वाच्यम्; तथा सति साक्षात् परंपरया वा गुणगतजातिवैशिष्ट्येनैव तत्पर्यन्तं शक्तिरुपपद्यत इति शक्तिद्वयकल्पनस्यापि त्यागौचित्यात् । तस्मात् अनेकशक्तिकल्पनस्य अप्रामाणिकत्वात् त्वदनुमानं प्रतिकूलतर्कपराहतम्, मदनुमानं न तद्बाधितमिति ॥

अथैकादशी—

घटस्य नीलत्वजात्याश्रयत्वमक्लृप्तं धर्मं परिकल्प्य 'नीलो घटः' इत्यस्य तद्विषयत्वकल्पनात् क्लृप्तस्य नीलगुणवैशिष्ट्यस्यैव गुरोरपि तद्विषयत्वकल्पनं न्याय्यः । शक्तिचतुष्टयं तु न प्रसज्यते, गुणे गुणविशिष्टे च समर्थितेनैव शक्तिद्वयेन सर्वनिर्वाहात् । सर्वाधारस्य अन्तर्यामिणः गुणस्येव गुणगतजात्याश्रयतया गुणशक्त्यैव अन्तर्यामिणि अर्शआ-

द्यजन्ततया जीवे च प्रयोगनिर्वाहात् । 'अर्शआदिभ्योऽच्' इति सूत्रगृहीते अर्शआदिगणे पठितो वर्णशब्दः वर्णविशेषवाची, शुक्लनीलगौरादिशब्दवत् तेभ्य अज्विधानाः शुक्लादिगुणवद्द्रव्यविशिष्टप्रतीतिनिर्वाहार्थम्— इति न्यासकृता उक्तत्वात् । अतः शक्तिद्वयकल्पनस्य प्रामाणिकत्वाः अतिरिक्तशक्तिकल्पनागौरवप्रसङ्गाच्च मदनुमानं न प्रतिकूलतर्कपराहतम्, त्वदनुमानमेव तद्बाधितम् इति ॥

अथ द्वादशी—

साक्षात् गुणगतजात्याश्रयत्वम् अन्तर्यामिणस्तावदसिद्धम् परंपरया तदाश्रयत्वमिष्यते चेत्, परंपराघटकयोः देहजीवयोरपि तदाश्रयत्वम् अनिच्छतापि स्वीकर्तव्यमिति देहतुल्यन्यायतया घटेऽपि गुणगतजात्याश्रयत्वसिद्धेः त्वदापादिताक्लृप्तधर्मान्तरकल्पनागौरवस्य न प्रसक्तिः एकशक्तिपक्ष एव च पर्यवस्येत् । अथापि गुणविशिष्टे देहे पृथक् शक्तिरभ्युपगम्येत, तथा सति तद्विशिष्टे तद्विशिष्टे च पृथक् पृथक् शक्तिरभ्युपेतव्या इति शक्तिचतुष्टयकल्पनागौरवम् अनिवार्यम् । अर्शआद्यजन्ततया वर्णितो जीवे शक्तिं विना निर्वाहोऽपि न युज्यते, वर्णवाचिभ्यः अज्विधानस्य शुक्लादिगुणवद्द्रव्यविशिष्टप्रतीतिनिर्वाहार्थत्वकल्पनायां प्रमाणाभा-

वात् । तस्मात् त्वदनुमानं प्रतिकूलतर्कबाधितम्, मदनुमानं न तद्बाधितम्——इति ॥

अथ त्रयोदशी——

'अक्षरमम्बरान्तधृतेः' इति सूत्रे परमेश्वरस्य सर्वाधारत्वमुक्तम्; तत् साक्षात्सर्वाधारत्व एव संभवति । अतः तस्य अवश्यं साक्षादेव नीलत्वाद्याधारत्वम् अङ्गीकरणीयम् इति न तत्र गुणशक्तिव्यतिरेकेण शक्त्यन्तरकल्पनं प्रसज्यते । न वा गुणशक्त्यैव घटे देहजीवयोश्च प्रयोगनिर्वाहो भवति । गुणवाचिभ्यः अज्विधानं गुणवद्विशिष्टप्रतीतिनिर्वाहार्थम्——इत्यवश्यं कल्पनीयम्, शुक्लगुणविशिष्टैः प्रासादैः विशिष्टे नगरे 'शुक्लं नगरम्' इति प्रयोगनिर्वाहार्थं तदिति न्यासकृतैव उक्तत्वात् । अतः जीवेऽपि शक्त्यन्तरकल्पनं न प्रसज्यते । तस्मात् मदनुमानं न प्रतिकूलतर्कपराहतम्, त्वदनुमानमेव तद्बाधितम्——इति ॥

अथ चतुर्दशी——

साक्षादाश्रय एव आधार इति न नियमः; तृणवस्त्रान्तरितघटादिधारकत्वस्य पुरुषभूतलादिषु पर्यवसानदर्शनात् पुरुषस्य घटादिधारणप्रयुक्तक्लेशोदयेन कूपाच्छादनेषु तृणेषु कूपस्योपरि प्रसारिते वस्त्रे वा घटादिनिधाने सति तदनव-

स्थानतः तृणादीनां तद्धारणशक्त्यभावनिर्णयेन च तत्पर्यवसानावसायात् । अतः परमेश्वरस्य साक्षात् नीलत्वाश्रयत्वं नीलगुणाश्रयत्वं वा नाभ्युपेतव्यमिति न गुणशक्त्या गुणिशक्त्या वा तत्र गुणवचनप्रयोगनिर्वाहः । गुणवाचिभ्यो विहितस्याचो गुणवत्त्वमेवार्थः न तु गुणवद्वैशिष्ट्यम् । 'शुक्लं नगरम' इत्यादिव्यवहारस्तु मद्रीत्या नगरस्य परंपरया शुक्लत्वजात्याश्रयतया निर्वाह्यः । त्वद्रीत्या गुणवति गुणवद्विशिष्टेऽपि; न तु अर्शआद्यचा तद्विधानस्य गुणवद्विषयकत्वमपहाय गुणवद्विशिष्टविषयत्वकल्पनेन; गुणवति प्रसक्तयोः इनिठनोः अचा बाधनालाभेन 'नीली' 'नीलिकः' इत्यपि प्रयोगप्रसङ्गात् । तस्मात् गुणे गुणिनि च शक्तिभेदमभ्युपगच्छता गुणवाद्विशिष्टे जीवे तद्विशिष्टे अन्तर्यामिणि च पुनरपि शक्तिद्वयकल्पनं आपतेत्— इति अनिवार्यं गौरवम् । अतः त्वदनुमानं प्रतिकूलतर्कपराहतम्, मदनुमानं न तद्बाधितम्— इति ॥

अथ पञ्चदशी—

धारकमात्रस्य साक्षात् आधारतानियमाभावेऽपि उपादानतया धारकस्य अस्ति तन्नियमः; सर्वोपादानं च परमेश्वरः; अतः तस्य नीलत्वनीलगुणादिकं प्रत्यपि साक्षादाधा-

रत्वस्य अवश्याश्रयणीयत्वात् गुणशक्त्या गुणिशक्त्या वा तस्मिन् वर्णवाचिशब्दप्रयोगो निर्वहतीति न तत्र शक्त्यन्तरकल्पनागौरवं प्रसज्यते । अज्विधानं गुणवद्विषयमेव इति नियमो न अभ्युपगम्यते; किं तु गुणवद्विषयं गुणवद्विशिष्टविषयं च इत्यभ्युपगम्यते । अर्शआदिगणे पठितेन च वर्णशब्देन 'वर्णो वर्णेन' इति सूत्रपठितेनेव गुणशक्तानां गुणिशक्तानां च शुक्लादिशब्दानां ग्रहणात् । एवं सति इनिठनोर्बाधनम 'शुक्लं नगरम' इत्यादिप्रयोगनिर्वाहश्च इत्युभयमपि अञ्जसा उपपद्यते— इति न गुणवद्विशिष्टनगरे जीवे च शक्त्यन्तरकल्पनागौरवं प्रसज्यते । तस्मात् जीवे परमेश्वरे च विनैव शक्त्यन्तरकल्पनं गुणवचनप्रयोगनिर्वाहात मदनुमानं न प्रतिकूलतर्कपराहतम्, त्वदनुमानमेव तद्बाधितम्—— इति ॥

अथ षोडशी——

यत्परिणामितया उपादानम्, तस्यैवावस्थाविशेषविशिष्टपरिणामरूपस्य एकदेशं प्रति साक्षादाधारत्वं नियतम्— यथा अन्तःकरणस्य स्ववृत्तिं प्रति । न च परमेश्वरः तथा उपादानम, निर्विकारत्वात्; किं तु प्रकृत्यधिकरणोक्तन्यायेन प्रपञ्चाकारपरिणामिचिच्छक्त्यपृथक्सिद्धाश्रयतया ।

T

अतः परमेश्वरस्य उपादानत्वेऽपि न साक्षान्नीलगुणाद्याश्रय वाच्यमिति न तेन तत्र गुणशक्त्या गुणिशक्त्या वा गुणवच प्रयोगनिर्वाहः। परंपरया नीलत्वजात्याश्रयत्वमवलम्ब्य त गुणशक्त्या तन्निर्वाहः क्रियते चेत्, गुणिनः प्रयोगोऽ तथैव निर्वहतीति तव गुणिशक्तिरपि न सिध्येत्। अवि धानं मतुब्लोपविधानवत् गुणवद्द्रव्यविषयमेव; न तु गु णवद्द्रव्यतद्विशिष्टोभयविषयम्; अन्यथा मतुब्लोपविधा तदुभयविषयम् अज्विधानं केवलगुणवद्विषयमिति वैपरीत्य स्यापि कल्पनापत्तेः। गुणवद्विशिष्टविषयस्यापि कस्यचि मत्वर्थीयप्रत्ययस्य कल्पने गौरवम्। पुत्रभार्यादिषु गौरादि मत्सु पितृभर्त्रादिषु 'गौरोऽयम्' इति व्यवहारापत्तेः गुणवद्विशिष्टविषयवत् तद्विशिष्टविषयस्यापि कल्पयितुं श क्यतया अन्तर्यामिण्यपि गुणवचनानां शक्त्यसिद्ध्या पत्तेश्च— शक्यते हि गुणिदेहशक्ताद्गौरादिशब्दात् अ र्शआद्यचा देहविशिष्टजीवग्रहणे सति ततो मतुब्लोपं अन्तर्यामिण्यपि प्रयोगनिर्वाहः कर्तुम्। मत्वर्थीयप्रत्य यान्तात् पुनस्तत्सरूपस्य प्रत्ययान्तरस्यानिष्टावपि 'दण्डि मती शाला' इत्यादौ तद्विरूपस्य तस्य संप्रतिपन्नत्वात् साक्षात् परंपरया वा गुणगतजात्याश्रयत्वेन गुणशक्ति

T

परमेश्वरसाधारणी सिध्येत्— इति शङ्का तु प्रागेव निरस्ता । न च घटादीनां परम्परया वा गुणगतजात्याश्रयत्वाभावेऽपि परमेश्वरस्य परम्परया तदाश्रयत्वमस्त्येव, अन्यथा तस्य तद्धारकत्वाभावप्रसङ्गात्— इति वाच्यम्; तथा सति परम्पराघटकयोर्देहजीवयोरपि तदाश्रयत्वक्लृप्ततायाः वक्तव्यत्वेन तत्क्लृप्तेरेव न्यायतौल्येन घटादिष्वपि तत्क्लृप्तिरूपतापत्त्या तव गुणशक्तिभिन्नाया गुणिशक्तेरप्यसिद्धिप्रसङ्गात् । गुरुत्वे सति आपतति द्रव्य एव धारकापेक्षणेन स्वधर्म्याश्रयणमात्रनिर्वृतेषु जात्यादिषु तदनपेक्षणाच्च । तस्मात् सर्वान्तर्यामिणः परमेश्वरस्य सर्वशब्दवाच्यत्वमिच्छता त्वया मत्वर्थीयप्रत्ययादिसाध्यनिर्वाहदुराशयमपहाय गुणवचनानां गुणगुणिनोरिव गुणविशिष्टे जीवे जीवविशिष्टेऽन्तर्यामिणि च भिन्नभिन्ना शक्तिरभ्युपेतव्या— इत्यनिवार्यं शक्तिचतुष्टयकल्पनागौरवमिति त्वदनुमानं प्रतिकूलतर्कबाधितम्; मदनुमानं न तद्बाधितम् । तस्मात् उक्तगौरवपरिहारार्थम् 'नीलो घटः' 'मम देहो गौरः' 'गौरोऽहम्' इत्यादिप्रतीतिव्यवहाराणां परम्परया गुणगतजात्याश्रयत्वविषयत्वमभ्युपगम्य गुणशक्तिरेव गुणिषु घटदेहादिषु देहविशिष्टेषु जीवेषु जीवविशिष्टेऽन्तर्या-

मिणि च प्रसृता भवतीति एकशक्तिपक्ष एवाङ्गीकरणीयः। अवश्यम् 'पाण्डुरहम्' 'बभ्रुरहम्' 'श्वेतोऽहम्' 'दे... इत्यजन्तत्वादिसंभावनारहितप्रतीतिव्यवहारेषु एषैव गति... श्रयणीया । न हि देहात्मभ्रमसमयेष्वेव 'पाण्डुरह... इत्यादिव्यवहारः, देहविविक्तात्मज्ञानसमयेषु तु अजन्तत्वा... दिसंभावनास्पदगौरादिशब्दव्यवहारमात्रमिति त्वत्कल्पि... मर्यादानुसारेण नियन्तुं शक्यते। एतेन अक्लृप्तधर्मान्तरक... ल्पनागौरवशङ्कापि निरस्ता; 'बभ्रुरहम्' इत्यादिव्यवहारे... तत्कल्पनावश्यंभावात्। शक्तिचतुष्टयकल्पनापेक्षया अस्य गौ... रवस्य लाघवरूपत्वाच्च। एवम् 'शुक्लं नगरम्' इत्यादिव्यव... हारेष्वपि शुक्लत्वादिपरम्परासंबन्धाश्रयणमेव गतिः। तत्रा... हि 'पाण्डु नगरम्' 'अश्वेतन्नगरम्' 'अदह्यत नगरम्' इत्यादिव्यवहारेषु एवं गतिरवश्यमाश्रयणीया। तथैव 'अ... पुष्प्यद्वनम्' 'अदह्यत वनम्' इत्यादिव्यवहारो दृश्यते... यदि तु एकदेशस्थानां वृक्षाणां वनशब्दार्थत्वात् तेषु सा... क्षादेव पुष्पदहनादिसंबन्धोऽस्तीत्युच्येत, तदा न्यायतौल्या... संख्यासंनिवेशविशिष्टा गृहा एव नगरपदार्थतामापद्येरन्नि... तेषु साक्षात् शुक्लादिगुणसंबन्धसत्त्वात् 'शुक्लं नगरम्' इत्या... दिव्यवहारनिर्वाहार्थम् अज्विधानस्य गुणवद्द्रव्यविषयत्वक...

ल्पनादुराशा नितान्तं निरालम्बना स्यात् । 'नगरे गृहाः' इति व्यवहारात् गृहविशेषाणामाश्रयः प्रदेशो नगरम् इति चेत्, वने वृक्षाः— इति व्यवहारात् वृक्षविशेषाणामाश्रयः प्रदेशो वनम् इति तुल्यम् । तस्माद्वनपुष्पितत्वव्यवहारतौल्यादपि नगरशौक्ल्यादिव्यवहारः परम्परासंबन्धावलम्बनः । एतेन 'वर्णो वर्णेन' इति सूत्रगतेनेव अर्शआदिगणगतेनापि वर्णशब्देन गुणशक्तानां गुणिशक्तानां च शुक्लादिशब्दानां ग्रहणमवर्जनीयम्—इत्यपि शङ्का निरस्ता । यथा 'वर्णदृढादिभ्यः ष्यञ्च' इति सूत्रगतेन धर्मिपरदृढादिशब्दसाहचर्यात् गुणिशक्तानामेव ग्रहणम्, तथा अत्र पूर्वोक्तबाधकवशात् 'श्वेतरक्तः पाटलीकुसुमवर्णः' 'श्वेतरक्तं पाटलीकुसुमम्' इति तदुदाहरणवत् एतदुदाहरणस्य कस्यचित् उभयविधशुक्लादिशब्दग्रहणापेक्षस्य अदर्शनाच्च अत्र गुणिशक्तानामेव ग्रहणमित्युपपत्तेः । न च मतुब्लोपेनैव गुणविशिष्टप्रतीत्युपपत्तेः अज्विधानं गुणवद्विशिष्टविषयमेव स्यात् इत्यपि शङ्कनीयम्, तथा सति गुणवद्विषये प्राप्तयोः इनिठनोः अचा बाधनाभावप्रसङ्गस्य बाधकस्य उक्तत्वात् । लुप्तमतुबन्तस्य अजन्तस्य च शुक्लादिशब्दस्य रूपाभेदेऽपि अर्थाभेदेऽपि क्तव्यक्तव्यन्यायेन स्वरविशेषसिद्ध्यर्थं प्रत्ययविधानो-

T

पपत्तेश्च । तस्मादेकशक्तिपक्ष एव श्रेयानिति निरव[द्यः]
पन्थाः ॥

इति एकशक्तिपक्षश्रेयस्त्ववादः ॥ ५ ॥



T

# गुणलक्षणापक्षनिरासवादः ॥

केचित् गुणवचनानां शब्दानां गुणविशिष्टेषु द्रव्येषु शक्तिमभ्युपगम्य तद्विशेषणेषु गुणेषु 'गौर्नित्या' इत्यादिप्रयोगगतानां गवादिशब्दानां गोत्वादिष्विव लक्षणां वदन्ति। तन्मते शक्तिः तत्तद्गुणविशिष्टेऽपि न विश्राम्यति; किंतु तत्तद्गुणविशिष्टशरीरविशिष्टजीवविशिष्टान्तर्यामिणि पर्यवस्यति। तथैव च तैरिष्यते। अत एव ते 'स्वर्गकामो यजेत' इत्यादिप्रयोगेषु यागाद्यधिकारिसमर्पकाणां स्वर्गकामादिशब्दानाम् अन्तर्यामिणि शक्तावपि क्षुद्रफलाभिलाषेण अन्तर्यामिण ईश्वरस्य यागादिप्रवृत्त्यसंभवात् मुख्यार्थानुपपत्त्या तद्विशेषणे स्वर्गकामनावति जीवे लक्षणेत्याहुः। तमिममन्तर्याम्येकशक्तिवादं निरसितुं कथा प्रस्तूयते—

तत्र नीलगुणः न स्वातन्त्र्येण नीलशब्दशक्तिविषयः, नीलशब्दशक्तिविशिष्टैकदेशत्वात्, यो नीलशब्दशक्तिविशिष्टैकदेशः, न सः स्वातन्त्र्येण नीलशब्दशक्तिविषयः— यथा नीलत्वजातिविशेषः— इति प्रथमा कक्ष्या ॥

अप्रयोजकमिदमनुमानम्, सद्भाववस्त्वादिशब्दानां स-



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शक्तिविशिष्टैकदेशेषु सत्त्वभावत्ववस्तुत्वादिष्वपि शक्ति
इहाप्युपपत्तेः । तस्मात् नीलगुणः स्वातन्त्र्येण नीलशब्द
क्यः, नीलगुणतद्विशिष्टान्याप्रतियोगिकभेदप्रतियोगित्वा
यत् नीलगुणतद्विशिष्टान्याप्रतियोगिकभेदप्रतियोगि, त
स्वातन्त्र्येण नीलगुणशक्यम्– यथा नीलगुणविशिष्टम्-
इति द्वितीया ॥

न अप्रयोजकं मदनुमानम्, सत्तादिषु सद्व्यवहारद
नेन 'प्रमाणं शरणं वृत्तौ न भिन्नाभिन्नते यतः' इति न
यमनुसृत्य सत्तादिस्थित्यभ्युपगमात् सत्तादीनां प्रवृत्ति
मित्तवतां स्वातन्त्र्येण सदादिशब्दशक्यत्वेऽपि नीलगुणा
नां नीलगुणादिरूपप्रवृत्तिनिमित्तानाश्रयतया स्वातन्त्र्येण नी
लादिशब्दशक्यत्वं न संभवति— इत्येवंरूपानुकूलतर्कसद्भ
वात् गुणगतनीलत्वादिजातीनामपि नीलादिशब्दप्रवृत्तिनि
मित्तत्वकल्पने गौरवात् । अतः नाप्रयोजकं मदनुमानम्
त्वदनुमानमेवाप्रयोजकम्, गुणिनां प्रवृत्तिनिमित्ताश्रयत्व
नीलादिशब्दशक्यत्वेऽपि गुणानां तदनाश्रयतया तदशक्य
त्वोपपत्तेः— इति तृतीया ॥

अथ चतुर्थी—

त्वदनुमानं तावदप्रयोजकमेव, नीलादिगुणानां प्रवृत्ति

निमित्ताश्रयतया नीलादिशब्दशक्यत्वोपपत्तेः। न च तदसिद्धिः, 'नीलो गुणः' इति सार्वलौकिकव्यवहारोपपत्तये नीलत्वादिजातीनामपि तत्प्रवृत्तिनिमित्तत्वाभ्युपगमात्— इति ॥

अथ पञ्चमी—

नीलत्वादिजातीनामपि तत्प्रवृत्तिनिमित्तत्वाभ्युपगमे गौरवं भवेत्। 'नीलो गुणः' इत्यादिव्यवहारस्तु 'गौर्नित्या' इत्यादिव्यवहारः गोशब्दस्य गोत्व इव नीलादिशब्दानां गुणेषु लक्षणयापि उपपद्यते— इति ॥

अथ षष्ठी—

उक्तगौरवं न दोषः, मतुब्लोपानुशासनशास्त्रप्रापितस्य प्रामाणिकत्वात्। तद्धि शास्त्रं नीलादिगुणविशिष्टद्रव्यप्रतीत्यर्थम्। तेन तत्प्रकृतीनां नीलादिशब्दानां गुणेषु शक्तिः सिध्येत्। रूपवानित्यादिमतुबन्तप्रकृतीनां रूपादिशब्दानामिव— इति ॥

अथ सप्तमी—

मतुब्लोपानुशासनं न नीलगुणवैशिष्ट्यप्रतीत्यर्थम्; किंतु गुणिविषयाणां तेषां विशेष्यलिङ्गग्राहित्वसिद्ध्यर्थं स्वरविशेषसिद्ध्यर्थं च— 'स्वरलिङ्गविशेषार्थं मतुब्लोपानुशासनम्।

T

विशिष्टवाचकत्वं तु तदायत्तं न मन्महे' इति हि मन्मत[म्]। तस्मात् मतुब्लोपानुशासनानुसारेण न नीलादिगुणानां नी[ला]दिशब्दशक्यत्वसिद्धिरिति नाप्रयोजकं मदनुमानम्, त[्व]दनुमानं तु अप्रयोजकमेव— इति ॥

अथाष्टमी—

स्वरविशेषसिद्ध्यर्थं मतुब्लोपानुशासनम् इति तावद[यु]क्तम्, नीलादिशब्देषु मतुब्लोपायत्तस्वरविशेषसिद्ध्युदाह[र]णस्य कस्यचिददर्शनात् लिङ्गविशेषसिद्ध्यर्थमित्यपि न [यु]क्तम्, शब्दस्वाभाव्यादेव तत्सिद्धेः। दृश्यन्ते हि शब्दा[ः] स्वभावादेव क्वचिदर्थे व्यवस्थितैकलिङ्गाः अन्यत्र द्विलिङ्गा[ः] अपरत्र त्रिलिङ्गाश्च। एकस्मिन्खल्वपि अर्थे केचन शब्दा[ः] स्वभावात् द्विलिङ्गाः त्रिलिङ्गाश्च भूयांसः अर्थभेदेन व्यव[स्]थिताः। व्यवस्थितलिङ्गत्वे एकलिङ्गानुपपत्तिः। तस्मा[त्] 'अव्यतिरेकात्सिद्धमिति चेत्' इति मतुब्लोपानुशासनवै[य]र्थ्याशङ्कोत्तरेण 'दृष्टो व्यतिरेकः' इति शब्दवार्तिकेन— नीलो घटः— इत्यस्य व्यतिरेकवत् घटस्य नीलो गुणः इति व्यतिरेकस्यापि दृष्टत्वात् नीलादिशब्दानां गुणेष्वपि स्वातन्त्र्येण शक्तिसद्भावात् गुणशक्तानां तेषां द्रव्यपर्यन्तत्व[-]विवक्षायां मतुपः प्राप्तौ तल्लोपानुशासनं सार्थकम्— इत्ये[व]

T

वमर्थकेन उक्तरीतिमनुसृत्य न मतुब्लोपानुशासनस्य तदेव प्रयोजनं कल्पयितुं युक्तम्—इति ॥

अथ नवमी—

मतुब्लोपानुशासनं लिङ्गविशेषादिसिद्ध्यर्थमित्येव वाच्यम्, अर्शआदिगणे वर्णशब्दपाठेनैव वर्णविशेषवाचिभ्योऽज्विधानस्य मत्वर्थीयप्रत्ययान्तरबाधकतया गुणविशिष्टबोधनार्थं मतुपः प्रसक्त्यभावात् तद्बाधकतायाम् 'अत इनिठनौ' इति सूत्रतः इनिठनोरपि प्राप्त्या नीली नीलिकः इत्यपि रूपान्तरसिद्धिप्रसङ्गात्; मतुप इव तयोः लोपानुशासनाभावात्। 'दृष्टो व्यतिरेकः' इति वार्तिकं तु मुख्यपरिहारपरं न भवति। अत एव तदनन्तरप्रवृत्तेन 'तथा च लिङ्गवचनसिद्धिः' इति वार्तिकान्तरेण मतुब्लोपानुशासनस्य लिङ्गविशेषादिसिद्ध्यर्थत्वमेव उक्तम्– इति ॥

अथ दशमी—

नीलादिशब्देभ्यो मतुपः प्रसक्तिर्नास्तीत्येतदसिद्धम्, अज्विधानस्य मत्वर्थीयप्रत्ययान्तरबाधकत्वेऽपि मतुप्प्रत्ययबाधकत्वाभावात्। 'प्राणिस्थादातो लजन्यतरस्याम्' इति सूत्रगतस्य अन्यतरस्यांग्रहणस्य सर्वत्रैव मत्वर्थीयप्रकरणे मतुप्समुच्चयार्थत्वेन अनुवृत्तेरिष्टत्वात् सर्वत्रानुवर्तमानस्यापि तस्य

क्वचित्क्वचित् मत्वर्थीयानेकप्रत्ययप्राप्तौ तत्र एकनियम-
सामर्थ्यात् अनभिधानाद्वा बाधनसत्त्वेऽपि गुणवचनेषु त-
धानाङ्गीकारे तल्लोपविधायिशास्त्रावतारवैफल्यप्रसङ्गात्। न
च लिङ्गादिसिद्धिमात्रं तत्प्रयोजनम्; लुप्तस्यापि प्रत्ययस्या-
वत्त्वावश्यंभावेन तन्मात्रस्य तत्फलत्वासंभवात्, तस्या-
जन्ततयैव सिद्धिसंभवाच्च। न चैवं तर्हि तद्वैफल्य-
अभ्युपेयते इति वाच्यम्; तथापि अच्प्रत्ययप्रकृतीनां गु-
शक्तेरप्रतिक्षेप्यतया भाष्यकृदनुमोदितस्य तस्य वैफल्या-
पगमसाहसस्य निष्फलत्वात्। तस्मात् नीलादिशब्दा-
निष्कृष्टेषु गुणेष्वपि शक्तिरस्तीति तेषां द्रव्यपर्यन्तत्ववि-
क्षायां मतुपः प्रसक्तेः तदश्रवणार्थं तल्लोपानुशासनमित्ये-
'सिद्धो व्यतिरेकः' इति वार्तिकोक्तं तस्य तत्फलत्वमवश्य-
मभ्युपगन्तव्यम्। लिङ्गवचनसिद्धिवार्तिकं तु आनुषङ्गि-
प्रयोजनाभिप्रायम्। एवं च नीलादिशब्दानां नीलादिगु-
इव तद्विशिष्टे शरीरे शरीरविशिष्टे जीवे जीवविशिष्टेऽन्तर्या-
मिणि च शक्तिः स्यादिति गौरवापादनमिष्टमेव, प्रामाणि-
कत्वात्। अन्यथा सर्वेषां शब्दानामन्तर्यामिण्येव शक्ति-
अन्यत्र सर्वत्र लक्षणा इत्यभ्युपगमे ब्रह्ममीमांसाधिक-
णेषु अन्यविषयश्रुतिलिङ्गादिमूलकानां पूर्वपक्षाणामनुत्थ-

T

नप्रसङ्गात् । तस्मात् मतुब्लोपानुशासनशास्त्रानुसारेण नीलादिशब्दानां नीलादिगुणेषु शक्तेः तदनुगुणप्रवृत्तिनिमित्तस्य अवश्यमभ्युपगन्तव्यत्वात् तेषां शक्यविशिष्टैकदेशत्वेऽपि सत्तादिन्यायेन शक्यत्वमुपपद्यते इति अप्रयोजकं त्वदनुमानम् , मदनुमानमेव तु उक्तरूपानुकूलतर्कसद्भावात् प्रयोजकमिति सिद्धं नीलादिगुणेष्वपि शक्तिरिति ॥

इति गुणलक्षणापक्षनिरासवादः ॥ ६ ॥



T

# अरुणैकहायनीसामानाधिकरण्यवादः ॥

———*———

एवं गुणवचनानां शब्दानां शक्तिवैचित्र्यादिना गुणिपर-शब्दसामानाधिकरण्येन तद्वैयधिकरण्येन च प्रयोगः संभवतीति स्थितौ 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति वाक्याम्नातम् 'अरुणया' इति पदम् 'पिङ्गाक्ष्या एकहायन्या' इति पदाभ्यां सामानाधिकरण्येन स्वार्थं प्रतिपादयति, तद्वैयधिकरण्येन वा— इति भवति संशयः ॥

तत्र पूर्वमीमांसकाः प्राहुः—एको हायनोऽस्या अस्तीति यौगिकोऽपि एकहायनीशब्दः धेनुशब्दवत् गोसमवेतयौगिकार्थप्रतिपादकत्वात् गोरूपान्यपदार्थपरः । तथा च 'एकहायन्या' इति पदेन एकहायनविशिष्टा गौः सोमक्रयभावनां प्रति करणत्वेन प्रतिपाद्यते । पिङ्गाक्षीशब्दोऽपि बहुव्रीहिसमासत्वात् पिङ्गाक्षत्वगुणविशिष्टे क्वचिदन्यपदार्थे वर्तमानः समभिव्याहृतपदान्तरोपस्थापितं गोद्रव्यमवलम्बते । ततः तृतीयाविभक्तिः विशेषणविभक्तित्वात् प्रयोगसाधुत्वार्था, विशेष्यविभक्तिप्रतिपादितगोद्रव्यगतकरणत्वानुवादिनी वा । 'अरुणया' इत्यत्र तृतीयाविभक्तिस्तु न तद्गतक-

T

रणत्वानुवादिनी; अरुणाशब्दस्य हि पिङ्गाक्षी इति बहुव्रीहेरिव द्रव्यपरत्वावश्यंभावाभावेन उपात्तद्रव्यतया गुणमात्रपरत्वावगमेन च तस्या गुणगतकरणत्वप्रतिपादकत्वसंभवात् । तत्संभवे च कारकविभक्तेरनुवादकत्वेन वैयर्थ्यकल्पनायोगात् । तस्मात् 'अरुणया' इति पदं पिङ्गाक्ष्यैकहायनीपदवैयधिकरण्येन वाक्यार्थप्रतिपादनोपयोगि । तस्य ताभ्यां सामानाधिकरण्यप्रतीतिस्तु विभक्त्यैक्यनिबन्धना भ्रान्तिरूपेति । वयं तु प्रतीतसामानाधिकरण्याबाधेन गुणगतकरणत्वप्रतिपादनसंभवात् न तद्बाधनं युक्तमिति 'अरुणया' इति पदं पिङ्गाक्ष्यैकहायनीपदसामानाधिकरण्येनैव वाक्यार्थप्रतिपादनोपयोगि— इति सिद्धान्तमुररीकुर्मः । तमिमं सिद्धान्तं व्यवस्थापयितुं कथा प्रस्तूयते—

'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति वाक्याम्नातम् 'अरुणया' इति पदम् 'एकहायन्या' इति पदसामानाधिकरण्येन वाक्यार्थप्रतिपादकम्, यथा 'पिङ्गाक्ष्या' इति पदम्— इति प्रथमा कक्ष्या ॥

गुणद्रव्यरूपभिन्नार्थपरयोः अरुणैकहायनीशब्दयोः सामानाधिकरण्यासंभवात् बाधितमिदम् अनुमानम् । न च गुणवचनानां केवलगुण इव गुणिन्यपि सामर्थ्यसद्भावात्

T

'वायव्यं श्वेतमालभेत' इत्यादिवैदिकप्रयोगेषु श्वेतादिशब्दा- नां द्रव्यपर्यन्तत्वस्य 'नैमित्तिके कार्यत्वात्प्रकृते स्यात्तदापत्तेः' इति दशमाध्यायाधिकरणे व्यवहृतत्वाच्च अरुणाशब्दस्यापि द्रव्यपर्यन्तत्वमिष्यताम्, अतो नास्ति सामानाधिकरण्य- बाध इति वाच्यम्; पदान्तरेणानुपात्ते हि द्रव्ये गुणवचना- नां द्रव्यपर्यन्तत्वम्; न तु उपात्तेऽपि; 'पटस्य शुक्लो गुणः' 'एतद्वै पशूनां भूयिष्ठं रूपं यद्रोहितम्' इत्यादिलौकिकवैदिक- प्रयोगेषु उपात्ते द्रव्ये तेषां केवलगुणपरत्वदर्शनेन तथैव व्युत्पत्तिसिद्धत्वात्। तथा च 'श्वेतमालभेत' इत्यादौ पदा- न्तरेण द्रव्यविशेषानुपादानात् श्वेतशब्दस्य गुणवद्द्रव्यपर- त्वेऽपि अत्र एकहायनीशब्देनाविशेषोपादानात् अरुणाशब्दस्य केवलगुणपरत्वं युक्तम्। न च षष्ठ्यन्तेन द्रव्योपादानं केवलगुणपरत्वे प्रयोजकमिति वाच्यम्; लाघवेन द्रव्यो- पादानमात्रस्य एतत्प्रयोजकत्वोपपत्तेः। न च द्रव्योपादान- मात्रमपि न तत्र प्रयोजकम्, 'नीलो घटः' इत्यत्र व्य- भिचारादिति वाच्यम्; तत्र द्रव्यपरपदसामानाधिकरण्यस्य गुणपरत्वबाधकत्वेन क्लृप्तस्य सत्त्वात्। षष्ठ्यन्तपदेन द्रव्योपादानं गुणपरत्वप्रयोजकमिति वदतापि 'घटस्य नीलो भागः' इत्यत्र व्यभिचारवारणार्थं तस्य तद्बा-

T

धकत्वक्लृप्तेरवश्याभ्युपगन्तव्यत्वात् । न चैवं तर्हि 'अरुणया पिङ्गाक्ष्यैकहायन्या' इत्यत्रापि सामानाधिकरण्यं तद्बाधकं स्यादिति वाच्यम्; तत्र कारकविभक्तेः सामानाधिकरण्यबाधिकायाः सत्त्वात् । अन्यथा कारकविभक्तिवैयर्थ्यापत्तेः । 'घटस्य नीलो भागः' इत्यत्र 'नीलो घटः' इत्यत्रेव न कारकविभक्तिरस्ति । किंच उभयत्रापि सामानाधिकरण्यबाधे वाक्यभेदः स्यात् । अरुणावाक्ये तु न तत्प्रसक्तिरस्ति; आरुण्येन यथोक्तगुणकेन गोद्रव्येण च विशिष्टायाः क्रयभावनाया विधातुं शक्यत्वात् । कारकविभक्तिसत्त्वेऽपि वाक्यभेदप्रसङ्गे तामनादृत्य सामानाधिकरण्यमिष्यते— यथा 'नीलं घटमाहर' इत्यादौ । यत्र तु कारकविभक्तिरस्ति वाक्यभेदोऽपि न प्रसज्यते— 'नीलेन घटेन जलमाहर' इत्यादौ । तथाभूतमुदाहरणमरुणावाक्यतुल्यमस्तु । न च उदाहरणद्वयेऽपि अमूर्तस्य गुणस्य क्रियासाधनत्वासंभवो दोषः, साक्षात्तदसंभवेऽपि द्रव्यपरिच्छेदद्वारा तत्संभवात् । न च तथा सति द्रव्यान्तरस्यापि तद्द्वारत्वप्रसक्तिः, वाक्यार्थप्रतीतिवेलायां द्रव्यगुणयोः परस्परान्वयं विना प्रत्येकं क्रियासाधनतया अन्वयेऽपि द्रव्यस्य परिच्छेदकगुणाकाङ्क्षया गुणस्य परिच्छेद्यद्रव्याकाङ्क्षया च

T

पश्चादार्थिकपरस्परान्वयोपपत्तेः । तस्मात्सामानाधिकरण्य संभवात् अनुमानमिदं बाधितमेव । प्रत्यनुमानं च— अरु णावाक्याम्नातम् 'अरुणया' इति पदं न 'एकहायन्या' इति पदसामानाधिकरण्येन वाक्यार्थप्रतिपादकम्— अरु 'अरुणिम्ना शोभते पादः' इति लौकिकवाक्यगतम् अरु णिम्ना इति पदम्— इत्येवं द्वितीया कक्ष्या ॥

अथ तृतीया कक्ष्या—

प्रतीयमानसामानाधिकरण्याबाधेन वाक्यार्थनिर्वाहे भवति न तद्बाधनं युक्तम् । न च कारकविभक्तिसाफल्या तद्बाधनम्; अरुणाशब्दस्य गुणगतजात्यैव प्रवृत्तिनिमित्ते द्रव्यपर्यन्तत्वमिति पक्षे गुणगतजातेः द्रव्ये परम्परासंबन्ध घटकतया अर्थाक्षिप्ते गुणे कारकविभक्त्यर्थसंक्रमोपपत्तेः 'आग्नेयमष्टाकपालं निर्वपेत्' इत्यत्र आख्यातार्थस्य विधे प्रकृत्यर्थे निर्वापमतिलङ्घ्य द्रव्यदेवतासंबन्धाक्षिप्ते यागे संक्रान्त्यभ्युपगमात् । तस्य गुणेन प्रवृत्तिनिमित्तेन द्रव्यपर्यन्त त्वमिति पक्षे विशेष्यमतिलङ्घ्य विशेषणे तत्संक्रमोपपत्तेः 'चतुरो मुष्टीन्निर्वपति' इति संख्यामुष्टिरूपकारकद्वयविशि ष्टनिर्वापविधौ 'चतुरः' इति द्वितीयोक्तकारकत्वस्य त्प्रातिपदिकेन विशेष्यतया अभिहितं समभिव्याहृतमुष्टि

द्रव्यरूपं संख्येयमतिलङ्घ्य तद्विशेषणे संख्यायां संक्रान्त्यभ्युपगमात् । अरुणाशब्दस्य अर्शआद्यजन्ततया द्रव्यपर्यन्तत्वमिति कल्पने विभक्त्यर्थस्य तद्धितार्थमतिलङ्घ्य तत्प्रकृत्यर्थे संक्रान्त्युपपत्तेः—'दण्डी प्रैषानन्वाह' इत्यादौ तथा दर्शनात् । तस्य लुप्तमतुबन्तत्वकल्पने लुप्तस्य मतुपोऽर्थः प्रकृत्यैव विशेषशक्त्या लक्षणया वा बोधनीयः— इति द्रव्यमपहाय तत्सामान्यशक्त्युपस्थापिते गुणे विभक्त्यर्थान्वयोपपत्तेः— 'लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति' इति श्येनयागवैशेषिकाङ्गविधायके वाक्ये 'लोहितवसनाः' इति बहुव्रीहिसमासवर्तिपदयोः सामानाधिकरण्यनिर्वाहार्थं लोहितशब्दस्य अवश्यवक्तव्यं द्रव्यपर्यन्तत्वं मतुब्लोपेन निर्वाह्यमिति तत्र प्रकृतेः सामान्यविशेषवृत्तिभ्यामुपस्थाप्ययोः गुणद्रव्ययोर्मध्ये द्रव्यमपहाय गुणे विधिसंक्रान्तिसंप्रतिपत्तेः अरुणापदं गुणपरमेव ; गुणगुणिनोरभेदोपचारेण 'अरुणया एकहायन्या' इति पदयोः सामानाधिकरण्यमिति तन्निर्वाहे, ऋजुनैव मार्गेण गुणे करणकारकत्वान्वयसंभवात् । न च एतेषां पक्षाणां मध्ये विशेष्यं विहाय विशेषणे विभक्त्यर्थान्वयः इति पक्षे 'पिङ्गाक्ष्या' इति पदेऽपि तथात्वापत्तिर्दोषः ; इष्टापत्तेः— न-

हि 'अरुणया' इति पद एव कारकविभक्तिः साफल्यं तव्या, न 'पिङ्गाक्ष्या' इति पदे— इत्यत्र विशेषहेतुः न च आरुण्यस्येव पैङ्गल्यविशिष्टस्य अक्ष्णः क्रयसाधनत्वं संभवति । न च अन्यदीयस्यापि पैङ्गल्यविशिष्टस्याक्ष्णः भूतस्य क्रयसाधनत्वं संभवति, 'अश्वशफेन क्रीणाति' वाक्यादश्वशफस्येवेति आरुण्यस्येव तस्य नियमेन गोद्रव्या यापेक्षा न स्यादिति वाच्यम्; अर्थतः स्वातन्त्र्यसंभवेऽपि हुव्रीहिसमासेन गोद्रव्यविशेषणभूतस्यैव तस्य समर्पणात् स्मात् सामानाधिकरण्यस्य अत्रासंभवात् नास्ति मदनु बाधशङ्का । त्वदनुमानं तु अप्रयोजकम्, 'अरुणिम्ना शो इति लौकिकवाक्ये एकहायनीपदाभावात् इमनिच्प्रत्य द्भावाच्च तत्सामानाधिकरण्यप्रतिपादकत्वाभावेऽपि, अत्र कहायन्यादिश्रवणेन तत्सामानाधिकरण्यविरोधिनो भा त्ययस्य अभावेन च तत्सामानाधिकरण्येन वाक्यार्थप्रति दकत्वोपपत्तेः— इति ॥

अथ चतुर्थी कक्ष्या—

अरुणाशब्दस्य गुणमात्रपरत्वमङ्गीकृत्य आर्जवेन विभक्त्यर्थान्वयसंगमनाय समानपदश्रुतिनिर्वाहोपपत्तौ क्यरूपपदान्तरसामानाधिकरण्यनिर्वाहाय श्रुतिस्वारस्य

T

ङ्गो न युक्तः । अभेदोपचारकल्पनेऽपि उपचार एव दोषः । अतोऽत्र सामानाधिकरण्यं न संभवतीति बाधितमेव त्वदनुमानम् । मदनुमानं च नाप्रयोजकम्, तृतीयार्थस्य करणत्वस्य स्वारस्येन गुणसंगतेः अरुणाशब्दस्य गुणमात्रपरतया वैयधिकरण्य एव संभवात्— इति ॥

अथ पञ्चमी—

इह सामानाधिकरण्यं न एकविभक्त्यन्तपदद्वयसमभिव्याहारमात्रनिबन्धनमिष्यते; किंतु स्त्रीलिङ्गारुणाशब्दश्रुत्याप्यानीतम् । स्वातन्त्र्येण गुणमात्रपरत्वे हि 'गुणे शुक्लादयः पुंसि' इत्यनुशासनात् पुँल्लिङ्गता स्यात् । अतः सामानाधिकरण्यमेवाभ्युपगन्तव्यमिति न बाधितं मदनुमानम् । त्वदनुमानं तु अप्रयोजकमेव, अन्यत्र वैयधिकरण्येऽपि अत्र उक्तरीत्या सामानाधिकरण्योपपत्तेः इति ॥

अथ षष्ठी कक्ष्या—

गुणेषु प्रयोगसाधून्येव लिंगानि नार्थसाधूनि । न हि गुणेषु पुंस्त्वं वा मुख्यम् । अतः स्त्रीत्वमपि तद्वदिष्यताम् । तथैव बुद्धिकरुणादिशब्देषु गुणवाचिष्वपि स्त्रीलिंगं दृश्यते । तस्मादरुणाश्रुतिस्वारस्येन सामानाधिकरण्यं नोपनीयते । किं तु एकविभक्त्यन्तपदद्वयसमभिव्याहारमात्रे-

T

णेति तस्य एकपदश्रुतिस्वारस्यविरोधिन औपचारिकत्व प्र
दकस्य च त्याग एव युक्तः । अतः त्वदनुमानं बाधितः त
मदनुमानं च नाप्रयोजकम्, उक्तयुक्त्या वैयधिकरण्याद्य
भावात्— इति ॥

अथ सप्तमी—

यदुक्तं प्रयोगसाध्विह लिंगं नार्थसाध्विति, तदयुक्त
'गुणे शुक्लादयः पुंसि' इत्यनुशासनविरोधेन प्रयोगसाधु
स्याप्यसिद्धेः । न हि करुणादिशब्दसामान्यतः दृष्टम् अ
शासनविरोधे प्रभवति । तथा सति शुक्लादिशब्देषु पुंलिं
दर्शनेन करुणादिशब्देष्वपि कदाचित् पुँल्लिंगप्रयोगापत्तेः
च कारकविभक्त्यन्वयस्वारस्यसिद्ध्यर्थमिहैव स्त्रीलिंगप्रयो
साधुत्वं कल्प्यतामिति वाच्यम्, उभयोरपि मदुक्तरी
अर्थसाधुत्वसंभवे कस्य चित् प्रयोगसाधुत्वकल्पनानौचि
त्यात् । अन्यथा लिंगमेवार्थसाधु, कारकविभक्तिः प्रयो
साधुरिति वैपरीत्यस्यापि कल्पनाप्रसङ्गात् । विशेषणवि
साधुत्वार्थत्वस्य अन्यत्र बहुशः क्लृप्ततया गुणशब्दः स्त्रीलिं
एव स्यात् । अक्लृप्तस्य प्रयोगसाधुत्वस्य अकल्पनीयत्वे
तस्यैवौचित्याच्च । एतेन लिंगकारकयोः कारकस्य प्रा
न्यात् कारकान्वयस्वारस्यमेवानुरोद्धव्यम्; न च लिंगा

प्राधान्येऽपि 'स्त्रियाम्' इति व्याकरणसूत्रभाष्याद्युक्तरीत्या तस्य प्रातिपदिकस्त्रीप्रत्ययान्यतरार्थत्वेन प्रथमश्रुतत्वात् प्रथमश्रुतस्य अप्राधान्येऽपि 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यत्र प्राथम्यविशेषणस्येव प्राबल्यात् लिंगमेवानुरोद्धव्यमिति वाच्यम्, लिंगस्य प्राथमिकप्रातिपदिकस्त्रीप्रत्ययान्यतरार्थत्वेऽपि तत्प्राबल्यहेतोः प्रथमप्रतीतेरसिद्धेः; 'अरुणया' इति तृतीयाप्रयोगे स्त्रीप्रत्ययस्य टाबाकारस्याश्रवणेन टापं स्त्रीलिङ्गासाधरणेन विभक्तिविकारेणोन्नीय तदनन्तरं तेन स्वयं वाचकेन प्रातिपदिकार्थद्योतकेन वा लिंगस्य प्रत्येतव्यत्वात्—इति निरस्तम्; क्लृप्तकल्प्ययोः क्लृप्तस्य बलीयस्त्वात् स्वातन्त्र्येण गुणपरेषु शुक्लादिशब्देषु क्वचिदपि स्त्रीलिंगस्य क्लृप्त्यभावात् लिंगानुशासनविरोधेन कल्पनस्यायुक्तत्वाच्च । अपि च अरुणापदस्य द्रव्यपर्यन्तत्वपक्षेष्वेव कारकविभक्त्यन्वयस्वारस्यविरोधशङ्कापि । न तु गुणमात्रपरोऽरुणाशब्दः, एकहायनीसामानाधिकरण्यं परमौपचारिकाभेदावलम्बनमिति पक्षेऽपि । न च तस्मिन्पक्षे सामानाधिकरण्यस्य औपचारिकत्वापत्तिरेव दोषः; प्रतीयमानसामानाधिकरण्यात्यन्तबाधनात् तदौपचारिकत्वकल्पनस्य ज्यायस्त्वात् । किंचायमुपचारः सांप्रतिकलक्षणान्यायेन

T

अत्रैव न कल्पनीयः ; किंतु निरूढलक्षणान्यायेन क्लृप्त
तथा हि— 'स्त्रियाम्' इति सूत्रे भाष्यकारैः स्त्री
टाबाद्यर्थत्वपक्षे तस्य स्वयमस्त्रीत्वात् एकत्वाच्च 'कुमारी,
मार्यौ, कुमार्यः' इत्यादिषु स्त्रीलिंगस्य द्विवचनबहुवचन
अनुपपत्तिमाशङ्क्य, समाहितम्—गुणवचनानां हि श
नामाश्रयतो लिंगवचनानि भवन्ति ; तद्यथा— 'शुक्लं व
शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्ब
इति, यद्द्रव्यं श्रितो भवति गुणः, तस्य यल्लिङ्गं वचनं च,
गुणस्यापि भवति; एवमिहापि यदि द्रव्याश्रितं भवति स्त्रीत
तस्य यल्लिंगं वचनं च तत् स्त्रीत्वस्यापि भविष्यति—
तत्र हि शुक्लशब्दः केवलगुणपर एव उदाहृतः । तस्य द्र
पर्यन्तत्वे स्वत एव लिंगवचनयोरुपपन्नत्वेन आश्रयतस्त
रसमर्थनीयत्वात् । अतस्तत्र भिन्नार्थयोर्गुणद्रव्यशब्द
सामानाधिकरण्यमभेदोपचारावलम्बनमिति स्पष्टमेव
एतेन अरुणाशब्दस्य केवलगुणपरत्वपक्षे तत्रापि स्त्रीलि
मयुक्तमित्यपि शङ्का निरस्ता ; यत्र गुणवाचिनामौपचारि
द्रव्यवाचिपदसामानाधिकरण्यम्, तत्र आश्रयलिङ्गानुरो
'शुक्ला शाटी' इत्यत्र क्लृप्तत्वात् । तस्मात् प्रतीयमान
मानाधिकरण्याबाधनेन कारकविभक्त्यर्थसमर्थनोपपत्तेः

T

तद्बाधनं युक्तमित्यतः मदनुमानं न बाधितम्, त्वदनुमानमेव तु अप्रयोजकमिति ॥

अथाष्टमी—

सामानाधिकरण्याबाधनेन कारकविभक्तिसाफल्यसमर्थनमयुक्तम्, कारकविभक्त्यन्तत्वे क्रियापदान्वयस्य सामानाधिकरण्ये एकहायनीपदान्वयस्य च वक्तव्यत्वात् 'अरुणया क्रीणाति, अरुणयैकहायन्या' इत्येवमेकस्य पदस्य युगपदुभयान्वयायोगात्। न च पर्यायेण उभयान्वयः; एकस्माद्वाक्यात् क्रमिकार्थद्वयप्रतीत्यसंभवात्। न च वार्तिककारैः अरुणिमैकहायन्योः पार्ष्ठिकान्वयसमर्थनानन्तरम् 'एवं च वाक्यगतमपि सामानाधिकरण्यं समर्थितं भविष्यति' इत्युक्तत्वात् तत्र विभक्तिश्रुत्यानीतक्रियान्वयविरोधमाशङ्क्य, 'क्रियापेक्षित एवायं संबन्धः क्रियते तयोः। न चात्रानुगुणावृत्तिर्दुर्बलापि निरुध्यते' इति पर्यायेण उभयान्वयः स्वीकृत इति शङ्कनीयम्; अरुणाशब्दस्य प्रथमं निष्कृष्टगुणमात्रशक्त्या अरुणिममात्रविषयत्वेन कारकविभक्त्या क्रियान्वितस्य पश्चाद्वार्तिककाराभिमतया गुणिलक्षणया तस्य एकहायनीविशेषणतयापि अन्वयासंभवात्, शब्दानां युगपदावृत्त्या वा अर्थद्वयप्रतिपादकत्वस्य वार्तिककारैरेव नामधेय-

T

पेटिकादिषु बहुषु प्रदेशेषु प्रतिषिद्धत्वात् । तस्मात् 'एवं इत्यादिग्रन्थस्य अरुणिमैकहायन्योः आर्थिकपरस्परान्व मर्थनानन्तरं प्रवृत्तत्वात् तत्रैव अभ्युच्चयकथनपरः इति व्यम् । अतः कारकविभक्तितया साफल्यसमर्थनप्रवृ तवापि सामानाधिकरण्यासंभवात् त्वदनुमानं बाधितम् मदनुमानं च नाप्रयोजकमिति ॥

अथ नवमी—

क्रियान्वयः सामानाधिकरण्येनाविरुद्धः; भिन्नप्रवृत्ति मित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिर्हि सामानाधिकरण्य तत्र एकस्मिन्निति पदोक्तमर्थैक्यं तात्त्विकं चेत् मुख्यं सा नाधिकरण्यम्, औपचारिकं चेत् अमुख्यमिति विशे द्विविधमपि सामानाधिकरण्यं प्रकृते संभवति इत्युप दितम् । तद्द्विविधमपि क्रियान्वये सति असत्यपि नापैति न हि आद्यपक्षानुसारेण विशेषणे कारकविभक्त्यर्थसंक्रान्त द्रव्यपर्यन्तत्वमरुणाशब्दस्य अपैति । न वा द्वितीयपक्षा सारेण तस्य आश्रयलिंगग्राहित्वं क्रियान्वये अपैति । न अनपेतमपि सामानाधिकरण्यं क्रियान्वये वाक्यार्थप्रतीत्यु पयोगि जातमित्ययं दोषः । न हि तस्य वाक्यार्थप्रती त्युपयोगित्वपर्यन्तम् अस्माभिः सिसाधयिषितम्; किं

T

वाक्यार्थप्रतीतिसमये सत्त्वमात्रम् । न च तदनुपयोगिना किं तेन सामानाधिकरण्येन इति शङ्कनीयम्, प्रयोजनाभावेन लिंगविभक्त्यैकरूप्यावगतस्य तस्य प्रतिक्षेपायोगात् अरुणिमैकहायन्योः परस्परान्वयस्य न्यायलभ्यत्वेऽपि तत्प्रतिष्ठाहेतुतया सप्रयोजनत्वात् । न च क्रियान्वये सति सामानाधिकरण्यस्य वाक्यार्थप्रतीत्यनुपयोगित्वमपि, सामानाधिकरण्यबलात् द्रव्यावच्छेदकतया प्रतीयमानस्यैव गुणस्य क्रियाशेषत्वेनाप्यन्वयसंभवात् । अभ्युपगन्तव्यश्च पूर्वमीमांसकैरपि तथा अन्वयः 'चतुरो मुष्टीन्निर्वपति' इत्यत्र । तथा हि— पाञ्चमिके मुष्टिकपालाधिकरणे चतुर्मुष्टिनिर्वाप एकः पदार्थः; न तु एकैकमुष्टिनिर्वापश्चत्वारः पदार्थाः । अतो नैकपुरोडाशास्विष्टिषु पदार्थानुसमयेन अङ्गकलापे कर्तव्ये स्थिते सति, प्रतिपुरोडाशम् एकैकमुष्टिना अनुसमयो न कार्यः; प्रतिमुष्टि निर्वापपदार्थस्य भिन्नत्वाभावात् । किं तु प्राथमिकस्य पुरोडाशस्य चतुर्मुष्टिनिर्वापं समाप्य द्वितीयस्य स आरम्भणीयः— इत्येवं चतुर्मुष्टिनिर्वापेण अनुसमयः कार्यः, तावत एकपदार्थत्वात्— इति व्यवस्थापितम् । अत्रेयं शङ्का समुन्मिषति—दाशमिके संख्यामुष्ट्यधिकरणे चतुःसंख्याया मुष्टिद्रव्यशेषत्वं निराकृत्य निर्वापक्रियाशेषत्वं

T

समर्थितम्; तथा च 'तिस्र आहुतीः' इत्यत्र आहुतिक्रि यान्वयिन्या त्रित्वसंख्यया आहुतिक्रियाभेद इव— निर्वाप क्रियान्वयिन्या चतुःसंख्यया निर्वापक्रियाभेदोऽपि स्यात् अतो मुष्टिना अनुसमय इति पूर्वपक्ष एव युक्तः— इति तत्रेदमुत्तरं वाच्यम्—युक्तं 'तिस्र आहुतीर्जुहोति' इत्य संख्यया क्रियाभेदः; तत्र त्रित्वसंख्यायाः साक्षादाहुतिक्रि यावच्छेदकत्वेनान्वयात्; इह चतुःसंख्या न निर्वापक्रिया वच्छेदकत्वेन अन्वेति; तथा सति 'संख्यायाः क्रियाभ्यावृ त्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यः सुच्' इति पाणिनीयवि हितक्रियाभ्यावृत्तिगणनविषयसुजन्ततया चतुः— इति स्या प्रसङ्गात्। न च 'तिस्र आहुतीः' इत्यत्र आहुतिशब्दव इह 'चतुरो निर्वापान्' इति निर्वापशब्दः 'चतुरो वारान् इति वारशब्दो वा अस्ति। न च तदध्याहारो युक्तः लिंगविभक्त्यैकरूप्यावगतमुष्टिसामानाधिकरण्यनिर्वृतस्य 'च तुरः' इत्यस्य अध्याहारनिरपेक्षत्वात्। अत एव मुष्ट्य तिरिक्तद्रव्यवाचिशब्दान्तराध्याहारेण लिंगविभक्त्युपपादना शङ्कापि निरस्ता स्यात्; मुष्टिसामानाधिकरण्यात् मुष्ट्यव च्छेदिकैव सती कारकविभक्तिबलात् क्रियायां शेषत्वमात्रे अन्वेति; न तु तदवच्छेदकत्वेनापि; किंचिदवच्छेदकसं

T

ख्याया तदितरावच्छेदकत्वविरोधात्। अवच्छेदकत्वेन द्रव्यान्विताया अपि संख्यायाः शेषत्वेन क्रियान्वयस्तु न विरुध्यते; कया चिद्विधया किंचित्संबन्धिनोऽपि विधान्तरेण तदितरसंबन्धसंभवात्; 'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्र अरत्न्यवच्छेदिकायाः संख्याया विषयतया विध्यन्वयस्य संप्रतिपन्नत्वाच्च । अत एव 'सप्तदश प्राजापत्यान्पशूनालभेत' इत्यादिषु तथा अन्वयोऽभ्युपगन्तव्यः । तद्यथा— 'पृथक्त्वनिवेशित्वात्संख्यया कर्मभेदः स्यात्' इति द्वैतीयीकाधिकरणे 'तिस्र आहुतीर्जुहोति' इत्येतत् संख्यया कर्मभेदस्य उदाहरणम्— इति प्रथममुदाहृत्य आहुतिक्रियारूपकर्मान्वयिन्या संख्यया कर्मभेदासिद्धेः स्पष्टत्वेन अत्र व्युत्पाद्यन्यायाभावात् नेदमुदाहरणमिति तत् परित्यज्य प्राजापत्यवाक्यमुदाहृतम् । तत्र संख्यया कर्मभेदसिद्धेरस्पष्टत्वं च एवं व्युत्पादितम्— नात्र क्रियान्वयिनी संख्या; किंतु द्रव्यान्वयिनी; तया यागक्रियारूपकर्मभेदासिद्धिः इत्थम्— सा न केवलं पशुद्रव्यान्वयिनी; येन बहुष्वपि पशुषु प्रजापतिदेवतासंबन्धस्य एकत्वात् तदाक्षिप्तो यागोऽपि एको भवेत्; किं तु प्रजापतिदेवताविशिष्टपश्वन्वयिनी । तथा च पशूनामिव प्रजापतिदेवतासंबन्धानामपि साप्तदश्यसिद्धौ तैरा-

T

ःक्षेप्या यागा अपि सप्तदश भवेयुरिति । तत्रापि एवं शङ्क
उन्मिषति— यत्र संख्या कर्मान्वयिनी तत्रोदाहार्यमिति
मन्वानानामिदमपि नोदाहरणं भवितुमर्हति ; 'प्राजा-
पत्यान्पशून्' इति पदद्वयसमभिव्याहारप्रतीतद्रव्यदेवतासं
बन्धाक्षिप्तयागक्रियायामेव अरुणाधिकरणन्यायेन साक्षात्
संख्यान्वयोपपत्तेः ; न हि परिपूर्णवाक्यार्थप्रत्ययानन्त
यागाक्षेपः ; येन संख्या यागक्रियाक्षेपात्प्रागेव द्रव्यान्वि
जाता, न तस्याः पुनः क्रियान्वयो भावीति शङ्क्येतापि
प्राजापत्यपशूनां विनियोगानवगमेन वाक्यभेदप्रसङ्गेन पशु
मात्रोद्देशे देवतापदवैयर्थ्यप्रसङ्गेन च स्पर्शरूपस्यालम्भस
संस्कारकर्मतया यागान्वयिदेवतापदानन्वयप्रसङ्गेन अर्थक
र्मतया वा अन्वयासंभवेन द्रव्यदेवतासंबन्धाक्षिप्तविधियो-
ग्ययागक्रियाध्याहारपर्यन्तं परिपूर्णवाक्यार्थप्रतीत्यसंभवात्
तदसंभवे च श्रुतविधिनिर्वाहार्थं विधियोग्ययागक्रियाध्याहारे
सति, तत्रान्वययोग्यायाः संख्यायाः 'गुणानां च परार्थत्वा-
दसंबन्धः समत्वात्स्यात्' इति न्यायविरुद्धस्य गुणभूतद्र
व्यान्वयस्यासंभवेन 'सप्तदश' इत्यस्यापि आख्यातवत
द्रव्यान्वयोपपत्तेः, यागक्रियाक्षेपात्प्रागपि यावच्छ्रुतपदस-
मभिव्याहारलभ्यवाक्यार्थप्रत्ययोत्पत्त्यभ्युपगमेन 'प्राजा-

पत्यान्पशून्' इत्यस्येव 'सप्तदश' इत्यस्यापि कारकविभक्तित: क्रियान्वयस्यैव प्राप्त्या द्रव्यान्वयालाभात्—इति। तत्राप्येवमुत्तरं वाक्यम्—– सामानाधिकरण्यात् द्रव्यावच्छेदकत्वेन द्रव्यान्वितताया एव संख्याया: कारकतामात्रेण क्रियान्वयो भवेत् । तच्च कारकत्वं द्रव्यावच्छेदद्वारा निर्वाह्यमिति देवतासंबन्धविशिष्टद्रव्यान्वयिन्या संख्यया तद्विशिष्टद्रव्यभेदवत् द्रव्यदेवतासंबन्धभेदस्यापि सिद्धौ तद्वारैव संख्यया कर्मभेदसिद्धि: ; न साक्षादिति । तस्मात् अरुणापदम् एकहायनीपदसमानाधिकरणं सदेव क्रियान्वयीति मदनुमानं न बाधितम् । त्वदनुमानमेव तु अप्रयोजकमिति सिद्धम् ॥

इति अरुणैकहायनीसामानाधिकरण्यवाद: ॥ ७ ॥



T

# क्रयारुण्यान्वयवादः ॥



विष्णुभागवतास्तु अरुणाशब्दस्य स्वशक्त्या गुणविशिष्टद्रव्यपर्यन्तत्वमङ्गीकृत्य आरुण्यस्य एकहायनत्ववत् द्रव्य गुणतयैवान्वयः; न स्वातन्त्र्येण क्रयसाधनतया— इति मन्यन्ते । तन्निरासार्थं कथा प्रस्तूयते—

अरुणावाक्यसमर्पितमारुण्यं सोमक्रयक्रियासाधनम्, अरुणावाक्यगततृतीयार्थान्वयित्वात्; यदरुणावाक्यगततृतीयार्थान्वयि, तत् सोमक्रयक्रियासाधनम्— यथा गोद्रव्यम् । यद्यपि उक्तहेतुः साध्यपर्यवसितः, तथापि रूपभेदेन भेदः— इति प्रथमा कक्ष्या ॥

अथ द्वितीया—

असिद्धोऽयं हेतुः, साध्यतो रूपभेदेन भेदसत्त्वेऽपि पक्षे हेतोः मम असंप्रतिपन्नत्वात्; मया विशेषणविभक्ति 'अरुणया' इति तृतीया केवलं साधुत्वार्था, तृतीयान्तरप्रतिपन्नगोगतकरणत्वानुवादिनी वा; न तु अरुणिमान्वितकरणत्वसमर्पिणी—इत्यङ्गीकृतत्वात् । तस्मात् अरुणावाक्यप्रतिपन्नमारुण्यं न सोमक्रयक्रियासाधनम्, गोविशेषणत्वात्

T

यद्गोविशेषणम्, न तत्सोमक्रयक्रियासाधनम्— यथा एकहायनत्वम्— इति ॥

अथ तृतीया—

'अरुणया' इति कारकविभक्तिसाफल्याय गुणे तदर्थसंक्रान्तिरङ्गीकरणीया; विभक्तेरर्थवत्त्वे संभवति साधुत्वमात्रार्थत्वस्य अनुवादकत्वस्य वा अभ्युपगमायोगात्। न च विभक्त्यर्थस्य विशेषणसंक्रान्तिरदृष्टचरी; 'चतुरो मुष्टीन्निर्वपति' इति वाक्ये चतुःशब्दपरद्वितीयार्थस्य संख्येयविशेषणसंख्यान्वयित्वस्य संप्रतिपन्नत्वात्। तथा हि— 'चतुरो मुष्टीन्निर्वपति' इति दर्शपूर्णमासप्रकरणाम्नातेन वाक्येन चतुःसंख्यामुष्टिद्रव्योभयसाधनको निर्वापो विधीयते। कथम्? शकटानीताद्व्रीहिराशेः पुरोडाशार्थानां व्रीहीणां पृथक्करणमर्थतः प्राप्नुवदपि न नियमेन प्राप्यते; शकटेन पुरोडाशोपयुक्तव्रीहिमात्रस्यापि आनयनसंभवात्। अतः तत्र नियमार्थो विधिः। स च व्रीहीणां निर्वापो मुष्टिभिः कर्तव्यः, तस्य चतुःसंख्या च इति तत्रापि नियमः। यद्यपि द्वितीयया मुष्टीनां संस्कार्यता प्रतीयते, तथापि तेषां प्रागविनियुक्तत्वात् अवनेजनसंस्कृताध्वर्युहस्तवत् अग्रे विनियोक्ष्यमाणत्वाभावाच्च संस्कार्यता नोपपद्यते। न च मुष्टिशब्दो मुष्टिपरिमितव्रीहिपरोऽ-

T

स्तु, ततश्च व्रीहीणां विनियोगसद्भावात् संस्कार्यता उपपद्यत इति वाच्यम्; तेषां मुष्टिवैशिष्ट्येन प्राप्तेरभावात् तेन रूपेणानुवादानुपपत्तेः, चतुःसंख्यायाः पृथगुद्देशे तद्विशिष्टमुष्ट्युद्देशे वा वाक्यभेदापत्तेश्च। तस्मात् 'सक्तूञ्जुहोति' इतिवत् अनीप्सितकर्मणि द्वितीयेति योज्यम्। अत्र 'आदशतः संख्याः संख्येये' इति चतुःशब्दस्य संख्येयपर्यन्तत्वावगमेऽपि कारकविभक्तिसाफल्याय विशेषणे तदर्थसंक्रमोऽङ्गीकृतः। एवं शङ्कापरिहारावभिप्रेत्यैव 'मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात्, न निर्वापशेषत्वात्' इति दशमाध्यायपूर्वपक्षसिद्धान्तावलम्बनं सूत्रद्वयं प्रवृत्तम्। अत्र हि 'बार्हस्पत्यो नैवारः सप्तदशशरावश्चरुर्भवति' इति वाजपेये विहितस्य सप्तदशशरावपरिमितचरोरतिदेशप्राप्तेश्चतुर्भिर्मुष्टिभिः परिमितेन व्रीहिद्रव्येण संपादयितुमशक्यत्वात् संख्यामुष्ट्यन्यतरलोपे कर्तव्ये चतुःशब्दस्य संख्येयप्रधानत्वात् तद्विशेषणत्वेनाप्रधानभूतायाः संख्याया लोपः कार्य इत्यभिप्रायेण पूर्वपक्षसूत्रं प्रवृत्तम्। चतुःशब्दस्य संख्येयपरत्वेऽपि तद्गतस्य कारकत्वस्य द्वितीयान्तरेणाभिहिततया चतुःशब्दपरद्वितीयायाः तद्विषये साफल्याभावात् विशेषणे तदर्थसंक्रमो वाच्यः। तथा च संख्यामुष्ट्योरुभयोरपि निर्वापाङ्गत्वाविशेषात् प्रथ-

मश्रुतप्राबल्यानुरोधेन मुष्टेरेव लोपः न्याय्य इत्यभिप्रायेण सिद्धान्तसूत्रं प्रवृत्तमिति स्पष्टमेव। तस्मात् तत्र चतुःशब्दस्य संख्येयपरत्वेऽपि तत्परद्वितीयाया इव अरुणाशब्दस्य द्रव्यपरत्वेऽपि तत्परतृतीयायाः साफल्यार्थमरुणिम्नि संक्रान्तिरभ्युपगन्तव्या इत्येवं प्रसाध्यो हेतुः कृतकत्वादिवदुपपद्यत इति नात्रासिद्धिशङ्कावकाशः। त्वदनुमानं तु अप्रयोजकम्, 'एकहायन्या' इत्यत्र कारकविभक्तेर्विशेष्यान्वयेन साफल्यात् विशेषणानन्वयेऽपि, अत्र साफल्यार्थं विशेषणान्वयौचित्यादिति॥

अथ चतुर्थी—

चतुरुत्तराया इव अरुणोत्तराया विभक्तेः विशेषणान्वयकल्पनं न युक्तम्; तथा सति 'तं वै दशभिः क्रीणाति' इति दशसाधनक्रयश्रुतिविरोधात्। आरुण्यस्यापि तत्साधनत्वे हि संख्यातिरेको भवेत्। अतोऽत्र विशेषणविभक्तेः साधुत्वाद्यर्थतैव युक्तेति त्वदीयो हेतुः प्रसाधयितुमप्यशक्य इति असिद्ध एव। मदीयस्तु नाप्रयोजकः, संख्यानतिरेकार्थमारुण्यस्य एकहायनत्वसमत्वेन अवश्यमङ्गीकरणीयत्वादिति॥

अथ पञ्चमी—

दशक्रयवचनं न विधायकम्, 'हिरण्येन क्रीणाति' 'अजया क्रीणाति' इत्यादिदशविधविधिवाक्यैः क्रयतत्साधनतत्संख्याविशेषाणां सिद्धेः। किं तु प्रचयशिष्टसंख्यानुवादकम्। न च अनुवादस्वारस्यानुरोधेन विधिवाक्यगतकारकविभक्तिवैफल्यापादनं युक्तम्। तस्मात् यथा— 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते' इत्यनुवादगतचतुर्दशसंख्याश्रवणं सतीष्वपि पार्वणहोमादिषु अवषट्काराहुतिषु सवषट्काराहुतिविषयतया योज्यते— तथा इदमप्यनुवादगतमेव दशसंख्याश्रवणं स्वतन्त्रक्रयसाधनद्रव्यविषयतया योजयितुं युक्तम्। अतो मदनुमाने हेतुर्नासिद्धः। त्वदनुमानं तु अप्रयोजकमेवेति ॥

अथ षष्ठी—

दशक्रयवचनस्य विधायकत्वे संभवति न अनुवादकत्वकल्पनं युक्तम्। अस्ति चात्र विभक्तिसाफल्यलोभेन आरुण्यस्यापि क्रयसाधनत्वप्राप्तौ तद्व्यावृत्तिफलकस्य विधेरवकाशः। अतः तत्साफल्याय विभक्तिमात्रस्य प्रयोगसाधुत्वार्थत्वम् अनुवादकत्वं वा कल्पयितुं युक्तम्। 'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्, अभिदग्धे सोमे पञ्च गा दद्यात्' इत्यत्र हि समभिव्याहृतैकादिप्रातिपदिकवैयर्थ्यलक्षणादिदोषपरिहा-

राय 'एकाम्' 'पञ्च' इत्यनयोः कारकविभक्तित्वाश्रयणेन क्रियासंबन्धः त्यक्तः । तथा हि— तत्र यदि एकां गां दद्यात् इति संबन्धः क्रियते, तदा 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति ज्योतिष्टोमदक्षिणात्वेन बहुषु गवादिषु समुच्चित्य देयत्वेन प्राप्तेषु अनियमेन यां कांचिदेकामेव दक्षिणां दद्यात्—इत्यर्थः स्यात्; तदा गोशब्दस्यानियतप्रापणीयगवादिसर्वद्रव्यलक्षणा भवेत्, पञ्चप्राप्तायाः गोः अनुवादः संभवेत् । अथ तु एकां दद्यात्, तां च गाम् इति विधीयेत, तदा प्राप्तक्रियानुवादेन अनेकार्थविधानाद्वाक्यभेदः । यदि तु गां दद्यात्— इति गौरेव दक्षिणादाने विधीयेत, ततः तस्या वचनप्राप्ता द्वादशशतसंख्यैव परिच्छेदिका प्राप्नुयादिति एकपञ्चशब्दौ अनर्थकौ स्याताम् । तयोरपि विधाने वाक्यभेदः । अथ एकवचनबलात् विवक्षितैकत्वसंख्या गौर्विधीयते, तदा एकशब्दस्य अनुवादत्वेनानर्थक्यम्, पञ्चशब्दस्य अनन्वितार्थत्वं च स्यात् । तस्मादुक्तदोषपरिजिहीर्षया कारकविभक्तिश्रुतिप्राप्तमपि संख्ययोः क्रियासंबन्धं परित्यज्य वाक्यलक्षणो गोसंख्यासंबन्ध एव विधेयोऽभ्युपगन्तव्यः । ततश्च एकां गाम् इत्येतावत्येव विधिः समा-

प्यते। दक्षिणां दद्यात्— इत्यनुवादः। ज्योतिष्टोमदक्षिणारूपा-स्वेव गोषु द्वादशशतसंख्याश्रवणलिंगात् 'एकाम्' 'पञ्च' इति शब्दोक्तयोरपि संख्ययोस्तास्वेव निवेशस्यार्थलभ्यत्वात्; अनुवादसामर्थ्यादेव वा दक्षिणारूपगवाश्रयत्वनियमः संख्ययोर्लभ्यते—— 'ऐरं कृत्वोद्गेयम्' इति इरापदविधानस्य 'यद्गिरा गिरेति ब्रूयात् आत्मानमेव तदुद्गाता गिरेत्' इत्यनुवादसामर्थ्यात् गिरापदस्थाननियमस्याङ्गीकृतत्वादिति 'एकां पञ्चेति धेनुवत्' इति दशमाध्यायाधिकरणे निर्णीतम्। यदैवम् एकादिपदमात्रवैयर्थ्यपरिजिहीर्षया कारकविभक्तिस्वारस्यं त्यक्तम्, तदा किमु वक्तव्यम् 'तं वै दशभिः क्रीणाति' इति वाक्यवैयर्थ्यपरिहारार्थं तदिह त्यक्तव्यमिति। एवं च दशक्रयवचनरूपविधिविरोधात् आरुण्यस्य तृतीयार्थान्वयित्वं न संभवतीति त्वद्धेतुरसिद्ध एव, मद्धेतुश्च नाप्रयोजक इति॥

अथ सप्तमी—

दशक्रयवचनस्य दशाधिकसंख्याव्यावृत्तिफलकविधिपरत्वे परिसंख्याविधित्वं भवेत्; तथा च तस्य श्रुतदशसंख्यारूपस्वार्थः त्यक्तव्यः, अश्रुतदशाधिकसंख्याव्यावृत्तिरूपपरार्थश्च ग्राह्यः, कारकविभक्तिप्राप्तमारुण्यस्य क्रयसाधनत्वं च

बाधितव्यम्—इति त्रैदोष्यं प्राप्नुयात् । अतः तस्य प्रचयशिष्टस्वतन्त्रक्रयसाधनद्रव्यसंख्यानुवादकत्वकल्पनमेव युक्तम्; वरो हि त्रिदोषदुष्टपरिसंख्याभ्युपगमापेक्षया तदनुवादकत्वाभ्युपगमः । अत एव 'वैखानसं पूर्वेऽहन्साम भवति' इत्यङ्गिरसां द्विरात्रे पूर्वस्याह्नो वैखानससामविधानानन्तरं श्रुतस्य 'षोडश्युत्तरे' इति वाक्यस्य परिसंख्यार्थत्वं परित्यज्य अनुवादकत्वमभ्युपगतम्—उत्तरस्याह्नः षोडशित्वं हि षोडशिनं प्रस्तुत्य प्रवृत्तेन सर्वद्विरात्राणामुत्तरस्याह्नः षोडशिविधायकेन 'उत्तरेऽहन्द्विरात्रस्य गृह्यते' इत्यनारभ्याधीतवाक्येन सिध्यति; ततश्च अस्यापि वाक्यस्य विधिपरत्वे अङ्गिरसां द्विरात्रस्यैव उत्तरेऽहनि षोडशिग्रहः ग्राह्यः; न तु द्विरात्रान्तराणामुत्तरेष्वहःसु इति—द्विरात्रान्तरेभ्यः षोडशिग्रहव्यावृत्तिरूपपरिसंख्याविधिपरत्वमेव स्यादिति अङ्गिरसां द्विरात्रे षोडशिग्रहप्रापणरूपस्वार्थस्त्यक्तव्यः, द्विरात्रान्तरेभ्यः तद्व्यावर्तनरूपः परार्थश्च ग्राह्यः, अनारभ्याधीतवाक्येन द्विरात्रान्तरेषु प्राप्तं षोडशिमत्त्वं च बाधितव्यमिति त्रैदोष्यं प्रसज्येत; अतः 'षोडश्युत्तरे' इत्यस्य अनारभ्याधीतवाक्यप्राप्तषोडशित्वानुवादकत्वकल्पनमेव न्याय्यमिति दशमाध्याये व्यवस्थापितम् । तस्मात् आरुण्यस्य

तृतीयार्थान्वयित्वस्याविकलत्वात् मदीयो हेतुः नासिद्ध त्वदीयस्तु अप्रयोजक एवेति ॥

अथाष्टमी—

अनुवादापेक्षया जघन्यापि अत्र क्रयसाधनसंख्यानतिरेकफला परिसंख्यैव अवश्यमभ्युपगन्तव्या । अन्यथा निर्वापवाक्ये संख्यावत् इहाप्यारुण्यस्य स्वातन्त्र्येण क्रयसाधनत्वे संख्यामुष्ट्योरुभयोः असंभवस्थले मुष्टित्यागवदिह अरुणिमैकहायन्योरुभयोरसंभवस्थले गोरेव एकहायनीशब्दोपात्तायाः त्यागप्रसङ्गात् । न च तादृशस्थलदौर्लभ्यम्; यत्र अरुणा पिङ्गाक्षी मेषी लब्धा, अतथाभूता गौर्लब्धा; अरुणा पिङ्गाक्षी एकहायनी गौस्तु न लब्धा; तत्र आरब्धस्य क्रतोरवश्यसमापनीयत्वेन अन्यतरपरित्यागेन अनुष्ठाननिर्वृत्त्यवश्यंभावात् । न च वाच्यं यत्रारुणा पिङ्गाक्षी एकहायनावस्थापन्ना मेषी लब्धा, अतथाभूता गौर्लब्धा, तत्र भूयोऽनुग्रहन्यायेन गौस्त्यक्तव्या स्यादित्येवं तवापि तुल्यो दोष इति; मन्मते भूयसामप्यारुण्यादीनां द्रव्यशेषत्वेन शेषिविरोधे, भूयस्त्वेऽपि शेषाणामेव त्यक्तव्यत्वात् । अत एव 'द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात्' इति षष्ठाध्यायाधिकरणे— यत्र खदिरस्तनुत्वेन तक्षणाद्ययोग्यः पशु-

T

नियोजनमात्रयोग्यो लब्धः, तत्प्रतिनिधिः कदरस्तु महत्त्वेन तक्षणादीनामपि योग्यो लब्धः, तत्र बहूनां संस्काराणामनुग्रहाय यूपार्थं कदरो ग्राह्य इति पूर्वपक्षं कृत्वा, बहूनामपि संस्काराणां द्रव्यशेषत्वात् शेष्यनुग्रहार्थं खदिर एव ग्राह्य इति सिद्धान्तितम्। तस्मादसिद्ध एव त्वद्धेतुः, मद्धेतुर्नाप्रयोजक इति॥

अथ नवमी——

परिसंख्यानङ्गीकारे अरुणावाक्यस्यापि संख्यामुष्ट्यधिकरणन्यायविषयत्वापत्तिरिति यदुक्तं तदयुक्तम्; यत्र अरुणा मेषी लब्धा, पिङ्गाक्ष्येकहायनी गौर्लब्धा, तत्र स्वातन्त्र्येण क्रयसाधनयोः पिङ्गाक्षिरूपावयवैकहायनीद्रव्ययोः द्वयोरनुग्रहाय एकस्यारुण्यस्यैव त्यागः 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्स्वधर्मत्वम्' इति न्यायतः प्राप्नोतीति न तत्र संख्यामुष्ट्यधिकरणन्यायः प्रसज्यते। यत्र अरुणा पिङ्गाक्षी मेषी, एकहायनी गौश्च लब्धा, तत्र उक्तन्यायप्रसक्तौ इष्टापत्तिरिति अरुणाधिकरणन्यायेनैव हि चतुष्कस्य निर्वापशेषत्वमाश्रित्य मुष्टित्यागः तत्राधिकरणे व्युत्पादितः। तथा चतुष्कवत् अरुणिमापि तस्याधिकरणस्य कथं विषयो न स्यात्। अरुणिमैकहायनीविरोधः क्वाचित्कत्वात् अस्पष्टः। संख्यामु-

T

ष्टिविरोधः सार्वत्रिकत्वात् स्पष्ट इति वा, अरुणाशब्दस्य नि-ष्कृष्टगुणेऽपि शक्तिसद्भावात् 'अरुणया' इति निर्देशस्य द्रव्य-शेषत्वपक्षेऽपि विशेषणविभक्तितया प्रयोगसाधुत्वमात्रार्थत्वस्य अवश्यवक्तव्यत्वात् तथैव क्रियाशेषत्वपक्षेऽपि स्त्रीलिङ्गस्य तन्मात्रार्थत्वोपपत्तेः आरुण्यस्य क्रियाशेषत्वमस्तु; चतुष्ट्वं तु न क्रियाशेषः; 'आदशतः संख्याः संख्येये' इत्यनु-शासनविरोधेन चतुःशब्दस्य निष्कृष्टगुणपरताया वक्तुमश-क्यत्वात्। अतो मुष्टिविशेषणमेव चतुष्ट्वमित्यधिकाशङ्का निरा-करणीयेति तस्मिन्नधिकरणे संख्यामुष्ट्युदाहरणं कृतम् न्यायसाम्येनापतत् आरुण्यस्यापि तदधिकरणन्यायविषयत्वं न दण्डेन वारयितुं शक्यम्। यत्र तु वाक्यभेदादिदोषप्रस-ङ्गात् 'अभिदग्धे सोमे पञ्च गा दद्यात्' इत्यत्रेव गुणवाचिश-ब्दस्य गुणशक्तिबलात् अभेदोपचाराद्वा गुणस्य द्रव्यवि-शेषणतैव केवलम्— यथा 'अश्वः श्यावो दक्षिणा' 'पि-शङ्गी पष्ठौही दक्षिणा' 'श्वेतायै श्वेतवत्सायै दुग्धं मथित-माज्यं भवति' इत्यादौ, तत्र विशेषणस्य गुणस्याप्राधा-न्यात् द्रव्यगुणविरोधे गुणस्य त्याग इति संख्यामुष्ट्यधिक-रणपूर्वपक्षन्यायः प्रवर्तते। तद्विषयमेव च— 'विशेषणं वि-शेष्येण बहुलम्' इति सूत्रे 'यत्र हि अन्यतरद्द्रव्यम् अ-

न्यतरो वा गुणः, तत्र यद्द्रव्यं तत्प्रधानम् , तद्यथा— 'शुक्लमालभेत' 'कृष्णमालभेत' इति न पिष्टपिण्डमालभ्य कृतार्थो भवति— इति महाभाष्यवचनम् । तस्मात् दशक्रयवचनस्य परिसंख्याविधित्वकल्पकाभावात् वैखानसाधिकरणन्यायेन तस्य यथाप्राप्त्यनुवादकतैव उचितेति आरुण्यस्य क्रयान्वये बाधकाभावात् कारकविभक्तेः संभवत् साफल्यं नोपेक्षणीयमिति मदीयो हेतुर्नासिद्धः, त्वदीयस्तु अप्रयोजक इति सिद्धमारुण्यस्य क्रयसाधनत्वम् ॥

इति क्रयारुण्यान्वयवादः ॥ ८ ॥



T

# योगलक्षणाशङ्कानिरासार्थजीवान्तर्यामि-शक्तिवादः ॥

गुणे नीलादिशब्दानां शक्तिं गुणिनि लक्षणाम् ।
वदन्ति केचिदनयोरिच्छन्ति व्यत्ययं परे ॥

गुणे गुणिनि चास्माभिस्तेषां शक्तिः समर्थिता ।
सा शक्तिरेकानेका चेत्येतदप्यत्र चिन्तितम् ॥

केचिदाहुः क्रयेणैव द्रव्येणैवान्वयं परे ।
उभाभ्यामन्वयोऽस्माभिरारुण्यस्य समर्थितः ॥

शक्तिमेव द्रढीकर्तुमुभयोरुपजीव्यताम् ।
समर्थितोऽत्रारुण्यस्य क्रयद्रव्योभयान्वयः ॥

एवं गुणे गुणिनि च क्रमाच्छक्तिप्रसाधनम् ।
जीवान्तर्यामिपर्यन्तं तेषां शक्तिप्रसिद्धये ॥

यथा हि गुणिपर्यन्तं गुणशक्तिः प्रधावति ।
तथैव तावत्पर्यन्तं सा प्रधावेत्क्रमादिति ॥

तत्र यदि गौरोऽहम् इत्यादिव्यवहारः मत्वर्थीयप्रत्ययोत्प-

T

त्तिप्रयुक्तेन योगेन लक्षणया वा निर्वहेत्, तदा गौरादिशब्दानां जीव एव शक्तिर्न सिध्येत्; दूरे तद्द्वारा अन्तर्यामिणि शक्तिरिति शङ्कानिरासाय तेषां जीवे शक्तिं प्रसाधयितुं कथा प्रस्तूयते—

गौरदेहविशिष्टो जीवः गौरशब्दवाच्यः, गौरत्वजात्याश्रयत्वात्, यो गौरत्वजात्याश्रयः, स गौरशब्दवाच्यः—यथा गौरवर्णः— इति प्रथमा कक्ष्या ॥

असिद्धोऽयं हेतुः, गुणगतजातिं प्रति आत्मन आश्रयत्वे प्रमाणाभावात् । तस्मात् गौरदेहविशिष्टो जीवः न गौरशब्दवाच्यः, गौरत्वजात्यनाश्रयत्वात्, यो गौरत्वजात्यनाश्रयः स न गौरशब्दवाच्यः— यथा शुक्लवर्णः— इति द्वितीया ॥

मद्धेतुर्नासिद्धः, 'गौरो वर्णः' इति प्रतीत्यविशिष्टायाः 'गौरोऽहम्' इति प्रतीतेरात्मनः गौरत्वजात्याश्रयत्वे प्रमाणत्वात् । अत एव त्वद्धेतुरसिद्धः— इति तृतीया ॥

'गौरोऽहम' इति प्रतीतेः अक्लृप्तमात्मनः गौरत्वजात्याश्रयत्वं धर्मं परिकल्प्य तद्विषयत्वकल्पनात् क्लृप्तगौरदेहवैशिष्ट्यविषयत्वकल्पनं ज्यायः । अतस्त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्धः— इति चतुर्थी ॥

T

तथा सति 'गौरोऽहम्' इति आत्मनि गौरशब्दप्रयो न घटेत; गौरशब्दस्य गौरत्वजातिविशिष्ट इव गौरद्रव्यवि शिष्टे शक्त्यभावात्। तस्मात् अविगीतप्रयोगानुसारे आत्मनो देहगुणगतजात्याश्रयत्वमङ्गीकरणीयम् इति सद्धे तुर्नासिद्धः। त्वद्धेतुरेवासिद्धः— इति पञ्चमी॥

वर्णवाचिगौरशब्दात् अर्शआद्यजन्तात् मतुब्लोपे सा गौरशब्दस्य गौरद्रव्यविशिष्टविषयत्वं योगेन लभ्यते मत्वर्थीयप्रत्ययान्तात् तत्सरूपस्यैव मत्वर्थीयप्रत्ययान्तरस्या निष्टत्वेन तद्विरूपप्रत्ययस्यानिषेधात्। यद्यपि विरूपावपि मत्व र्थीयप्रत्ययौ समानवृत्तौ नेष्येते, तथापि गौरवर्णोऽस्मि न्नस्ति— इति सप्तम्यर्थवृत्तात् अर्शआद्यजन्तात् गौरो देहोऽस्य अस्तीति षष्ठ्यर्थवृत्तमतुब्लोप उपपद्यते; 'दण्डि मती शाला' इत्यादौ असमानवृत्तरूपप्रत्ययाङ्गीकारात् एवम् 'गौरोऽहम्' इत्यादेरन्तर्यामिपर्यन्तत्वं पुनरपि अर्श आद्यचा सप्तम्यर्थवृत्तेन उपपद्यते। अन्तर्यामिणः परमेश्वर स्य सर्वाधारत्वेन जीवान्तर्यामिणोः स्वस्वामिभाववत् आधे याधिकरणभावस्यापि सत्त्वात्। अथवा गौरादिशब्दाः गौ रदेहादिविशिष्टे जीवे तद्विशिष्टेऽन्तर्यामिणि च लक्षणया व र्तिष्यन्ते। तस्मात् शक्तिं विनापि जीवान्तर्यामिणोः गौ

रादिशब्दप्रयोगनिर्वाहात् तस्य तयोः शक्तिसिद्ध्यर्थं गुणगतजात्याश्रयत्वं नाङ्गीकर्तव्यमिति त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्धः—इति षष्ठी ॥

एवं योगेन लक्षणया वा निर्वाहः सार्वत्रिको न भवति, 'पाण्डुरहम्' 'बभ्रुरहम्' 'श्वेतोऽहम्' इत्यादिप्रयोगाव्यापनात् । अतस्तत्र आत्मनः परम्परया गुणगतजात्याश्रयत्वमङ्गीकृत्य तत्प्रवृत्तिनिमित्तत्वमेव कल्पनीयमिति गौरादिशब्देष्वपि एषैव गतिराश्रयितुं युक्ता । न तु मत्वर्थीयप्रत्ययपरम्पराविन्यासेन लक्षणाश्रयणेन वा क्लिष्टगतिः—इति सप्तमी ॥

'पाण्डुरहम्' इत्यादिव्यवहारस्य पाण्ड्वादिवर्णविशिष्टदेहाभेदोपचारेण उपपत्तेः न तन्निर्वाहार्थं गुणगतजात्याश्रयत्वम् आत्मनः कल्पनीयम्, अक्लृप्तप्रवृत्तिनिमित्तकल्पनेन शक्तिनिर्वाहात् क्लृप्तेन शक्यसंबन्धेन लक्षणाश्रयणस्य ज्यायस्त्वात्— इति अष्टमी ॥

एवं सति 'पाण्डुरहम्' इत्यादिव्यवहाराणामौपचारिकत्वकल्पनम् 'गौरोऽहम्' इत्यादिप्रतीतीनां विषयगौरवाश्रयणम्, तन्मूलव्यवहाराणां प्रक्रियागौरवेण लक्षणया वा निर्वहणम्— इति बहवो दोषाः प्रादुष्युः । ततो युक्ततरमात्मनि एकस्यैव गुणगतजात्याश्रयत्वस्य कल्पनम्— इति

नवमी ॥

औपचारिकत्वकल्पनं तावन्न दोषः, देहाभेदोपचा भिप्रायेणैव प्रयुक्तेषु वाक्येषु तस्यावश्याश्रयणीयत्वेन क्ल त्वात् । प्रतीतीनां विषयगौरवाभ्युपगमोऽपि न दोषः, गौरे हविशिष्टात्मबुबोधयिषया प्रयुक्तेषु वाक्येषु तस्यापि अवश्य श्रयणीयत्वात् । अत एव प्रक्रियागौरवाश्रयणं लक्षणा यणं वा न दोषः, उदाहृतप्रतीतिमूलप्रयोगनिर्वाहार्थं तत अवश्याश्रयणीयत्वात् । नैवमात्मनो गुणगतजात्याश्रयत्व वश्यमङ्गीकरणीयम्— इत्यत्र उपपादकमस्ति । अतः प्रमाण भावात् त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्धः—इति दशमी।

अथैकादशी—

गौरोऽहम्— इत्यभेदोपचारतात्पर्येण प्रयुक्ते वाक्ये गौ रशब्दस्य गौरत्वजातिविशिष्टविषयकत्वं पदद्वयसमभिव्या हारस्य गौरत्वजातिविशिष्टाभेदविषयत्वं च तावत् तवा संप्रतिपन्नम् । तदेव तद्विशिष्टवैशिष्ट्यबुबोधयिषया प्रयुक्ते ऽपि वाक्ये अङ्गीकर्तुं युक्तम्; क्लृप्तत्वात् लघुत्वाच्च विशिष्टवैशिष्ट्ये तु अर्थात् सिध्यति इत्यपि तात्पर्यमुप पद्यते— धूमोऽस्तीति वाक्यस्य वह्नाविव । सिध्यति चार्थात् गुणगतजातिपरम्परासंबन्धघटकतत्तद्विशिष्टवैशि-

ष्ट्यम् । यद्यपि शब्दत एव विशिष्टवैशिष्ट्यं बुध्यताम् इति तात्पर्येण प्रयुक्ते वाक्ये मत्वर्थीयप्रत्ययेन विशिष्टवैशिष्ट्यविषयत्वमपि क्लृप्तम्, तथापि विषयलाघवात् मदुक्तमेवाङ्गीकरणीयम् । एवं च जीवस्य अन्तर्यामिणो वा परम्परया देहगुणगतजात्याश्रयत्वकल्पनादपि तत्कल्पनागौरवं न दोषः । क्लृप्तत्वेन लघुत्वेन च गौरोऽहम्—इत्युपचारतात्पर्यरहितस्यापि वाक्यस्य गौरत्वजातिविशिष्टाभेदविषयत्वसिद्धौ तन्निर्वाहार्थकल्पनागौरवस्य फलमुखत्वात् । वस्तुतस्तु नात्र कल्पना काचिदन्या प्रवर्तते; किंतु क्लृप्तत्वलघुशरीरत्वानुसंधानरूपलाघवतर्कानुगृहीतं गौरोऽहमिति व्यवहारमूलं प्रत्यक्षमेव आत्मनः परम्परया गुणगतजात्याश्रयतायां प्रमाणं पर्यवस्यति । एवमेव गुणाश्रयद्रव्यस्य परम्परया गुणगतजात्याश्रयतायाम् 'नीलो घटः' इत्यादिप्रतीतिव्यवहारौ प्रमाणमिति गुणशक्तेः गुणिपर्यन्तता । तत्रापि विवदमानः उक्तरीत्यैव प्रतिबोधनीयः । अव्यतिरेकवार्तिकप्रदर्शनाच्च— 'अव्यतिरेकात्सिद्धमिति चेन्न दृष्टो व्यतिरेकः' इति शब्दवार्तिकं हि गुणवचनेभ्यो मतुब्लोपानुशासनस्य वैयर्थ्यशङ्कामुद्भाव्य तत्परिहारार्थम्; गणगुणिनोरभेदभ्रान्तिरत्र शङ्काबीजम् । अभेदभ्रान्तेश्च 'नीलो घटः' इत्यादिव्यवहार एव मूलम् ।

स च तस्याः तदा मूलं भवेत्; यदि तत्र नीलशब्दो नील-त्वजातिविशिष्टविषयः स्यात्। नीलगुणविशिष्टविषयत्वे तु अभेदभ्रान्तिनिवर्तकतामेवाश्नुवीत; न तन्मूलताम्। ननु उदाहृतवार्तिकगतम् अव्यतिरेकपदं नाभेदपरम्; किंतु अव्य-भिचारपरम्, 'न गुणा गुणिनं व्यभिचरन्ति' इति तद्वि-वरणभाष्यदर्शनात् इति चेत्; न; भिन्नयोः सत्यपि अ-व्यभिचारे भेदप्रयुक्तमतुप्प्रसक्तिसत्त्वेन अव्यभिचारस्य शङ्काबीजत्वाभावात्। 'दृष्टो व्यतिरेकः' इति परिहारवा-र्तिकविवरणभाष्ये 'दृश्यते व्यतिरेकः— तद्यथा वस्त्रस्य शुक्लः' इति भेदव्यवहारस्य उदाहृतत्वाच्च। तस्मात् 'न गुणा गुणिनं व्यभिचरन्ति' इति भाष्यम्— व्यभिचारे हि भेदः प्रतीयेत इति अभेदो न सिध्येत्; न तु व्यभिचारोऽस्तीति अभेदबाधकशङ्कानिरासेन अभेदोपपादनपरं पीलुपाकप्रक्रि-यावलम्बनेन प्रवृत्तम्— इति व्याख्येयम्। एवं च भेदव्य-वहारदर्शनात् सत्यपि गुणगुणिनोर्भेदे, गुणवत् गुणिनोऽपि गुणगतजात्याश्रयतयैव गुणवचनैर्बोध्यमानतया तन्मूला तयो-रभेदभ्रान्तिः शङ्कावादिनः— इति भाष्यकाराशयः स्थितः। तन्मूलाभेदभ्रान्तिकृत एव केषांचित् गुणगुण्यभेदवादोऽपि। यत्तु परिहारवार्तिकविवरणभाष्याशयप्रदर्शनप्रवृत्तेन प्रदी-

पकृता उपायापायवन्तो गुणा गुणिनं व्यभिचरन्तीत्युक्तम्, तत्— भाष्यकारैः पीलुपाकप्रक्रियावलम्बनेन प्रवृत्तः शङ्कावादी तदवलम्बनेनैव बोधनीयः— इत्यभिप्रेत्य भेदव्यवहारप्रदर्शनेनैव परिहारे कृतेऽपि, पक्षान्तरेऽपि परिहारा भवन्ति— इति न्यायात् पिठरपाकप्रक्रियामाश्रित्य परिहारान्तरप्रदर्शनपरम्; न तु तस्य भाष्यस्य व्याख्यानरूपम्; तदननुगुणत्वात् । तस्मात् 'मम देहो गौरः' इति देहस्येव 'अहं गौरः' इति जीवस्यापि गौरत्वाश्रयत्वेन भासमानत्वात् तथाभूतभानमूलकाभेदभ्रान्तिनिवर्तनार्थं शब्दाभियुक्तकृतयत्नदर्शनात् तथाभूतभानमेवावलम्ब्य अद्यापि कैश्चित् गुणगुण्यभेदस्य प्रसाध्यमानत्वाच्च परम्परया गौरत्वाश्रयत्वं देहस्येव जीवस्य तदन्तर्यामिणश्च अवश्यमङ्गीकर्तव्यमिति मद्धेतुर्नासिद्धः । त्वद्धेतुरेवासिद्धः । अतो जीवेऽन्तर्यामिणि च गौरादिशब्दानां न योगेन लक्षणया वा वृत्तिः । किंतु शक्तिरेवेति सिद्धम् ॥

## इति योगलक्षणाशङ्कानिरासार्थजीवान्तर्यामिशक्तिवादः ॥ ९ ॥





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# भ्रममूलत्वशङ्कानिरासार्थजीवान्तर्यामिशक्तिवादः ॥

गौरादिशब्दानां जीवे योगेन लक्षणया रूढिशक्त्या वा वृत्तिर्नाङ्गीकरणीया; दूरेऽन्तर्यामिणि; 'गौरोऽहम्' इत्यादिव्यवहाराणां शुक्तिरजतव्यवहारवत् भ्रममूलत्वात्– इति शङ्कानिरासेन तत्र तेषां शक्तिं व्यवस्थापयितुं कथान्तरं प्रस्तूयते–– अत्र आदितः कक्ष्यात्रयं पूर्ववत् ॥

अथ चतुर्थी—

'गौरोऽहम्' इत्यादिप्रतीतिः नात्मनि गौरत्वादिवैशिष्ट्यविषया; किंतु गौरादिगुणविशिष्टे शरीर एव आत्मत्वारोपरूपा; स्थूलोऽहम्, गौरोऽहम्, ब्राह्मणोऽहम्–इत्यादिप्रकारेण स्वशरीरं पश्यन्नेव हि पुरुषः तदेव अहमर्थमात्मानं मन्यते। उक्तप्रतीतेः आत्मविशेष्यकत्वेऽपि रक्तस्फटिकरीत्या तस्मिन्सन्निहितशरीरगतगौरगुणाद्यारोपरूपैव सा। अतः त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्धः— इति ॥

अथ पञ्चमी—

उदाहृतप्रतीतेः औत्सर्गिके प्रमात्वे मदुक्तरीत्या निर्वोढुं शक्ये भ्रमत्वं न कल्पयितुमुचितम् । अतो विपरीते हेत्वोः सिद्ध्यसिद्धी इति ॥

अथ षष्ठी—

भ्रमत्वमसंप्रतिपन्नं नास्याः कल्प्यम् ; देहात्मभ्रमस्य लोकायतिकातिरिक्तसकलवादिसंप्रतिपन्नत्वात् । अतः हेत्वसिद्धिसिद्धी त्वदुक्तविपरीते— इति ॥

अथ सप्तमी—

देहातिरिक्तमात्मानमवगच्छताम् इयं प्रतीतिः प्रमाणत्वेन उपपादनीया ; न भ्रमत्वं नेतव्या ; बाधकाभावात् । अतः मदुक्तरीत्यैव हेत्वोः सिद्ध्यसिद्धी— इति ॥

अथाष्टमी—

असिद्धो बाधकाभावः ; शरीरस्य आत्मानाश्रितत्वेन शरीरगतस्य गौरगुणादेः शरीरद्वारेण आत्माश्रितत्वानुपपत्तेः । शरीरं हि स्वावयवानेवाश्रित्य तिष्ठति । तत्प्रविष्टः पुरुषः गृहं प्रविष्ट इव तत्र सुखदुःखादि अनुभवन् आस्ते । तस्मात् शास्त्रतो देहाहमर्थविवेकवतामपि साक्षात्काररूपः

देहात्मभ्रमः रक्तस्फटिकदर्पणमुखादिभ्रमन्यायेन अनुवर्तते- इत्येवमुक्तप्रतीतेः भ्रमत्वमेवाश्रयणीयम् । अतः त्वद्धेतुर- सिद्धः, मद्धेतुर्नासिद्धः इति ॥

अथ नवमी---

शरीरमात्माश्रितं तदपृथक्सिद्धमेव । तदेतत् आत्मोत्क्रम- णानन्तरमेव शरीरस्य शोषविशरणावस्थाप्राप्त्यनुभवेन अव- गम्यते । अतः विवेकिनां व्युत्थानसमयेषु कदाचित् भ्रमा- नुवृत्तिसंभवेऽपि देहात्मभेदानुसंधानसमयेषु भवन्ती 'गौ- रोऽहम्' इत्यादिप्रतीतिः प्रमात्वेनैव उपपादनीया । अतो मद्धेतुर्नासिद्धः, त्वद्धेतुश्च असिद्ध इति ॥

अथ दशमी—

जीवोत्क्रमणानन्तरं शरीरस्य यत् शोषविशरणं दृश्यते, तत् जीवविशेषप्रयुक्तम् इत्यत्र गमकं नास्ति; जीवोत्क्रमण- समये तदन्तरप्रतिपत्त्यधिकरणोक्तन्यायेन तदीयोपादानसा- रांशभूतसूक्ष्माणामपि सहोत्क्रान्त्या तद्विश्लेषणे मूलविश्लेषणे शाखानामिव—शोषणविशरणोपपत्तेः । अतः त्वद्धेतुरसिद्धः मद्धेतुर्नासिद्धः इति ॥

अथ एकादशी—

'अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीव-

न्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनात्मना अनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति । अस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वं शुष्यति' इति श्रुत्या शाखाशोषणस्य जीवोत्क्रमणप्रयुक्तत्वं प्रतिपादितम् । तन्न्यायेन शरीरान्तरशोषणमपि तत्प्रयुक्तम् इत्येवावगम्यते । तस्मात् उभयथापि उपपद्यमानः जीवोत्क्रमणानन्तरं शरीरशोषणाद्यनुभवः जीवविश्लेषप्रयुक्तशोषादिविषयः इत्येव आश्रयणीयमिति, ततः शरीरस्य जीवाश्रयत्वसिद्धेः मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति ॥

अथ द्वादशी—

न उदाहृतश्रुतिः शाखाशोषणस्य जीवोत्क्रमणप्रयुक्तत्वं प्रतिपादयति; किंतु तदानन्तर्यमात्रम् । तत्तु शरीरोपादानभूतसूक्ष्माणां जीवेन सह उत्क्रान्त्यवश्यंभावात् पारलौकिकदेहारम्भकादृष्टकृतमपि उपपद्यते । अतो देहस्य जीवाश्रितत्वे प्रमाणाभावात् त्वद्धेतुरासिद्धः, मद्धेतुर्नासिद्ध इति ॥

अथ त्रयोदशी—

'स एष जीवेनानुप्रभूतः' इत्यस्य 'यदेकां शाखाम्' इति

T

च देहपोषणशोषणयोः जीवान्वयतद्व्यतिरेकौ प्रदर्शयन्ती, उदाहृतश्रुतिः देहशोषस्य जीवोत्क्रमणप्रयुक्तत्वं प्रतिपादयत्येव । न तु आर्थसमाजवशप्राप्ततदानन्तर्यमात्रं प्रतिपादयति; अन्वयव्यतिरेकप्रदर्शनस्य तत्प्रयुक्तत्वप्रतिपत्त्यर्थत्वात् । तस्मात् उदाहृतश्रुतिः जीवोत्क्रमणसमये भूतसूक्ष्मोत्क्रमणश्रुतिं च अनुरुध्य देहोपादानभूतसूक्ष्माणां तद्द्वारा देहस्य च जीवाश्रितत्वमभ्युपगम्य 'गौरोऽहम्' इत्यादिविवेकिव्यवहाराणां प्रमात्वोपपादनमेव युक्तम्, औत्सर्गिकप्रमात्वनिर्वाहसंभवे भ्रमत्वकल्पनायोगात् । न च एवं विवेकिव्यवहार एव नास्तीति विवदितुं शक्यम्, 'पुरुषं कृष्णपिङ्गलम्' इत्यादिवैदिकव्यवहाराणाम्, 'अर्धपुंलक्षणं वन्दे पुरुषं कृष्णपिङ्गलम्' इत्यादितन्मूलपौराणिकव्यवहाराणां च वेदेषु पुराणेषु च गौरकृष्णलोहितादीनां प्रयोगाणां च बहुलमुपलम्भात्, वेदस्य यथावत् वेदार्थनिबन्धृणामृषीश्वराणां च परमेश्वरादिदेहतादात्म्यैक्यभ्रममूलोऽयं व्यवहार इति वा तदीयस्यैव देहात्मैकत्वभ्रमस्य अनुवादरूपोऽयमिति वक्तुमशक्यत्वात् तन्न्यायेन विवेकिनामपि 'गौरोऽहम्' इत्यादिव्यवहाराणां तन्मूलप्रतीतीनां च संभावितानां प्रतिषेद्धुमशक्यत्वात् । तस्मात् देहोपादान-

T

भूतसूक्ष्मतदाश्रितदेहवत् गौरादिगुणतदीयगौरत्वादिजातीनामपि जीवाश्रितत्वोपपत्तेः मदीयहेतुसिद्ध्यर्थप्रमाणे त्वदुक्तबाधकानवतारात् मदीयो हेतुर्नासिद्धः, त्वदीय एवासिद्ध इति सिद्धं जीवस्य गौरादिशब्दवाच्यत्वम् । तत एव तद्द्वारा अन्तर्यामिणोऽपि तद्वाच्यत्वमिति ॥

इति भ्रममूलत्वशङ्कानिरासार्थजीवान्तर्यामिशक्तिवादः ॥ १० ॥



T

# गौरोऽहमित्यादिप्रतीत्यविषयत्वशङ्का-निरासार्थान्तर्यामिशक्तिवादः ॥



अस्मदादिदेहादिगुणवाचिनां गौरादिशब्दानां जीवे शक्तिसत्त्वेऽपि न तदन्तर्यामिणि शक्तिरस्ति ; प्रमाणाभावात्— इति शङ्कानिरासाय कथान्तरं प्रस्तूयते—

तत्र आदितः कक्ष्याद्वयं पूर्ववत् । गौरदेहविशिष्टजीवान्तर्यामी इति पक्षनिर्देशः— इति विशेषः ॥

'गौरोऽहम्' इत्यादिब्रह्मविदनुसंधानस्य अन्तर्यामिपर्यन्तत्वात् मद्धेतौ प्रमाणाभावोऽसिद्धः । अत एव त्वद्धेतुरसिद्धः— इति तृतीया ॥

अथ चतुर्थी—

दहराद्युपासकाः खलु ब्रह्मविदः । ताश्चाहंग्रहोपासनाः जीवब्रह्माभेदविषयाः ; 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि तद्योऽहं सोऽसौ योऽसौ सोऽहम् अथ योऽन्यां देवतामुपास्ते अन्योसावन्योऽहमस्मीति न स वेद यथा पशुरेवम्' इत्यादिश्रुतिस्वारस्यात् । ततश्च दहरा-

T

द्युपासनाभ्यासदशापन्नानां स्वभावनाप्रतिपादकवाक्ये— यथा शिवादिशब्दाः परब्रह्मपराः—एवमहंशब्दः प्रत्यगात्मपरः। उपासनाविषयस्तयोरभेदस्तु मुखचन्द्राद्यभेदवत् वाक्यार्थविधया भासते। एवं च तत्र अहंशब्दस्यैव ब्रह्मपर्यन्तत्वाभावे, कुतः तद्विशेषणत्वेन त्वया उच्यमानस्य गौरादिशब्दस्य तत्पर्यन्तता। ये तु दहराद्युपासकाः चिरं निरन्तराभ्यासदार्ढ्येन प्रत्यगात्मनः शिवात् भेदं विस्मृत्य शिव इत्येव स्वात्मानं भावयन्ति, तेषाम् 'शिवोऽहमस्मि' इति वाक्ये—शुक्तिरजतभ्रममूलकवाक्ये रजतशब्दस्य शुक्ताविव— अहंपदस्य शिवे पर्यवसानसत्त्वेऽपि रजतवाच्यत्वं शुक्तेरिव— अहंशब्दवाच्यत्वमेव अन्तर्यामिणस्तेन न सिध्यति। नतरां तस्य विशेषणगौरादिशब्दवाच्यत्वोपयोगितत्प्रवृत्तिनिमित्ताश्रयत्वम्। अतः प्रमाणाभावात् त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्ध इति॥

अथ पञ्चमी—

परमशिवं परं ब्रह्म दहरादिविद्याभिः स्वाभेदेनोपासीना इव स्वस्य अन्येषां च सर्वेषामन्तर्यामितया नित्यनियामकत्वेन स्वामी परमशिवः तद्दासभूता वयं सर्वे— इत्यन्तर्यामिब्राह्मणादिशास्त्रतोऽवगम्य लौकिकगर्भदासानां त-

T

त्तत्स्वामिनीव अस्माकं सहजसिद्धे स्वामिनि सर्वैश्वर्यसं
महाकारुणिके सर्वात्मना अस्मद्रक्षणजागरूके स्थिते,
अन्यस्य यस्य कस्यचित् आश्रयणं युक्तमिति 'त्वं देवेषु ब्र
ह्मणोऽस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावति उप त
धावामि त्वां प्रपद्ये त्वया प्रसूत इदं कर्म करिष्यामि यो
स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्रा
ति पापीयान्भवति' इत्यादिशास्त्रत: तद्दासभूतै: सर्वैरस्म
भि: अनन्यशरणतया तमेव प्रतिपद्य तदनुज्ञया तदारा
नरूपेणैव सर्वाणि कर्माणि कर्तव्यानीति अवबुध्य तथैव
प्रपद्य तदाराधनरूपाण्येव सत्कर्माणि अनुतिष्ठन्ति, तेऽ
ब्रह्मविदो भवन्त्येव । तेषामन्तर्यामिदृष्ट्या अहमित्यनुसं
धानेषु अहमर्थविशेषणतया भासमानानां गौरत्वादीनाम
तत्पर्यवसानावश्यंभाव: । अतस्तथाभूतानुसंधानरूपप्रमा
सद्भावात् मद्धेतुर्नासिद्ध:, त्वद्धेतुरेवासिद्ध:— इति ॥

अथ षष्ठी—

शिवस्य परब्रह्मण: प्रपत्ते: मुक्तिफलकत्वात् तदन्तर्ग
शिवस्वात्मनो: स्वाम्यदास्यानुसंधाने स्वात्मन्यन्तर्यामि
शिवे वा हेयप्राकृततदातनगौरत्वादिविशेषणं न प्रविशति
'यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेत: प्रेत्य भवति' इति

T

श्रुत्या ब्रह्मवित् यथाभूतयावद्गुणकलापविशिष्टं ब्रह्म अनुसंधत्ते तथाभूततावद्विशिष्टं तत्प्राप्नोति इत्युपदिष्टत्वेन प्रतिपत्तिमत: स्वविशिष्टब्रह्मानुसंधानेऽस्मिन् अन्तर्यामिणि वा प्राकृतदेहतद्गुणादिप्रवेशे तथाभूतस्वविशिष्टब्रह्मप्राप्तिप्रसक्त्या मुक्त्यभावापत्ते: ; 'एक आत्मन: शरीरे भावात्' इत्यधिकरणोक्तन्यायेन ब्रह्मणि तत्तद्विद्योपसंहार्यगुणकलापादिविशिष्टे प्रजापतिविद्योपदिष्टमुक्तिप्राप्यापहतपाप्मत्वादिमात्रविशिष्टस्यैव प्रत्यगात्मन: तन्नियम्यतया अनुसंधानेषु निवेशनीयत्वात् । अत: प्रमाणाभावात् त्वद्धेतुरसिद्ध एव, मद्धेतुश्च नासिद्ध इति ॥

अथ सप्तमी—

शरणागतिरूपाया: प्रपत्ते: मुक्तिरेव फलं न भवति, 'भीता: सुरा दुद्रुवुरङ्ग सेश्वरा अरक्ष्यमाणा: शरणं सदाशिवम्' इत्यादिवचनै: कालकूटाद्यापन्निवारणार्थाया अपि तस्या: प्रतिपादनात् । मुक्तिफलकत्वमपि तस्या: दहराद्युपासनाजन्यसाक्षात्कारद्वारा; निरन्तरचिन्तानुवृत्ते: साक्षात्कारजनकत्वस्य लोके दर्शनात् । 'ततस्तु पश्यते निष्कलं ध्यायमान:' इति शास्त्रदर्शनाच्च । आफलोदयमावर्तनीयानां दहराद्युपासनानामिव शिवमेव विश्वस्य तदाधाररूपतया स-

T

कलसत्कर्मानुष्ठानारम्भात् प्रागनुष्ठेयायाः तस्याः साक्षात्कारजनकत्वासंभवात् साक्षात्काराभावे 'द्रष्टव्यः श्रोतव्यो मन्तव्यः' 'तस्मिन्दृष्टे परावरे' इत्यादिश्रुतिभिः साक्षात्कारफलत्वेनावगताया मुक्तेः तथा साधयितुमशक्यत्वात्। च 'मुमुक्षुर्वै शरणमहं प्रपद्ये' 'अजात इत्येव कश्चिद्भीरुः प्रपद्यते' 'रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम्' इत्यादिशास्त्रप्रामाण्यात् साक्षात्कारद्वारानपेक्षाया एव तस्याः मुक्तिफलकत्वं कल्पनीयम्; उदाहृतश्रुत्योः प्रपत्त्यनुष्ठानकाले मन्त्रत्वेन विधिमन्त्राधिकरणन्यायेन स्वयं मोक्षकामं प्रति प्रतिपत्त्यविधायकत्वात् । सूक्तवाकमन्त्रगतायुरादिफलं तैनैः प्रस्तरप्रहरणस्य आयुरादिफलकत्वबोधकविधेरिव अ फलविधेः कल्पने च, श्रुत्यन्तरासिद्धसाक्षात्कारनियमाविरोधाय तस्याः क्रममुक्त्युपयोगिशिवकैंकर्यैकान्त्याभिरतिद्वारा परम्परया मोक्षफलकत्वेनैव तस्या विधेः कल्पनीयत्वात् अन्यथा सकृत्कृताया अपि तस्याः साक्षान्मोक्षसाधनत्वे तथैव ध्यानोपास्त्यादिशब्दरहितानां विदिमात्रश्रवणवतीनामुपकोसलादिविद्यानामपि सकृदनुष्ठितानामेव साक्षान्मुक्तिसाधनत्वसंभवेन तासामावृत्त्यकल्पनापत्तेः । एतेन 'खाद्यानि चादनीयानि पेयान्यन्यानि यानि च । देयानि तानि

वै शंभोरश्नीयाद्दासभावतः । दासमार्गप्रपन्ना ये शैवपाशुपते स्थिताः । तैरेव पेयं भोज्यं च घ्रातव्यं च मुमुक्षुभिः' इति शिवागमे दासमार्गप्रपन्नेषु मुमुक्षुत्वविशेषणात् प्रपत्तेर्मोक्षसाधनत्वमुररीकरणीयम्— इत्यपि शङ्का निरस्ता, उक्तरीत्या दासमार्गप्रपदनमात्रस्य तथा प्रपन्नेनानुष्ठीयमानस्य निवेदितानामेव स्वीकरणनियमस्य दासबुद्ध्या तत्स्वीकरणस्य वा अन्तःकरणशुद्ध्यादिद्वारमनपेक्ष्य मोक्षसाधनत्वायोगात् । तस्मात् प्रपदनस्य मोक्षफले यज्ञादितुल्ययोगक्षेमत्वात् यज्ञाद्यनुष्ठातुरिव प्रपन्नस्यापि स्वात्मनि गौरोऽहम्— इत्याद्यनुसंधानं न विरुध्यते । ततश्च तस्य अहंप्रत्ययव्यवहारौ अन्तर्यामिपर्यन्तमपि धावतः इति तस्मिन्नपि तत् न विरुध्यते । अविरुद्धं च तत्स्वात्मनीव स्वान्तर्यामिण्यपि कदाचित् भवत् अनिवार्यमेव । तस्मात् मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति सिद्धमन्तर्यामिणोऽपि गौरादिशब्दवाच्यत्वम् ॥

इति गौरोऽहमित्यादिप्रतीत्यविषयत्वशङ्कानिरासार्थान्तर्यामिशक्तिवादः ॥ ११ ॥



T

# अहमादिपदविषयान्तर्यामिपर्यन्तत्वाभावशङ्कानिरासार्थान्तर्यामिशक्तिवादः ॥

अहंपदस्यान्तर्यामिपर्यन्तत्वे खलु तद्विशेषणानां गौ-दिपदानामपि तत्पर्यन्तत्वं भवेत्, तदेवासिद्धमिति वि-तिपत्तिनिरासार्थं कथान्तरं प्रस्तूयते—

तत्रादितः कक्ष्यात्रयम् अव्यवहितपूर्ववादवत् ॥

अथ चतुर्थी—

अहंपदस्य अन्तर्यामिपर्यन्तत्व एव न प्रमाणम्, लो-वेदयोः तस्य तद्विषयप्रयोगादर्शनात् । प्रपन्नानां स्वा-शिवयोः स्वस्वामिभावानुसंधानजन्यः तत्र तत्प्रयोगोऽस्ति-चेत्— न, 'ममान्तर्यामी मत्स्वामी शिवः तस्याहं दासः' इत्येव तत्प्रयोगोपपत्तेः । तथैव लोके तत्प्रयोगदर्शनाच्च तस्मात्त्वद्धेतुरसिद्धः, मद्धेतुर्नासिद्ध इति ॥

अथ पञ्चमी—

'तद्धैतत्पश्यनृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्य-

T

अहं कक्षीवानृषिरस्मि विप्रः' इत्यादिवैदिकप्रयोगेषु अहंपदस्य अन्तर्यामिपर्यन्तता दृश्यते । तत्र व्युत्पन्नानां प्रपन्नानामपि तथैव लौकिकप्रयोगो भवेत् ; वैदिकानामन्यत्र वेदप्रयोगवासनानुवृत्तिदर्शनात् । तस्मात् मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति ॥

अथ षष्ठी—

'अहं मनुरभवम्' इत्यत्र तावत् अहंपदप्रयोगो न नियम्यनियामकतया स्वात्मान्तर्यामिणोः स्वस्वामिभावविषयः, चिरनिरन्तराभ्यस्ताभेदोपासनालब्धाभेदसाक्षात्कारवतो वामदेवस्य मन्वादिसर्वात्मकः शिवोऽहमेवेति शुक्तौ रजतपदमिव अत्र शिवे अहंपदस्य प्रयोग इत्युपपत्तेः । न च तस्य उत्पन्नसाक्षात्कारत्वे प्रमाणाभावः, 'तद्धैतत्पश्यन्' इति तत्रैव तदुक्तिदर्शनात्; तथा 'मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयाः' इत्यादिषु प्रतर्दनं प्रति इन्द्रवाक्येषु 'माम्' इति प्रयोगोऽपि अभेदविषय एव। तत्र इन्द्रस्य ब्रह्मसाक्षात्कारवत्त्वप्रतिपादकशब्दाभावेऽपि ज्ञानस्य हिततमत्वलिंगेन 'स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया' इति तत्फलकीर्तनेन लिंगेन च साक्षात्कारफ-

लकशिवाभेदोपासनारूपतावगमात् । तथा 'त्वामेव वि[illegible]
नीयाम्' इति इन्द्रं प्रति कृतप्रश्नं विश्वामित्रं प्र[illegible]
'प्राणो वा अहमस्मि ऋषे प्राणस्त्वं प्राणः सर्वाणि भूता[illegible]
प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दि[illegible]
विष्टोऽस्मि' इत्युत्तरवाक्ये श्रुतमहंपदमपि इन्द्रेण स्वा[illegible]
न्नतया अवगत एव शिवे पर्यवस्यति ; न त्वन्तर्यामितया[illegible]
गते, तत्र इन्द्रस्य साक्षात्कारवत्त्वप्रतिपादकशब्दाभावे[illegible]
तदुपदिष्टस्य ज्ञानस्य मुक्तिफलकत्वावगमकलिंगाभावे[illegible]
'इन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं [illegible]
मे धामोपागा वरं ते ददामि' इत्यादिना प्रतर्दनाख्यायि[illegible]
श्रुतिसामान्येन तत्तुल्यार्थत्वावगमात् ; 'वयः सुपर्णा उपसे[illegible]
रिन्द्रं प्रियमेधा ऋषयो नाथमाना अपध्वान्तमूर्णुहि पू[illegible]
चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान्' इति मन्त्रेण मुक्तिफल[illegible]
भेदोपासनालाभार्थमेव ऋषीणामिन्द्रोपसदनप्रतिपादना[illegible]
अस्य हि मन्त्रस्य अयमर्थः—प्रियमेधाः यज्ञप्रियाः वि[illegible]
र्थयज्ञादिकर्मानुष्ठानेन शुद्धान्तःकरणाः, अत एव सुपर्णा व[illegible]
शोभनपक्षाः पक्षिणः—यथा पक्षबलवन्तः पक्षिणः सतत[illegible]
त्पतनोत्साहवन्तो भवन्ति—एवमर्चिरादिमार्गसाध्योर्ध्वगमना[illegible]
भिलाषवन्तः मुमुक्षव इति यावत् ; एवंभूता ऋषयः नाथ[illegible]

माना: अर्थयमाना: सन्त: इन्द्रमुपसेदु:, किं नाथमाना इत्याकाङ्क्षितम् उत्तरार्धेन उच्यते— ध्वान्तमविद्यावरणम् अपोर्णुहि अपावृणु, चक्षु: 'मनोऽस्य दैवं चक्षु:' इति श्रुतिप्रसिद्धं चिच्छक्तिरूपं चक्षु: इदानीं संसारदशायां संकुचितं पूर्धि पूरय विकसितं कुरु, निधयेव पाशेनेव विषयजालेन बद्धानस्मान् मुमुग्धि मुञ्च इति। निधाशब्द: पाशवाचित्वेन ऐतरेयब्राह्मणे एव व्याख्यात: 'मुमुग्ध्यस्मान्निधयेव बद्धानिति पाशा वै निधा: मुमुग्ध्यस्मान् पाशादिव बद्धान् इत्येव तदाह' इति। न च 'प्राणो वा अहमस्मि ऋषे' इत्यादे: स्वाभिन्नब्रह्मपरत्वाङ्गीकारे 'त्वामेव विजानीयाम्' इति वाक्यवैरूप्यापत्तिर्दोष:, इन्द्रस्य तेजोविशेषेण दृश्यमानेन इन्द्र: स्वाभिन्नब्रह्मोपासक: इति निश्चित्य तदभिप्रायानुसारेण ब्रह्मविषयतयैव 'त्वाम्' इति प्रयोगोपपत्ते:। 'ब्रह्मविद इव ते मुखं भाति' इत्यादिश्रुत्यन्तरेषु ब्रह्मविदि तेजोविशेषस्य प्रसिद्धत्वात्। एवम् 'अहं ब्रह्मास्मि' इति बृहदारण्यकवाक्यमपि स्वाभिन्नब्रह्मानुसंधानार्थम्; न तु स्वान्तर्यामितदनुसंधानार्थम्; 'यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते' इति उपक्रमे स्वाभिन्नब्रह्मोपासनाजन्यसाक्षात्कारफलस्य सर्वात्मभावस्य कीर्तनात्। स हि तस्यैव फलम्, 'तदपश्यत्तदभवत्प्रजासु' इति

तैत्तिरीयारण्यके श्रवणात्; 'तद्योऽहं सोऽसौ योऽसौ सोऽहं त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' इति वाक्ये त्वमहंशब्दसामानाधिकरण्यमभेदार्थकमिति स्पष्टमेव। अन्यथा व्यतिहारानुपपत्तेः। न हि जीवपरस्य अहंशब्दस्य त्वंशब्दनिर्दिष्टेऽन्तर्यामिणि वा अन्तर्यामिपरस्य त्वंशब्दस्य अहंशब्दानिर्दिष्टे जीवे वृत्तिस्त्वया अभ्युपगम्यते। एतेन 'तत्त्वमसि' इति वाक्यमपि अभेदार्थकत्वेन व्याख्यातम्; अन्यशब्दयोगात् उद्देश्यत्वेनावगते जीवे तत्पदस्य जगत्कारणब्रह्मपरस्य वृत्त्ययोगात्। अतः प्रमाणाभावात् त्वद्धेतुरसिद्धः मद्धेतुश्च नासिद्ध इति॥

अथ सप्तमी—

'अहं मनुरभवम्' इति श्रुतौ मन्वादिशब्दास्तावत् मन्वाद्यन्तर्यामित्वाभिप्रायाः, न तु तदभेदाभिप्रायाः, ब्रह्मणि स्वभेदस्यैव मन्वाद्यभेदस्य प्रागनुचिन्तनाभावेन तद्वासनादार्ढ्यस्य दूरनिरस्तत्वात्; तत्समभिव्याहारात् 'अहम्' इति प्रयोगोऽपि स्वान्तर्यामित्वाभिप्रायः इत्येव युक्तम्। न च अभेदवासनादार्ढ्यात् विस्मृतभेदस्य वामदेवस्य प्रयोगे तथा अभिप्रायकल्पनं न युक्तमिति वाच्यम्; स्वात्मशिवयोः तात्त्विको भेदोऽस्तीति वासनायाः सर्वात्मना लुप्तत्वेऽपि औपाधि

T

कभेदप्रतीतितद्वासनावृत्त्योः सत्त्वात्। अन्यथा उत्पन्नसाक्षात्कारस्य भगवतः कृष्णस्य गीतासु 'तमेव चाद्यं पुरुषं प्रपद्ये' इति कर्मकर्तृभावनिर्देशस्य हरिवंशे तत्कृतविल्वोदकेश्वरस्तुतौ 'अहं ब्रह्मा कपिलोऽथाप्यनन्तः पुत्राः सर्वे ब्रह्मणश्चातिवीराः। त्वत्तः सर्वे देवदेव प्रसूता एवं सर्वेशः कारणात्मा त्वमीड्यः' इति कार्यकारणभावनिर्देशस्य अन्येषां च श्रुतिपुराणादिषु बहुलमुपलभ्यमानानामेवंविधनिर्देशानाम् अनुपपत्तिप्रसङ्गात्। तथा 'मामेव विजानीहि' इति इन्द्रवाक्ये 'माम्' इति प्रयोगोऽपि एवमेव व्याख्येयः। 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इति सूत्रकृता तस्य वामदेववाक्यसमानार्थत्वस्य सूत्रितत्वात्; तथैव भाष्यकृता तस्य सूत्रस्य व्याख्यातत्वाच्च। यत्तु 'अथवा' इत्यादिभाष्येण दृष्टान्तदार्ष्टान्तिकयोरभेददृष्टिपरतया व्याख्यानान्तरं कृतम्, तत् मुक्तिफलकदहराद्युपासनम् अभेदेनैव, न तु स्वस्वामिभावेनेति 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्याद्यधिकरणेषु व्यवस्थापयिष्यमाणस्यार्थस्य सूत्रणमात्रम्, न तु शास्त्रदृष्टिसूत्रविवक्षितत्वाभिप्रायम्; 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात्' इति तदनन्तरसूत्रतद्भाष्ययोः ब्रह्मणः स्वरूपेण इन्द्रशरीरकत्वेन प्राणशरीरकत्वेन च त्रिविधमुपासनामिह वि-

T

वक्षितमिति स्फुटं प्रतिपादितत्वात् । अन्यथा तद्विरोधापत्ते
मुक्तिफलकमुपासनमभेदेन कार्यमिति पक्षमास्थितवतः क
मिहान्तर्यामित्वाभिप्रायवर्णनं संगच्छते इति चेत्— भ्र
न्तोऽसि, न हि इन्द्रान्तर्यामि परं ब्रह्म अहमेवास्मि इ
इन्द्रान्तर्यामित्वेन अनुसंधीयमानस्य स्वाभेदेन अन्यप्रतर्द
दिकर्तृकोपासने कश्चिद्विरोधोऽस्ति, इन्द्रकर्तृकेऽपि स्वान्त
मितया स्वभेदेन च उपासने विरोधो नास्ति, औपाधि
स्वाभाविकभेदाभेदानुसंधानेन च तदुभयोपपत्तेः । अत ए
मुक्तिफलासु मध्वादिविद्यासु वस्वादीनामपि अधिकारो दे
ताधिकरणे व्यवस्थापितः । एवमेव विश्वामित्रं प्रति इन्द्र
चनमपि अन्तर्यामिविषयं द्रष्टव्यम् । एवं च अहमादिपद
नामन्तर्यामिपर्यन्ततया वेदेषु दृष्टत्वात् तेषु व्युत्पन्नाः प्र
न्नाः शिवस्वात्मनोः स्वाम्यदास्यानुसंधानसमयेषु अन्तर्यामि
पर्यन्तमहंपदं प्रयुञ्जाना विरोधाभावादनुसंहितं गौरत्वाद्य
अहमर्थविशेषणत्वेन व्यवहारे निवेशयेयुः । तस्मान्मद्धे
र्नासिद्धः, त्वद्धेतुरेवासिद्ध इति सिद्धमन्तर्यामिणोऽपि गौरा
दिशब्दवाच्यत्वम् ॥

इत्यहमादिपदविषयान्तर्यामिपर्यन्तत्वाभावश-
ङ्कानिरासार्थान्तर्यामिशक्तिवादः ॥

---

# अहमादिपदविषयान्तर्यामित्वपर्यन्त-शक्त्यभावप्रयुक्तशङ्कानिरासार्था-न्तर्यामिशक्तिवादः ॥

अथ अहमादिशब्दानां प्रपन्नप्रयुक्तानामन्तर्यामिणि शक्ति-सत्त्वेऽपि अन्तर्यामित्वेन शक्तिर्नास्तीत्येतत्प्रयुक्तशङ्कानिरा-सार्थं कथान्तरं प्रस्तूयते—

अत्र आदितः कक्ष्यापञ्चकमव्यवहितपूर्ववादवत् ॥

अथ षष्ठी—

अहमादिपदानामन्तर्यामिणि शक्तिर्नास्तीति नोच्यते, किंतु अन्तर्यामित्वेन शक्तिर्नास्ति इति; एकशक्तिपक्षे परम-सिद्धान्तत्वेन त्वया अभ्युपगते स्वात्मन्यहंपदस्य वृत्तौ यदा-त्मत्वं प्रवृत्तिनिमित्तं यश्च स्वात्ममात्रवृत्तिर्धर्मः प्रयोगोपाधिः, ताभ्यामेव परम्परासंबन्धाभ्यां तस्यान्तर्यामिपर्यन्तताया: समर्थनीयत्वात् अनेकशक्तिपक्षे अन्तर्यामिण्यन्तर्यामित्वेन शक्त्यन्तराभ्युपगमसंभवेऽपि तस्य परमसिद्धान्तत्वेन त्वया अनभ्युपगतत्वात् इत्युच्यते । अन्तर्यामित्वेन शक्तिरेव च

त्वत्पक्षोपपादनार्थमपेक्षिता । अतस्तदभावात् प्रपन्ना न गौरो-ऽहमित्यादि अन्तर्याम्यभिप्रायेण प्रयुञ्जते ; किंतु गौरत्वादि-विशिष्टस्य ममान्तर्यामी शिवः स्वामी शिवः इत्याद्येव प्रयुञ्जते इति वक्तव्यम् । अतस्त्वद्धेतुरसिद्धः, मद्धेतुर्नासिद्ध इति ॥

अथ सप्तमी—

अन्तर्यामित्वेन शक्तिः मत्पक्षोपपादनार्थं नापेक्ष्यते, प्रपन्नानां स्वप्रयुक्तस्य अहंपदस्य अन्तर्यामिणि शक्तिसद्भावा-गतिमात्रात् अन्तर्याम्यभिप्रायेण गौरोऽहम् इत्यादिप्रयोग-स्याप्युपपत्तेः । अतः मद्धेतुर्नासिद्धः त्वद्धेतुरेवासिद्ध इति ।

अथाष्टमी—

प्रपन्नाः स्वात्मशिवयोः स्वस्वामिभावरूपं नियम्यनिया-मकभावं स्वानुसंहितं प्रकाशयितुं खलु शब्दान्प्रयुञ्जते अहंपदस्यान्तर्यामिण्येव शक्त्यभावात् स तत्प्रकाशने न समर्थः । अतः ते ममान्तरात्मा इत्यात्मन्येव स्वानुसंहि-तार्थप्रकाशनार्थं प्रयुञ्जत इति त्वद्धेतुरसिद्ध एव, मद्धेतु-र्नासिद्ध इति ॥

अथ नवमी—

अहंपदस्यान्तर्यामिणि स्वात्मवृत्तिभ्यामेव प्रवृत्तिनिमित्त-

प्रयोगोपाधिभ्यां वृत्तावपि तयोस्तस्मिन् परम्परासंबन्धघटकस्वात्मशिवसंबन्धरूपतया स्वात्मशिवयोर्नियम्यनियामकभावस्यापि अन्तर्यामिपर्यन्तादहंपदात् प्रतीतिर्भवत्येव । अतः प्रपन्नानां स्वानुसंहितस्वाम्यदास्यप्रकाशनार्थमन्तर्यामिपर्यन्तो गौरोऽहम् इत्यादिव्यवहारः संभवत्येवेति मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति ॥

अथ दशमी——

स्वात्मशिवयोराश्रयाश्रयिभावादिसंबन्धान्तरस्यापि सत्त्वात् तेनापि परम्परासंबन्धघटनोपपत्तेः अन्तर्यामिपर्यन्तेनाहंपदेन अन्तर्यामित्वप्रतीतिनियमः समर्थयितुं न शक्यते । अतः तत्प्रकाशनैकपरायणं प्रपन्नानामुक्तव्यवहारो न संभवतीति त्वद्धेतुरेवासिद्धः, मद्धेतुश्च नासिद्ध इति ॥

अथैकादशी——

प्रपन्नानां शिवकैंकर्याभिरतिस्थिरीकरणार्थं सहकार्यन्तराधिकरणोक्तन्यायसाम्येन शिवस्वात्मनोः स्वाम्यदास्यानुसंधानाभ्यासवशात् स्वाम्यदास्यरूप एव तयोः संबन्धः स्वात्मवृत्त्यहंपदप्रवृत्तिनिमित्तप्रयोगोपाधिधर्मपरम्परासंबन्धघटकतया स्फुरेत् । स्फुरितसंबन्धतात्पर्येणैव च तेषामन्तर्यामि-

पर्यन्तो गौरोऽहम् इति व्यवहारो वक्तृतात्पर्यानुसारेणैव श्रोतॄणां ततोऽर्थप्रतीतिश्च भवेत्। तस्मादहमादिशब्दानाम-न्तर्यामित्वे शक्त्यभावेऽपि तेभ्योऽन्तर्यामित्वप्रतीतेरुपपन्न-तया प्रपन्नानामन्तर्यामिपर्यन्ते गौरोऽहम् इत्यादिव्यवहारे अनुपपत्त्यभावात् मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति सिद्धं मदनुमानेन अन्तर्यामिणो गौरादिशब्दवाच्यत्वम्॥

इति अहमादिपदविषयान्तर्यामित्वपर्यन्तशक्त्य-भावप्रयुक्तशङ्कानिरासार्थान्तर्यामिश-क्तिवादः॥ १३॥



T

# ब्राह्मणादिशब्ददृष्टान्तप्रसक्तगौरादिशब्दवाच्यत्वशङ्कानिरासार्थान्तर्यामिशक्तिवादः ॥

अथ गौरोऽहम् इत्यादिप्रपञ्चानुसंधानमूलकव्यवहारेषु अहंपदस्य अन्तर्यामिपर्यन्तत्वेऽपि तद्विशेषणगौरादिपदानां न तत्पर्यन्तत्वम्, तथात्वे बाधकसद्भावात् इति शङ्कानिरासार्थं कथान्तरं प्रस्तूयते—

तत्र आदितः कक्ष्यात्रयं पूर्ववत् ॥

अथ चतुर्थी—

गौरत्वादिविशेषणानाम् अन्तर्यामिपर्यन्तत्वे तत्तुल्यन्यायतया 'ब्राह्मणोऽहम्' 'क्षत्रियोऽहम्' इत्यादिव्यवहारेषु ब्राह्मणत्वादिविशेषणानामपि तत्पर्यन्तता स्यादिति अन्तर्यामिणः परब्रह्मणः शिवस्यापि ब्राह्मणाद्यधिकारिकर्मविधिनियोज्यता प्रसज्यते । न च ब्राह्मणक्षत्रियादिशरीरावच्छिन्नावस्थतया ब्राह्मणादिशब्दवाच्यतापन्नस्यान्तर्यामिणः तत्तच्छरीरावच्छेदेन तत्तदधिकारिकर्मनियोज्यतायामिष्टापत्तिः;

T

तथा सति पूर्वपूर्वशरीरावच्छिन्नान्तर्यामिकृतकर्मजन्यान्युत्तरोत्तरशरीराणि स परिगृह्णातीति तस्य कर्मजन्यशरीरपरिग्रहेण जीवाविशिष्टतया जीववत्तत्तच्छरीरप्रयुक्तसुखदुःखभोक्तृत्वापत्तेः । न च शिवोद्देश्यकैरङ्गप्रधानभूतैर्यागहोमैः करान्वितेषु कर्मसु तस्य नियोज्यता न संभवति, आत्मानमुद्दिश्य त्यज्यमानस्य हूयमानस्य वा द्रव्यस्य स्वत्वत्यागासंभवात्, अतो न देवता देवतान्तराभावात् इति तिर्यगधिकरणोक्तदेवतानधिकारन्यायसाम्यात्तस्य कर्मसु नियोज्यता न प्रसज्यत इति वाच्यम्; तथापि देवतोद्देशरहितेषु वर्णाश्रमाद्युपाधिना विहितेषु कर्मसु तस्य नियोज्यत्वप्रसक्त्यनिवारणात् । न च तेषामपि कर्मणां शिव एव फलदातेति 'फलमत उपपत्तेः' इत्यधिकरणे निर्णीतत्वात् स्वात्मने स्वयं फलदातृत्वासंभवाच्च न उक्तदोषः प्रसज्यत इति वाच्यम्; स्थिते हि तस्य वर्णाश्रमादिधर्मभूतकर्मनियोज्यत्वाभावे तेषां स फलदाता सिध्येत्, स्वयमपि तत्तत्कर्मनियोज्यश्चेत् कथं तेषां स फलदाता इति न्यायसहस्रेणापि सिध्येत; 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतिबलात्तस्य विहितनिषिद्धकर्मानुष्ठानेष्वपि न तं पुण्यपापे स्पृशतः इति तस्य पुण्यपापाधीनशरीराप्रसक्त्या न तत्प्रयुक्तसुखदुःखभोक्तृत्व-

T

मापद्यत इति वाच्यम्; न हि सा श्रुतिः तात्पर्यवद्विधिनिषेधवाक्यमूलकर्माधीनशरीरवत्त्वेनापतत् तच्छरीरप्रयुक्तसुखदुःखभोक्तृत्वमर्थवादो निरोद्धुमीष्टे। स एव केवलं प्रशंसार्थः स्यात्। तस्मात्तस्य जीवतुल्यतया सांसारिकभोगप्रसक्तिं निवारयितुमिच्छता तस्य विधिनिषेधवाक्यगतब्राह्मणादिशब्दवाच्यत्वापादकतत्प्रवृत्तिनिमित्तब्राह्मणत्वाद्यनाश्रयत्वमभ्युपगन्तव्यम् इत्यनिच्छतापि ब्राह्मणोऽहम् इत्याद्यनुसंधानेषु ब्राह्मणत्वादीनामहंपदप्रवृत्तिनिमित्तपरम्परासंबन्धघटकतया प्रतीयमाने जीव एवान्वयोऽङ्गीकार्यः, तथैव गौरत्वादीनामपि स्यात्। न च सर्वाधारस्य ब्रह्मणो गौरत्वब्राह्मणत्वाद्यनाश्रयत्वं न संघटत इति वाच्यम्; देशकालवत् सर्वाधारताप्रयोजकसंबन्धेन तदाश्रयत्वेऽपि तत्प्रवृत्तिनिमित्तकशब्दवाच्यताप्रयोजकसंबन्धेन तदनाश्रयत्वोपपत्तेः। अतः त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्ध इति ॥

अथ पञ्चमी—

लोकवेदसाधारणप्रसिद्धिबाहुल्यात् विधिनिषेधवाक्यगतैः ब्राह्मणादिशब्दैः प्रथमोपस्थितानां जीवानामेव वाक्यार्थान्वयः स्यात्, न तु वैदिकव्युत्पत्तिग्रहापेक्षया परम्परासंबन्धघटकजीवात्मगतब्राह्मणत्वग्रहणापेक्षया च विलम्बितो-

पस्थितिकस्य शिवस्यापि । अतः तस्य ब्राह्मणत्वाद्याश्रयत्वेऽपि तत्प्रवृत्तिनिमित्तकब्राह्मणादिशब्दवाच्यत्वेऽपि कर्मसु नियोज्यता न प्रसज्यत इति ब्राह्मणत्वादिवत् गौरत्वादीनामपि प्रधानान्वयोपपत्तेः न अप्रधानान्वयोऽभ्युपगन्तव्यः । तस्मान्मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति ॥

अथ षष्ठी—

प्रवृत्तिनिमित्ताश्रयत्वेन शब्दवाच्यत्वाविशेषे कस्यचिद्वाक्यार्थान्वयः कस्यचिन्न इत्यर्धजरतीयाश्रयणेन संकोचो न युक्तः । न च लौकिकवैदिकगवादिशब्दप्रयोगेषु प्रसिद्धिबाहुल्यात् सास्नावत्प्रभृतीनामेव वाक्यार्थान्वयः, नेतरेषामिति दृष्टमिति वाच्यम्; प्रवृत्तिनिमित्तभेदेन शक्तिभेदे हि वृत्तिद्वयविरोधपरिहारार्थं कस्यचिदेव शक्यस्य ग्रहणं कार्यम्, नान्यस्य इति स्थितौ, कस्य ग्रहणं कार्यमित्याकाङ्क्षायां तत्र विनिगमकत्वेन प्रसिद्धिबाहुल्यमादरणीयम् । प्रवृत्तिनिमित्ताभेदेन शक्त्यभेदे तु वृत्तिद्वयविरोधाप्रसक्तेः सर्वस्यापि शक्यस्य ग्रहणं युक्तम् । कस्यचिद्वैदिकव्युत्पत्तिविधुरस्य तदपेक्षार्थानुपस्थितौ तद्व्युत्पत्त्यनुसारात् तत्प्रसिद्धिमात्रान्वयेन वाक्यार्थप्रत्ययस्तस्य जायते चेदपि, स पुरुषापराधप्रयुक्तो भ्रमरूप इत्येव

T

कल्पयितुमुचितम् । अन्यथा स्वीयायामेव गवि गोशब्दप्रसिद्धिबाहुल्यवतः 'गामालभेत' इति वाक्ये गोशब्दात्तन्मात्रविषय इव भवन्ती प्रतीतिरपि भ्रमो न स्यात् । तथा अन्तर्यामिगतब्राह्मणत्वग्रहणस्य जीवगततद्ग्रहणापेक्षत्वेऽपि अन्तर्यामिणोऽपि विधिनिषेधवाक्यगतैः ब्राह्मणशब्दैर्ग्रहणं निवारयितुं न शक्यम्; अन्यथा पुत्रगतब्राह्मण्यग्रहणस्य पितृगतब्राह्मण्यग्रहणापेक्षत्वापत्तेः पितुरेव ग्रहणं स्यात् न पुत्रस्य । तस्मादन्तर्यामिणः शिवस्य ब्राह्मणत्वाद्याश्रयत्वे पूर्वोक्तदोषो न निवारयितुं शक्यते इति तदनाश्रयत्वम्, तत्तुल्यन्यायतया गौरत्वाद्यनाश्रयत्वमपि स्वीकर्तव्यम् । अतः त्वद्धेतुरसिद्धः, मद्धेतुर्नासिद्ध इति ॥

अथ सप्तमी—

सर्वपुरुषसाधारण्येन नियतं यस्य यच्छब्दार्थतया प्रसिद्धिबाहुल्यादिना झटिति प्रतीतिः, तस्यैव वैदिकवाक्यगतेन शब्देन ग्रहणमिति नियमोऽस्त्येव । अत एव 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्यगतेन पूर्णमासशब्देन 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' इति प्रत्यक्षश्रुतपौर्णमासीकालसंबन्धतया

शीघ्रप्रतीतिकयोराग्नेयाग्नीषोमीययागयोरेव ग्रहणेन तयोरे फलसंबन्धात् प्राधान्यं स्यात्, न तु 'उपांशुयाजमन्तरा य- जति' इति तदुभयान्तरालकालविधिसामर्थ्यलभ्यपौर्णमासी- संबन्धस्य उपांशुयाजस्यापि । अतः तस्यापि तत्सिद्ध्ये श्रुत- पौर्णमासीकालत्वेन तदुभयाविशेषसिद्ध्यर्थम् 'तावब्रूताम- ग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्' इति प्रत्यक्षः तस्य पौर्णमासीकालविधिरिति मीमांसकैरङ्गीकृतम् । गोशब्दे- न तत्तद्गोविशेषप्रतीतिस्तु न सर्वसाधारणी । तथा नियमेन यद्गतयच्छब्दप्रवृत्तिनिमित्तावगतिसापेक्षा अन्यत्र तदवगतिः, तत्र वैदिकेन तेन शब्देन तस्यैव ग्रहणमित्यपि नियतमेव। अत एव 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति वाक्यगतेन प्रथ- मशब्देन साक्षात्प्राथम्याश्रयतया प्रथमं प्रमितस्य प्रयोगस्यैव ग्रहणम्; न तु तद्गतप्राथम्यानुसंधानसापेक्षावगतिकपरम्प- रासंबन्धिप्राथम्याश्रयस्य ज्योतिष्टोमस्येति प्रथमप्रयोगाङ्ग- मयं प्रवर्ग्यनिषेधः; न तु प्रथमप्रयोगविषयज्योतिष्टोमक्र- त्वङ्गम् इति 'संख्यायुक्तं क्रतोः प्रकरणात्स्यात्' इति तृती- याध्यायाधिकरणे निर्णीतम् । पुत्रगतब्राह्मण्यग्रहणं तु न नियमेन पितृब्राह्मण्यग्रहणसापेक्षम्, प्रत्यक्षेण तद्ग्रहणे तद- पेक्षासत्त्वेऽपि आप्तवाक्येन तद्ग्रहणे तदपेक्षाभावात् । इह तु

T

जीवगतं ब्राह्मण्यं लौकिकवैदिकप्रसिद्धिबाहुल्येन अन्तर्यामिगतब्राह्मण्यावगत्यपेक्षितानुसंधानत्वेन च झटिति प्रथमं प्रतीयत इति तद्ग्रहणेन चरितार्थैः विधिनिषेधवाक्यगतब्राह्मणादिशब्दैः जीवानामेव ग्रहणं भवति; न तु अन्तर्यामिणोऽपि; विलम्बितप्रतीतिकत्वात् । शब्दानां विरम्यव्यापाराभावेन पश्चात् तद्ग्रहणासंभवात् । तस्मात् प्रवृत्तिनिमित्ताश्रयत्वेऽपि विधिनिषेधवाक्यगतैर्ब्राह्मणशब्दैरन्तर्यामिणो न ग्रहणं प्रसज्यत इति मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति ॥

अथाष्टमी—

प्रसिद्धिबाहुल्येन अपेक्षितत्वेन वा नियतशीघ्रप्रतीतिरपि अनियतशीघ्रप्रतीतिवदेव न वैदिकशब्दार्थग्रहणे प्रयोजिका, उभयत्रापि वृत्त्यभेदस्य अर्थद्वयग्रहणप्रयोजकस्य अविशिष्टत्वेन नियमतः प्रथमप्रतीतार्थमात्रग्रहणे प्रयोजकत्वकल्पनाभावात् । न चैवं सति उदाहृतपौर्णमासीविधिवैयर्थ्यम्; तस्य अमावास्याव्यावर्तनेन चरितार्थत्वात् । तदभावे हि उत्पत्तिवाक्यमात्रपर्यालोचनायाम् अमावास्यायामपि उपांशुयाजः प्राप्नोति । न च तत्र पुरोडाशद्वयाभावात् तदन्तरालकालो नास्तीति शङ्कनीयम्, असोमयाजिनामैन्द्राग्नपुरोडाशसत्त्वात् पुरोडाशद्वयनियमस्तु पौर्णमास्यामपि नास्ति; अमा-

T

वाख्यायां सोमयाजिनामैन्द्राग्नस्येव पौर्णमास्यामसोमयाजिना-म् अग्नीषोमीयाभावात् 'अनपायो हि कालस्य लक्षणं हि पुरोडाशौ' इति दशमाध्यायाधिकरणसूत्रोक्तन्यायेन पुरोडाशद्वयाभावेऽपि तदुपलक्षितान्तरालकालोऽस्तीति एकपुरोडाशपौर्णमास्याम् उपांशुयाजसमर्थनप्रकारस्य एकपुरोडाशामावास्यायामपि तुल्यत्वात्। अवश्यं च अमावास्यावर्जनरूपपरिसंख्यानस्य जघन्यत्वेऽपि अस्य पौर्णमासीविधेः तथात्वमेव वाच्यम्, शीघ्रप्रतीतेर्वैदिकार्थग्रहणाप्रयोजकत्वस्य वर्णितत्वात्। अन्यथा उत्पत्तिवाक्यप्रवृत्तिसापेक्षवाक्यान्तरावगम्यपौर्णमासीसंबन्धात् उपांशुयाजादुत्पत्तिवाक्यावगतपौर्णमासीसंबन्धयोः आग्नेयाग्नीषोमीययोः शीघ्रप्रतीत्या तयोरेवाधिकारानुप्रवेशः स्यादिति दोषतादवस्थ्यस्य तवाप्यप्रतीकारात्। न च शीघ्रप्रतीतिमात्रस्य वैदिकार्थग्रहणनियामकत्वाभावेऽपि अपेक्षितत्वेन शीघ्रप्रतीतिः तन्नियामिका स्यादेव; अन्यथा 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यत्र प्रथमशब्दस्य साक्षात्प्राथम्याश्रयत्वेन शीघ्रप्रतीतिमात्रविषये प्रयोगे तद्द्वारा परम्परासंबन्धिप्राथम्याश्रयत्वेन विलम्बितप्रतीतिविषये ज्योतिष्टोमक्रतौ च तुल्यपक्षपातित्वे कांस्यभोजिन्यायेन प्रकरणानुग्रहाय ज्योति-

ष्टोमक्रतुविषयत्वं स्यादिति वाच्यम्; तस्य प्रथमप्रयोगावस्थ-ज्योतिष्टोमविषयत्वे द्वितीयादिप्रयोगावस्थतदङ्गत्वालाभेन प्रकरणानुग्रहालाभात् फलतः सैद्धान्तिकप्रयोगाङ्गत्वपक्षप-र्यवसायित्वाच्च । प्रथमप्रयोगमुपलक्षणीकृत्य केवलज्योति-ष्टोमक्रतुपरत्वकल्पने ज्योतिष्टोमत्वाकारेण तत्र तस्य श-क्यभावेन लाक्षणिकत्वस्य अभ्युपगन्तव्यतया प्रकरणा-नुग्रहाय श्रुतेर्बाधनीयत्वापत्तेः । एवम् 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यत्र 'प्रथमाम्' इत्यनेन प्राथम्योपलक्षितप्र-वोवाजीयाख्यर्ग्विशेषग्रहणे लक्षणा स्यादिति तत्परिहारार्थ-मेव तद्ग्रहणम्; न तु प्रतीतिशैघ्र्यस्य वैदिकार्थग्रहणनिया-मकत्वानुरोधेन; तत्रैव साक्षात् प्राथम्याश्रयत्वेन शीघ्रप्रती-तिकमनुवचनं परित्यज्य तद्द्वारा परम्परया प्राथम्याश्रयत्वेन पश्चात् प्रत्येतव्याया ऋचः 'प्रथमाम्' इत्यनेन प्राथम्यसंयु-क्तत्वाकारेण ग्रहणस्याप्यभ्युपगतत्वात् । तस्मात् प्रतीतिशै-घ्र्यस्य वैदिकार्थग्रहणनियामकत्वानभ्युपगमे न्यायविरोधाभा-वात् अन्तर्यामिणोऽपि ब्राह्मणत्वाद्याश्रयत्वाभ्युपगमे जीव-वत् कर्मवश्यता स्यादिति दूषणस्य वज्रलेपायमानत्वात् त्वद्धे-तुरसिद्धः, मद्धेतुश्च नासिद्ध इति ॥

अथ नवमी—

'तावद्ब्रूताम्' इत्यादिवाक्यम् उपांशुयाजस्य शीघ्रप्रतीत्यविशेषोपादानेन आग्नेयाग्नीषोमीयवत् तस्यापि अधिकारवाक्यगतपूर्णमासपदेन ग्रहणं भवतु इत्येतदर्थं भवत्येव। न च तथापि उत्पत्तिवाक्यश्रुतपौर्णमासीकालसंबन्धयोः आग्नेयाग्नीषोमीययोरेव तेन ग्रहणं स्यादिति शङ्कनीयम्; 'तावद्ब्रूताम्' इत्यादिवाक्याम्नानानन्तरम् 'उपांशुयाजमन्तरा यजति' इति वाक्याम्नानेन तस्मिन्नुत्पत्तिवाक्ये श्रुतस्य अन्तराशब्दस्य पौर्णमास्यामेव पर्यवसानेन 'तावद्ब्रूताम्' इत्यादिवाक्यस्य उत्पत्तिवाक्यश्रुतपौर्णमासीकालत्वेन उपांशुयाजस्य आग्नेयाग्नीषोमीयाविशेषोपादानार्थत्वात्। एवं च उत्पत्तिवाक्यश्रुतपौर्णमास्यविरोधादेव उपांशुयाजस्य अमावास्यायां न प्रसक्तिरिति न तद्व्यावृत्तिफलकपरिसंख्यारूपत्वं जघन्यम् 'तावद्ब्रूताम्' इत्यादिवाक्यस्य कल्पनीयम्; उक्तरीत्या उपांशुयाजस्य फलसंबन्धापादनार्थत्वेन अपूर्वविधित्वोपपत्तेः। एवं च 'तावद्ब्रूताम्' इत्यादिवाक्यप्रवृत्त्या शीघ्रप्रतीतेः वैदिकार्थग्रहणनियामकत्वमवसीयत इति युक्तमेव। एवं प्रथमप्रतीतिमात्रस्य वैदिकार्थग्रहणनियामकत्वसिद्धौ अपेक्षितत्वेन प्रथमप्रतीतेस्तन्नियामकत्वं कैमुतिकन्यायसिद्धम्; प्रवर्ग्याधिकरणन्यायसिद्धं च; अन्यथा हि प्रवर्ग्यनिषेधः

T

प्राथम्यसंयुक्तस्य ज्योतिष्टोमस्य क्रतोरेवाङ्गं भवेत्; प्रकरणानुग्रहलाभात् । न च प्राथम्यसंयुक्तावस्थापन्नस्यैव ग्रहणं स्यादिति प्रकरणानुग्रहलाभः; प्रयोगविशेषे यः प्राथम्यसंयुक्तः क्रतुः तस्य तदवस्थानापन्नस्यापि ग्रहणसंभवात् प्राथम्यविशेषणस्य तदवस्थापन्नग्रहणार्थत्वं परित्यज्य इतरव्यावर्तकत्वमात्रेण उपयोगकल्पनोपपत्तेः । 'प्रदोषे पुरहन्तारं पश्येत्पातकशान्तये' 'श्रोत्रियान्भोजयेत्पित्र्ये' 'संदेहे साक्षिणः पृच्छेत्' इत्यादिप्रयोगेषु हि पुरहन्तृत्वच्छन्दोध्येतृत्वसाक्षाद्द्रष्टृत्वादिविशेषणानां तदवस्थापन्नग्रहणार्थत्वं विना इतरव्यावर्तकत्वमात्रेण उपयोगो दृश्यते । न चैवं सति 'त्रिः प्रथमामन्वाह' इत्यत्रापि प्राथम्यसंयुक्तमात्रस्य अभ्यासविधौ प्रयोगविशेषे प्राथम्यसंयुक्ता प्रवोवाजीया यत्रतत्रस्थापि अभ्यसनीया स्यादिति वाच्यम्; प्रवोवाजीया यदि कस्यांचिदिष्टौ मध्ये अन्त्ये वा स्यात्, तदानीम् अन्या काचित् प्रथममनुवर्तनीया भवेत्; तथा च सापि प्राथम्यसंयुक्तत्वाविशेषात् त्रिरभ्यसनीया स्यादिति पञ्चदशतासंपत्तिरूपदृष्टार्थता त्रिरभ्यासस्य न स्यात् । 'पञ्चदश सामिधेनीरनुब्रूयात्' इति विधाय एकादश ऋचः पठित्वा 'त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश संपद्यन्ते' इति त्रिरनुवचनाभ्यासं वि-

T

धाय तस्य विहितसंख्यासंपत्तिरूपदृष्टार्थत्वं श्रूयते। यत् तत्र साक्षात्प्राथम्याश्रयमनुवचनमतिलङ्घ्य तद्द्वारकप्राथम्याश्रयग्रहणम्, तत् अनुवचनाभ्यासविधौ अनुवचनस्यैवोद्देश्यत्वासंभवात् प्राथम्यस्य क्रियाविशेषणत्वे स्त्रीलिङ्गायोगाच्च तदुभयानुरोधेनाभ्युपगतम्। एवम् 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः' इत्यादिष्वपि निर्धारणषष्ठ्यन्तसमानाधिकरणयज्ञशब्दद्वयेन साक्षाज्ज्योतिष्टोमनाम्ना च समभिव्याहारः साक्षात्प्राथम्याश्रयप्रयोगाद्यतिलङ्घने कारणमस्ति; न चेह तथा साक्षात् ब्राह्मणत्वाद्याश्रयजीवातिलङ्घने किंचित्कारणमस्ति। तस्माद्वृत्त्यभेदेऽपि प्रथमप्रतीतेर्वैदिकार्थग्रहणनियामकत्वस्य अनेकन्यायसिद्धत्वात् अन्तर्यामिणः शिवस्य ब्राह्मणत्वाद्याश्रयत्वेऽपि कर्मवश्यत्वं न प्रसज्यत इति तस्य तदाश्रयत्वम्, तद्वत् गौरत्वाद्याश्रयत्वं च ब्रह्मविदनुसंधानसिद्धं न प्रत्याख्यातुं शक्यम्। अतो मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति सिद्धमन्तर्यामिणो गौरादिशब्दवाच्यत्वम्॥

गुणवचनशक्तिविषये वादद्वादशकमित्थमारचितम्।
धीराणां परितुष्ट्यै चक्रव्यूहमिव गाहमानानाम्॥

इति ब्राह्मणादिशब्ददृष्टान्तप्रसक्तगौरादिशब्दवाच्यत्वशङ्कानिरासार्थान्तर्यामिशक्तिवादः॥ १४॥

# अन्तर्यामिविषयपृथिव्यादिशब्दवाच्यत्वसमर्थनवादः ॥

---

अथ शरीरवाचिनां गुणवचनब्राह्मणादिशब्दानामन्तर्यामिपर्यन्तत्वसिद्धावपि पृथिव्युदकादितटस्थद्रव्यवाचिनां तत्पर्यन्तत्वं तावता न सिध्यतीति शङ्कानिरासाय तेषामपि शरीरत्वप्रसाधनार्थं कथान्तरं प्रस्तूयते—

भूगोलसरित्समुद्रमहीधरादिकं शरीरं भवितुमर्हति, शरीरलक्षणयोगित्वात्, यत् शरीरलक्षणयोगि तत् शरीरम्—यथा अस्मदादिशरीरम्— इति प्रथमा कक्ष्या ॥

असिद्धोऽयं हेतुः, शरीरलक्षणस्य करचरणादेः भूगोलकादिष्वभावात्। अतो भूगोलकादिकं शरीरं न भवति, तल्लक्षणरहितत्वात्, यत् शरीरलक्षणरहितं न तत् शरीरम्—यथा परं ब्रह्म— इति द्वितीया ॥

करचरणादिकं न शरीरलक्षणम्, मनुष्यपशुपक्षिसरीसृपतरुगुल्मलतादिशरीरेषु तस्य तथाभूतस्य वा कस्य

T

चिदवयवसंस्थानस्यानुगतस्य अभावात् । किंतु यस्य यद्द्रव्यं सर्वात्मना नियम्यं तत् तस्य शरीरम् इति शरीरलक्षणम् । तथा च पृथिव्युदकादिकं तत्तदभिमानिनां देवानां सर्वात्मना न नियम्यमिति न मद्धेतुरसिद्धः, त्वद्धेतुरेवासिद्धः— इति तृतीया ॥

त्वदुक्तमपि शरीरलक्षणमयुक्तम्, तत्र सर्वात्मना इत्यनेन यस्यैव नियम्यं नान्यस्य इत्यन्ययोगव्यवच्छेदविवक्षायाम् असंभवापत्तेः; सर्वेषां शरीराणां तत्तदभिमानिनं देवमनुष्यादिकं प्रतीव सर्वनियन्तारं परमेश्वरं प्रत्यपि नियम्यत्वात् । यस्य नियम्यमेव न कदाचिदनियम्यम् इत्ययोगव्यवच्छेदविवक्षायां सुषुप्तिमूर्छादिशरीराणां तत्तदभिमानिनं प्रत्यनियम्यत्वेन कल्पादौ परमेश्वरेण सृष्टानां कल्पान्तपर्यन्तस्थायिनां प्राणेन्द्रियादीनां प्रतिमन्वन्तरभिन्नान् तत्तदभिमानिदेवान् प्रति कालान्तरेषु अनियम्यत्वेन च तेष्वव्याप्त्यापत्तेः। न च वाच्यम्— नियम्यत्वं योग्यतामात्रेण विवक्षितम्, सुषुप्तमूर्छितादिशरीरेषु योग्यता स्पष्टैव, प्राणेन्द्रियादिष्वपि सा अस्ति, निवृत्ताधिकाराणामभिमानिदेवानां तदनुप्रवेशादिनियमनसहकारिसमवधानाभावात् नियम्यत्वाभाव इति; तथा सति चैत्रमैत्रादिशरीराणां परस्परनियमनयोग्यताक्षि,

त्वदुक्तसहकारिसमवधानाभावादेव नियमनाभावः— इति चैत्रशरीरस्यापि मैत्रं प्रति शरीरत्वप्रसङ्गेन अतिव्याप्त्यापत्तेः। तस्मात्करचरणाद्याश्रयत्वमेव शरीरलक्षणमास्थेयम् । करचरणादिकं च अवयवसंस्थानरूपं न विवक्षितम् । किंतु इन्द्रियरूपम् । इन्द्रियाणां च एकादशानामपि आमोक्षम् अनुवृत्तिमत्त्वेन पशुवृक्षसरीसृपादिरूपेषु जङ्गमस्थावरात्मकेषु सर्वेष्वपि शरीरत्वेन संप्रतिपन्नेषु सद्भावोऽस्त्येव । अतः पृथिव्युदकादिषु तत्तदभिमानिदेवताधिष्ठितसंचारिशरीरेष्विव तस्याभावात् त्वद्धेतुरसिद्धः, मद्धेतुश्च नासिद्ध इति चतुर्थी ॥

अथ पञ्चमी—

करचरणादीन्द्रियाश्रयत्वं न शरीरलक्षणम्, अन्तर्यामिब्राह्मणे 'यस्य पृथिवी शरीरम्...यस्यापः शरीरम्.... यस्य तेजः शरीरम्' इत्यादिवाक्यैः परमेश्वरशरीरत्वेन प्रतिपादितेषु पृथिव्यादिष्वभावात् । तस्मात् मदुक्तमेव लक्षणं ग्राह्यम् । न च उक्तदोषप्रसङ्गः, सर्वात्मशब्देन मध्यमपदलोपिसमासवता सर्वानुप्रविष्टस्य आत्मनो विवक्षितत्वात् । सर्वशब्दश्चात्र सर्वः पटो रक्तः इत्यत्रेव एकैकस्य द्रव्यस्य अवयवकार्त्स्न्यपरः । तथा च यद्द्रव्यं स्वकीयसर्वावयवावच्छे-

देन व्याप्य अधितिष्ठता यस्यात्मना नियम्यं तत्तस्य शरीरम् इति लक्षणं पर्यवस्यति। इदं च लक्षणं गुणाश्रयत्वादिवत् यावद्द्रव्यभाव्ययावद्द्रव्यभाविनियमनसाधारण्येन योग्यतामात्ररूपं विवक्षितम्। अतः सुषुप्तमूर्छितादिशरीरेषु प्राणेन्द्रियादिषु तत्तदभिमानिदेवताशरीरेषु च नाव्याप्तिः। नापि भृत्यादिशरीरेषु स्वाम्यादिशरीरत्वापत्तिरूपातिव्याप्तिः, यतः स्वामी भृत्यमननुप्रविष्ट एव आज्ञामात्रेण नियच्छति नाविको नावमनुप्रविष्टोऽपि न तां सर्वावयवावच्छेदेन व्याप्य अधितिष्ठति। दारुचर्मादिव्याघ्राकारयन्त्रानुप्रविष्टकृत्रिमव्याघ्रादिभिरपि तथा। तस्मात् पृथिव्युदकादीनां शरीरलक्षणयोगित्वम्। अतो मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति॥

अथ षष्ठी—

त्वदुक्तलक्षणं तावत् न युज्यते, कायव्यूहपरिग्रहवतां भृत्यशरीरनौदारुयन्त्रादिषु सर्वावयवव्याप्त्या नियामकत्वमस्तीति तेषां तत्तच्छरीरत्वप्रसङ्गेन रक्षःपिशाचगन्धर्वाद्याविष्टशरीराणां रक्षःपिशाचादिभोगोपयुक्तानां रक्षःपिशाचादिशरीरत्वप्रसङ्गेनातिव्याप्तेः अनिवार्यत्वात्। तस्मादगत्या मदुक्तमेव शरीरलक्षणमास्थेयम्। तन्निर्वाहाय च श्रुतिषु पृथिव्यादीनां परमेश्वरशरीरत्वप्रतिपादनं शरीरत्व-

न्नियम्यत्वसद्भावेन गौणमुपपादनीयम् । अतः पृथिव्यादिषु शरीरलक्षणाभावात् त्वद्धेतुरसिद्धो मद्धेतुर्नासिद्ध इति ॥

अथ सप्तमी—

मदुक्तलक्षणस्य तावत् नातिव्याप्तिः, कायव्यूहपरिग्रहवतः शिवयोगिनोऽपि राजवदाज्ञावचनेन भृत्यं प्रेरयतो लीलया नाविकवत् नावमधिरुह्य क्षेपण्या तां क्षिपतो दारुचर्मादियन्त्राच्छादनेन व्याघ्रादिवत्संचरतश्च भृत्यशरीरादिव्याप्तिसत्त्वेऽपि तद्व्याप्तेः भृत्यादिनियमनाप्रयोजकत्वात्; तस्या एव तत्प्रयोजकतायामाज्ञावचनादिवैयर्थ्यात् । अवश्यं च लक्षणे नियम्यव्याप्तेः नियमनप्रयोजकत्वं विवक्षणीयम्, अन्यथा सर्वाङ्गीणसुखदुःखानुभवानुरोधात् चिच्छक्तिविकासेन स्वशरीरमन्तर्बहिश्च व्याप्य स्थितस्य स्वकुक्षिस्थकृम्यादिकमौषधसेवादिना यमयतश्च पुरुषस्य कुक्षिस्थकृम्यादिशरीरमपि शरीरं भवेत् । यदि तु शिवयोगी मन्त्रमहिम्ना योषिदाद्याकर्षणामिव चिच्छक्तिव्याप्तिमहिम्ना विनैवाज्ञावचनम् अन्तर्यामिवत् भृत्यादीन् प्रेरयेत्, नावमनधिरुह्यैव जले तां संचारयेत्, व्याघ्राकृतिदारुयन्त्रादिकमननुप्रविष्ट एव संचारयेत्, तदा किमतिव्याप्तिर्न भवति— इत्येतावच्छङ्कनीयम्; तत्रेदमुत्तरम्— शिवयोगिनः तथा तथा

कर्तुं प्रभवन्त्येव । अत एव विरूपाक्षयोगिना गगनमा
दिग्गजानानीय द्वौ द्वौ दिग्गजौ परस्परं योधयन्तं ते
स्वीयमैश्वर्यं लोकातिशायीति दर्पभरोष्मलं सहस्राक्षं दृ
तद्दर्पमपनीय शिवयोगे रुच्युत्पादनेन तमनुग्रहीतुं द्वौ शै
गजवत् परस्परोपसर्पणेन योधितौ; तदत्यन्तमाश्चर्यं दृ
गगनतलादवरुह्य प्रणिपत्य कथमिदमाश्चर्यं भवता कारि
तम्? इति पृष्टवन्तं सहस्राक्षं प्रति तव हस्तौ त्वदिच्छ
परस्परास्फालन इव मदिच्छया इमौ पर्वतौ परस्परयु
प्रवर्तेते; शिवयोगप्रभावः तादृशः इति विरूपाक्षयोगि
प्रतिबोधितम्; ततो विलक्षः सहस्राक्षः तुच्छमिदमैश्वर्य
इति ततो विरज्य ततः प्रभृति निरन्तरशिवयोगाभ्यासे ए
निरतोऽभूत्—इति कथामभियुक्ता वर्णयन्ति । एवमपि ना-
तिव्याप्तिः, शिवयोगिनां चिच्छक्तिविकासेन प्रपञ्चं व्याप्
शिवयोगप्रभावेन स्वेच्छया तत्तन्नियच्छतां शिववदेव प्रप-
ञ्चशरीरकत्वाङ्गीकारात् । अत एव 'सर्वं खल्विदं ब्रह्म'
'सर्वो वै रुद्रः' इत्यादिषु स्वतःसिद्धतया शिवस्यैव 'यद्ब्र-
ह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते' इति ब्रह्मवि-
द्याफलत्वेन 'सर्वमेधेन दशरात्रेण यजेत यः कामयेत सर्व-
मिदं भवेयमिति' इत्यादिश्रुतिषु विद्यासाधनसहकारिकर्म-

फलत्वेन च जीवानामपि सर्वशरीरकत्वरूपं सार्वात्म्यं श्रूयते। एवं तर्हि जीवानामपि सर्वशरीरकत्वेन सर्वशब्दवाच्यतया शिवसाम्यं स्यात्; न च वाच्यम्—शिवयोगे सिद्धे चिच्छक्तौ च विकासितायां तत्कालवर्तिप्रपञ्चमात्रं जीवानां नियम्यम्, न त्वतीतप्रपञ्चोऽपि, अतः सर्वप्रपञ्चशरीरकत्वं शिवस्यैव न कस्यापि जीवस्येति, नियमनं हि योग्यतया लक्षणेऽनुप्रविष्टम्; तत् अतीतप्रपञ्चे शिवयोगासिद्धचिच्छक्तिविकासरूपसहकारिविरहात् नियमनफलानुदयेऽपि अक्षतमिति चेत्, सत्यम्; जीवानामतीतप्रपञ्चशरीरकत्वमपि अस्त्येव; अत एव संसारदशायामपि विश्वाकारपराहंभावयोग्यतामङ्गीकृत्य देवमनुष्यादिना अहंभावस्य भ्रान्तिरूपत्वं भाष्ये तत्र तत्र वर्णितम्; एवमपि शिवस्येव न कस्यापि जीवस्य स्वव्यतिरिक्तसर्वप्रपञ्चशरीरकत्वं प्रसज्यते; शिवयोगिस्कन्दनन्दिकेश्वरादिनित्यसिद्धदिव्यगणानां च केनापि जीवेन नियम्यताभावात्। तदभावश्च 'वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि उषः प्रारन्नृतूꣳरनु दिवो अन्तेभ्यस्परि' इति मन्त्रेण दर्शितः। अस्य च अयमर्थः—पतत्रिणः शोभनपत्राः वयः पतत्रिणः, चित् इत्युपमार्थे, पक्षबलयुक्ताः पक्षिण इव ऊर्ध्वगमनोत्साहयुक्ताः ते ऋषयः, ये 'वयः सुपर्णा उपसे-

T

दुरिन्द्रं प्रियमेधा ऋषयो नाथमानाः' इति मन्त्रे मुमुक्षव इन्द्रमुपसन्नाः प्रतिपादिताः, ते ऋषयः, द्विपाच्चतुष्पात् द्विपाच्चतुष्पादात्मकम्, सर्वं प्रपञ्चम्, प्रारन् प्रकर्षेण प्राविशन्; नियन्तृत्वरूपोऽत्र प्रकर्षो विवक्षितः; कदा, ऋतून् ऋतुशब्देन संसारदशायां वृत्ताः मासर्तुसंवत्सरादयः सर्वे ऽप्यवच्छिन्नकाला विवक्षिताः; 'मधुश्च माधवश्च वासन्तिकावृतू' इत्यादिश्रुतिषु मासविषयोऽपि हि ऋतुशब्दप्रयोगो दृष्टः; तथा च सांसारिकजरापरिणत्यादिहेत्ववच्छिन्नकालभोगानन्तरं प्राविशन्नित्यर्थः; किम् अविशेषेण सर्वं द्विपाच्चतुष्पादात्मकं प्रपञ्चं नियन्तृत्वेन प्राविशन्? नेत्युच्यते— दिवो अन्तेभ्यस्परीति, दिवः परमशिवस्थानस्य महाकैलासाख्यस्वर्गस्य, अन्तेभ्यः पर्यन्तदेशेभ्यः मध्ये विलसन्तीं शिवराजधानीं परितः स्थितेभ्यः दिव्यगणानां मुक्तानां च धामभ्यः, परि तानि वर्जयित्वा, दिव्यगणमुक्ताः शिवैकनियम्या इति तद्वर्जनमात्रं विवक्षितम्; 'परि त्रिगर्तेभ्यो वृष्टो देवः'—इत्यादिष्विव परि-शब्दो वर्जनार्थः; शिवराजधानीं परितः स्थितेषु तद्भृत्यगृहेष्वपि नियन्तृत्वेन प्रवेशाभावे शिवराजधान्यां तदभावः कैमुतिकन्यायसिद्धः; मुक्तानां यद्यपि परस्परनियम्यत्वयोग्यता अस्ति; तथापि

T

न मुक्त्यनन्तरम्; 'अत एव चानन्याधिपतिः' इति सूत्रोक्तन्यायेन शिवैकनियम्यानां तेषां तदा परस्परनियम्यत्वं नास्तीत्येतावता तेषु तद्वर्जनमुक्तम्; अर्जुनि धवलवर्णे तमोविवासनसमर्थस्वच्छतायुक्ते, उषः महाप्रलयरूपशर्वर्यपगमकालरूपे— इति इदं द्वयं शैवचिच्छक्तेः संबोधनम्; इन्द्रं गुरुषूपसन्नानामृषीणामेवंभूतं सकलपशुपाशनियन्तृत्वं तत्प्रसादादासीदिति भावः। एवं च अनया प्रक्रियया यद्यपि सर्वमुक्तिपक्षे स्वामिभृत्यादिशरीराणां परस्परनियम्यत्वयोग्यतारूपं परस्परशरीरत्वमुपपद्यते, अथापि 'अत एव हि विद्वत्सु मुच्यमानेषु सर्वदा। ब्रह्माण्डलोके जीवानामनन्तत्वादशून्यता' इति वार्तिकोक्ते सर्वमुक्त्यभावपक्षे तत् क्वचित् क्वचित् नास्ति। भृत्यादीनामाज्ञादिना नियमनमात्रं च न शरीरत्वप्रयोजकम्; किं तु व्याप्त्या नियमनमेवेति व्यञ्जयितुं तावद्दूरं लक्षणमुक्तम्। न चैवमपि पिशाचाद्याविष्टशरीराणामपि पिशाचादिशरीरत्वप्रसङ्गो दोषः; पिशाचादीनामतीन्द्रियेण स्वशरीरेण मनुष्यादीनाविश्य भोक्तृत्वात् मनुष्यादिशरीरताडने तदन्तर्गतपिशाचादिशरीरस्य— कञ्चुकताडने कञ्चुकान्तर्गतशरीरस्येव ताडनाभिघातेन दुःखोपपत्तेः। यदि तु आविष्टशरीरेणैव पिशाचादीनां भो-

T

क्तृत्वमिष्यते, तदा तस्य पिशाचादिशरीरत्वमपि इष्ट एव, तदा तद्भोगायतनत्वसत्त्वात् । तस्मान्मदुक्तशरीरलक्षणे न कश्चिद्दोषः । त्वदुक्तं तु लक्षणमयुक्तम्, पृथिव्यादीनां परब्रह्मशरीरत्वाभावप्रसङ्गात् । पृथिव्यादिपर्यायेषु सर्वेषां प्रतिपर्यायम् आदरेण शरीरत्वप्रतिपादनस्य गौणत्वोक्त्ययोगाच्च । 'विग्रहं देवदेवस्य जगदेतच्चराचरम् । एतमर्थं न जानन्ति पशवः पाशगौरवात् । विद्येति चेतनं प्राहुस्तथा विद्यामचेतनम् । विद्याविद्यात्मकं सर्वं विश्वं विश्वगुरोर्विभोः रूपमेव न संदेहो विश्वं तस्य वशे यतः' इति प्रपञ्चस्य परब्रह्मशरीरत्वासंदेहोक्त्या 'विश्वं तस्य वशे यतः' इति तस्य तच्छरीरत्वव्यवस्थापकलक्षणानुगतिप्रदर्शनेन च तद्गौणत्वाशङ्कायाः सुदूरनिरस्तत्वाच्च । 'विश्वं तस्य वशे यतः' इत्यनेन नियम्यत्वमात्रं लक्षणतया न विवक्षितम्, यतः तावन्मात्रेण भृत्यादिशरीरमपि स्वाम्यादीनां शरीरं भवेदिति दोषः स्यात् । किं तु व्यापकेन नियमनं लक्षणतया विवक्षितम् । तच्च 'विभोः' इति विशेषणेनाविष्कृतम् । न च तद्विशेषणं नियमनसामर्थ्यपरम्, तस्य 'विश्वगुरोः' इत्यनेन लाभात् । तस्मात् मदुक्तमेव लक्षणं युक्तमिति पृथिव्यादीनां तद्योगात् ब्रह्मतनु-

T

सिद्धः, त्वद्धेतुरेवासिद्ध इति । अतः मदनुमाने पृथिव्यादीनां शरीरत्वसिद्धौ तदभिमानिदेवानां पृथिव्यहम् उदकमहम् तेजोऽहम् इत्याद्यनुसंधानैः तेषां पृथिवीत्वाद्याश्रयत्वसिद्धौ तेषामपि अन्तर्यामिब्राह्मणोक्तरीत्या अन्तर्यामिशरीरत्वात् ब्रह्मविदां तेषां पृथिव्यहम् इत्याद्यनुसंधानम् अन्तर्यामिपर्यन्तं भवेदिति ततोऽन्तर्यामिणः परमेश्वरस्य पृथिवीत्वाद्याश्रयत्वलाभे सति तस्य तत्प्रवृत्तिनिमित्तकपृथिव्यादिशब्दवाच्यत्वमपि सिध्यतीति सर्वं समञ्जसम् ॥

इत्यन्तर्यामिविषयपृथिव्यादिशब्दवाच्यत्वसमर्थनवादः ॥ १८ ॥



T

# अन्तर्यामिविषयसकलशब्दवाच्यत्व-समर्थनवादः ॥

नन्वेवमपि परमेश्वरस्य शरीरादिशब्दवाच्यत्वासिद्धे सर्वशब्दवाच्यत्वं तस्य न सिध्यतीति शङ्कानिरासाय कथा-न्तरं प्रस्तूयते—

तत्र परमेश्वरः शरीरादिशब्दवाच्यः, शरीरशब्दप्रवृत्ति-निमित्ताधिकरणत्वात्, यत् शरीरशब्दप्रवृत्तिनिमित्ताधिक-रणम्, तत् शरीरशब्दवाच्यम्— यथा शरीरम्— इति प्रथमा कक्ष्या ॥

अथ द्वितीया—

असिद्धोऽयं हेतुः, शरीरशब्दप्रवृत्तिनिमित्तं हि शरीर-त्वम्; तदधिकरणत्वं जीवस्यैव तावत् नास्ति, गौरोऽहम्, ब्राह्मणोऽहम्—इत्याद्यनुभववत् शरीरमहम्, कलेवरमहम्, हस्तोऽहम्, पादोऽहम्— इत्याद्यनुभवस्य कदाप्यदर्शनात्; कुतः तद्द्वारा अन्तर्यामिपर्यन्तेन अहमनुभवेन प्रापणीयम् अन्तर्यामिणः शरीरत्वाधिकरणत्वं सिध्येत् । न च अहमनु-

T

भवमनपेक्ष्य तत्प्रापकं प्रमाणान्तरं वक्तुं शक्यम्; तथाभूतस्य कस्यचित् प्रमाणस्य अदर्शनात्; न च सर्वाधारत्वात् ब्रह्मणः शरीरत्वाधिकरणत्वमपि तस्य अप्रतिक्षेप्यमिति वाच्यम्, कालादिसाधारणेन सर्वाधारताप्रयोजकसंबन्धेन प्रवृत्तिनिमित्ताधिकरणत्वस्य शब्दवाच्यत्वाप्रयोजकत्वात्; तत्प्रयोजकसंबन्धविशेषेण शरीरत्वाधिकरणत्व एव प्रमाणस्य मृग्यत्वात्। तस्मात् परमेश्वरः शरीरशब्दवाच्यो न भवति, शरीरत्वानधिकरणत्वात्, यत् शरीरत्वानधिकरणं न तत् शरीरशब्दवाच्यम्– यथा जीवस्वरूपम्— इति॥

अथ तृतीया कक्ष्या—

परमेश्वरस्य शरीरत्वाधिकरणत्वे प्रमाणाभावोऽसिद्धः, 'सर्वं खल्विदं ब्रह्म' 'सर्वो वै रुद्रः' 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियत' 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' इति श्रुतिरूपप्रमाणसद्भावात्। अतो न मद्धेतुरसिद्धः, त्वद्धेतुरेवासिद्ध इति॥

अथ चतुर्थी—

'सर्वं खल्विदं ब्रह्म' 'सर्वो वै रुद्रः' इति श्रुतिद्वयमौ-

पचारिकाभेदाभिप्रायेण तात्त्विकाभेदाभिप्रायेण वा उपपन्नः सर्वप्रवृत्तिनिमित्ताश्रयत्वसमर्पणक्षमम्। 'अनेन जीवेनात्मना' इति श्रुतिवचनं प्रपञ्चगतनामरूपव्याकरणार्थत्वेनाप्युपपद्यमानं सर्वेषां नामरूपाणां परमेश्वरपर्यन्तव्याकरणार्थत्वं नापेक्षते। 'तन्नामरूपाभ्यां व्याक्रियत' इति वचनं परब्रह्मसाधारणनामरूपव्याकरणार्थत्वेनाप्युपपद्यमानं न सर्वनामरूपव्याकरणस्य परब्रह्मपर्यन्तत्वमर्थं स्पृशति। 'सर्वाणि रूपाणि' इति मन्त्रे सर्वनामरूपग्रहणे सत्यपि स मन्त्रः प्रपञ्चगतनामरूपसंपादनतत्प्रवृत्तिनिमित्तकतत्तद्वस्तुनामकरणार्थत्वेनाप्युपपद्यते। अतः प्रमाणाभावात् त्वद्धेतुरसिद्धः मद्धेतुश्च नासिद्ध इति॥

अथ पञ्चमी—

'नामरूपे व्याकरवाणि' 'तन्नामरूपाभ्यां व्याक्रियत' 'सर्वाणि रूपाणि' इति श्रुतित्रयस्यापि नामरूपव्याकरणश्रुतित्वाविशेषात् संभवदैकार्थ्यं न परित्यक्तुं युक्तम्। अतः श्रुतित्रयार्थोपसंहारे तेजोऽबन्नात्मकसकलप्रपञ्चगतनामरूपव्याकरणस्यापि परब्रह्मपर्यन्तत्वं लभ्यते। अत एव 'सर्वाणि रूपाणि' इति मन्त्रानन्तरम् 'धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान्प्रदिशश्चतस्रः' इति परमेश्वरेण ह

विषयतया कृतैर्नामभि: परमेश्वरस्य प्रथमपुत्रो हिरण्यगर्भ: प्रथमं व्यवजहार ; तत: प्रकर्षेण विद्वाञ्शक्रोऽपि व्यवजहार ; तत: क्रमेण सर्वासु दिक्षु स्थिता: प्रजा अपि व्यवजह्रुः— इत्यर्थो ज्ञायते । यद्यपि अस्मिन्मन्त्रे परमेश्वरविषयव्यवहरणमात्रं श्रूयते । न तु पूर्वमन्त्रोक्तैः सर्वैर्नामभिरित्यपि श्रूयते ; तथापि पूर्वमन्त्रैकवाक्यतासामर्थ्यात् सोऽर्थो लभ्यते । अत: प्रमाणसत्त्वात् न मद्धेतुरसिद्धः, त्वद्धेतुरेवासिद्ध: इति ॥

अथ षष्ठी—

शरीरादिनामव्याकरणस्य परमेश्वरपर्यन्तत्वाङ्गीकारो न युक्तः, तत्परम्परासंबन्धघटकत्वाभिमतजीवपर्यन्तत्वस्यैवाभावात् ; तदभावे तद्द्वारा परमेश्वरपर्यन्तत्वासंभवात् । तस्मात् बाधितेऽर्थे श्रुतीनां परस्परार्थोपसंहारेण तात्पर्यकल्पनमयुक्तम् , शरीरत्वादीनां जीवपर्यन्तत्वाभावश्च शरीरमहम् , हस्तोऽहम् , पादोऽहम्– इत्यनुभवाभावादेव स्पष्टः । एवं शरीरतदवयवगतशरीरत्वादिधर्माणां स्वतो जीवपर्यन्तत्वाभावादेव—काणोऽहम् , खञ्जोऽहम्—इत्याद्यनुभवव्यवहारनिर्वाहार्थम् अर्शआदिगणे 'स्वाङ्गाद्धीनात्' इति पाठेन स्वाङ्गवाचिन: काणखञ्जादिशब्दात् मत्वर्थीयोऽच्प्रत्ययो वि-

हितः; ततः प्रमाणाभावात् त्वद्धेतुरसिद्धः, मद्धेतुः नासिद्धः इति ॥

अथ सप्तमी—

शरीरस्य अन्तर्यामिणि परमेश्वरे शरीरशब्दवाच्यत संबन्धघटनार्थद्वारभूते जीवे तस्य संबन्धमात्रमपेक्ष्यते न तु तथाभूत एव संबन्धः; संयुक्तविशेषणविशेष्यभावा दिषु घटकघटनीयसंबन्धयोरेकरूपत्वनियमाभावदर्शनात् तथा च उदाहृतश्रुतित्रयस्य न्यायलभ्यार्थैक्योपपादना शरीरस्य जीवेऽपि कश्चित् शरीरद्वारकः परम्परासंबन्धो ऽस्ति इति कल्प्यते; श्रुतोपपादनार्थमश्रुतकल्पनौचित्यात् अथवा श्रुतोपपादनार्थमेव जीवद्वारमनपेक्ष्य परमेश्वरे शरीरशब्दवाच्यताप्रयोजकः साक्षादेव शरीरत्वस्य संबन्धविशेषोऽस्तीति कल्प्यते। एवं च काणत्वखञ्जत्वादीनां जीवे तत्तच्छब्दवाच्यताप्रयोजकसंबन्धविशेषाभावात् जीवे तत्तच्छब्दप्रयोगनिर्वाहार्थं मत्वर्थीयप्रत्ययविधानमपि युज्यते। चायमस्ति नियमः, हीनस्वाङ्गवाचिनां मत्वर्थीयप्रत्ययैः जीवपर्यन्तत्वनिर्वाह इति, कुणिरहम्— इत्यादावदर्शनात् एवं च कुणित्वादिवत् खञ्जत्वादीनां शब्दवाच्यताप्रयोजकसंबन्धसंभवेऽपि स्वरविशेषादिसिद्ध्यर्थं काणखञ्जादिशब्देभ्

मत्वर्थीयप्रत्ययविधानम् इत्युपपादनीयम् । तथैव च उपपादितं पदमञ्जर्याम् । ततः प्रमाणवत्त्वात् मद्धेतुर्नासिद्धः, त्वद्धेतुरेवासिद्ध इति मदनुमानात् सिद्धमन्तर्यामिणः शरीरशब्दवाच्यत्वम् । शरीरशब्देनैव अहंपदसामानाधिकरण्यविषयाः सर्वेऽपि शब्दा व्याख्याताः ॥

इति अन्तर्यामिविषयसकलशब्दवाच्यत्वसमर्थनवादः ॥ १६ ॥



T

# व्याकरणश्रुतिगततृतीयैकवचन-समर्थनवादः ॥

---

उदाहृतायां नामरूपव्याकरणश्रुतौ 'जीवेन' इति तृतीया कर्तृत्वार्था इति विष्णुभागवताः; सहार्था इति सिद्धान्तः; प्रसङ्गात् तद्व्यवस्थापनार्थं कथान्तरं प्रस्तूयते—

नामरूपव्याकरणश्रुतिगता 'जीवेन' इति तृतीया कर्तृत्वार्था, कर्त्रतिरिक्तकारकार्थत्वरहितकारकविभक्तित्वात्, मया शिवः सेव्यते— इत्यत्र तृतीयावत् । 'जीवेन' इति तृतीयायाः कारकान्तरार्थत्वराहित्यस्य वादिद्वयसंप्रतिपन्नत्वात् न हेतोर्विशेषणासिद्धिः, नापि विशेष्यासिद्धिः, उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वेन संभवतः कारकविभक्तित्वस्य त्यागायोगात्—इति पूर्वपक्षिणः प्रथमा कक्ष्या।

अथ द्वितीया—

बाधितमिदमनुमानम्, कर्तुः 'व्याकरवाणि' इत्याख्याताभिहितत्वेन तृतीयायास्तादर्थ्यायोगात् । अतः कारकार्थत्वासंभवात् उपपदविभक्तित्वमेवाश्रयणीयम् इति हेतुरप

T

सिद्धः । तस्मादुदाहृता 'जीवेन' इति तृतीया कर्त्रर्था न भवति, तदभिधायिपदान्तरसमभिव्याहृतत्वात्; पुत्रेण सह अहं भोक्ष्ये— इत्यत्र तृतीयावत् इति ॥

अथ तृयीया—

व्याकरणक्रियाकर्तृशक्तेः आख्यातेनाभिहितत्वेऽपि प्रवेशक्रियाकर्तृशक्तेः केनाप्यनभिहितत्वेन तदर्थत्वं तृतीयायाः संभवतीति मदनुमानस्य न बाधासिद्धिदोषः; त्वदनुमानस्यैव तु बाधासिद्धिदोषः इति ॥

अथ चतुर्थी—

तथा सति अहं भुक्त्वा व्रजामि— इत्यादिप्रयोगविषयेऽपि मया भुक्त्वा— इत्यादिप्रयोगः स्यात्; भोजनादिक्रियाकर्तुः प्रत्ययान्तरेणानभिधानात्; तदिहापि कर्तृशक्त्यधिष्ठाने प्रथमयैव भाव्यमिति तृतीयायाः कर्त्रर्थत्वकारकविभक्तित्वयोरसंभवात् त्वद्धेतोरेव प्रागुक्तदोषः न मद्धेतोरिति ॥

अथ पञ्चमी—

व्याकरणमर्यादया प्रसज्यमानोऽयं दोषः तवापि तुल्यः, अहं भुक्त्वा व्रजामि— इति प्रयोगे हि यथा अहम-

T

र्थोऽभिहितव्रजनक्रियाकर्तृशक्त्याश्रयः— एवमनभिहितश्र- जनक्रियाकर्तृशक्त्याश्रयोऽपि, क्त्वाप्रत्ययस्य शब्दान्तराभि- हितकर्तृशक्तिद्वयाभेदमात्रार्थकत्वेन कर्तृशक्त्यनभिधायकत्वा- त् । अनभिहितसूत्रेण च अनभिहितकारकशक्त्याश्रये यथा- यथं विभक्तयो विधीयन्ते; न त्वभिहिताश्रये प्रति- षिध्यन्ते; पर्युदासपक्षाश्रयणात् । अत एव अनभिहितसं- द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहिते विभक्त्यभावप्रसङ्ग इति वार्तिकेन प्रासाद आस्ते— इत्यत्र प्रसीदन्त्यस्मिन्निति अधिकरणार्थे निष्पन्नेन सदेर्घञ्प्रत्ययेन प्रासादगताधिकर- णकारकशक्तेरभिधानात् सप्तमी न स्यात् इति प्रति- षेधपक्षाश्रयणेन शङ्कामुद्भाव्य, 'न वान्यतरेणानभिधानात् इति वार्तिकेन असिक्रियाधिकरणशक्तेः आसेरुपरितना- ख्यातप्रत्ययेनानभिधानात् नायं दोषः प्रसज्यते इति पर्युदा- सपक्षाश्रयणेन सप्तम्युपपादिता । तस्माद्व्याकरणमर्याद- या प्रसज्यमानोऽयं दोषः तन्मर्यादयैव यत्नान्तरमास्थाय अहं भुक्त्वा इत्यादौ कथं चित् प्रथमासमर्थनेन समाधे- य इति, इह तृतीयायाः कर्त्रर्थत्वकारकविभक्तित्वयोरनुप- त्त्यभावात् न मद्धेतोः प्रागुक्तदोषः, त्वद्धेतोरेव स दोषः इति ॥

अथ षष्ठी—

वैयाकरणमर्यादया नैष दोषः प्रसज्यते । एवं हि तन्मर्यादा— अहं भुक्त्वा व्रजामि— इत्यत्र अहमर्थस्य भोजनव्रजनक्रियाभ्यामुभाभ्यामपि न शाब्द अन्वयः; किंतु व्रजनक्रिययैव, प्राधान्यात्; आर्थस्तु भोजनक्रियया अन्वयः । अतः शब्दव्यापारापेक्षायामभिधानमेव, न त्वनभिधानमपि— इति न अहमर्थे तृतीया प्रसज्यते । अत एव पक्त्वा भुज्यते ओदनः— इत्यत्र पाककर्मत्वानभिधानमाश्रित्य ओदनमिति द्वितीया न प्रवर्तते; पाके कर्मान्वयस्य आर्थत्वात् । प्रासाद आस्ते— इत्यत्र तु प्रासादस्य प्रसदनासनक्रियाभ्यां शाब्द एवान्वयः; पदार्थदशायां घञन्तप्रातिपदिकेन प्रसदनेनाधिकरणतया अन्वितस्यैव हि प्रासादद्रव्यस्य वाक्यार्थदशायाम् आसनक्रियाधिकरणत्वेनापि अन्वयात् । अतस्तत्र शाब्दव्यापारापेक्षयैव अनभिहितासनक्रियाधिकरणकारकशक्त्याश्रयत्वमपि प्रासादस्यास्तीति तत्र सप्तम्युपपद्यते । एवमसङ्कीर्णा प्राक्सिद्धा वैयाकरणमर्यादेति तदाश्रयणेनैव सर्वोपपादने संभवति लौकिकप्रयोगे कर्तरि प्रथमामुपपादयितुं न यत्नान्तरमास्थेयमिति, इह तृतीयायाः कर्त्रर्थत्वकरणार्थत्वयोरसंभवात् त्वद्धेतोरेव पूर्वोक्तदोषः, न मद्धेतोरिति ॥

T

अथ सप्तमी—

'जीवेन' इति तृतीयाया: सहार्थत्वेन उपपदविभक्तित्वे येन जीवेन परमेश्वरस्य साहित्यं तस्य आत्मत्वाव्यभिचारात् 'आत्मना' इत्येतत् व्यर्थं भवेत्, कारकविभक्तित्वे तु जीवशरीरकेण मया— इत्येतदर्थलाभार्थत्वेन तत् सार्थकं भवति। तस्मादभ्यर्हितस्य कारकविभक्तित्वस्य 'आत्मना' इति पदसार्थकत्वस्य च लाभार्थं यत्नान्तरमास्थायैव प्रथमोपपादनं युक्तम्। यदि तु प्राक्सिद्धमर्यादयैव तदुपपादनं कार्यम्, तदा जीवशरीरकेण मया इत्यस्य प्रवेशक्रियामात्रान्वयोऽस्तु; तदा हि तस्योपसर्जनक्रियान्वय: शाब्दव्यापारविषयो भवति। तस्य प्रधानक्रियान्वयाभावेन अर्थात् सिद्ध्यसंभवात्। ततश्च तत्र शाब्दव्यापारविषयानाश्रयणं अनभिहितसूत्रं प्रवर्तत इति भाव्यं तत्र कारकविभक्त्या। दृश्यते च तथैव प्रयोग: 'इष्टका: पक्त्वा भुङ्क्ते' इति। अत्र खलु इष्टकानां पाकक्रिययैवान्वय इति तदन्वयस्य शाब्दव्यापारविषयत्वात् अनभिहिताधिकारविहिता कर्मणि द्वितीया दृश्यते। एवमिहापि कर्तरि तृतीया उपपद्यते। तस्मान्न मद्धेतो: पूर्वोक्तदोष:, त्वद्धेतोरेव स दोष इति॥

T

अथाष्टमी—

'जीवेनात्मना' इत्यस्य जीवशरीरकेण मया इत्यर्थवर्णनायाम् 'अनेन' इति पदं व्यर्थं स्यात्। न हि मया इत्यस्य अर्थः स्वातिरिक्तोऽपि कश्चिदस्ति। येन तद्व्यावर्तनाय तत्सार्थकं भवेत्। जीवरूपेण केनचिदात्मना सह इत्यर्थवर्णनायां तु त्रिवृत्करणीयभूताभिमानित्वेन संनिहितं परामृशतः 'अनेन' इत्यस्यासंनिहितजीवान्तरव्यावर्तनया सार्थकत्वं लभ्यते। अतः प्रथमश्रुतपदसार्थकत्वलम्भनार्थं चरमश्रुतपदस्य अनतिप्रयोजनत्वाश्रयणं न दोषाय। तस्मात् 'आत्मना' इत्यस्य सार्थकत्वलाभमनुरुद्धय न यत्नान्तरमास्थेयम्। यत्तु प्रवेशक्रियामात्रान्वयमङ्गीकृत्य प्राक्सिद्धवैयाकरणमर्यादयैव कर्तरि तृतीयासमर्थनम्, तत्तुच्छम्, क्त्वाप्रयोगे कारकान्तरस्य एकक्रियान्वयेऽपि समानकर्तृकत्वनिर्वाहार्थं कर्तुः क्रियाद्वयान्वयावश्यंभावात् कर्तुर्व्याकरणासंबन्धे अहमिति प्रथमान्तानन्वयप्रसङ्गाच्च। व्याकरणकर्तुः आख्यातेनाभिधानमपेक्ष्यैव तत्र प्रथमायाः समर्थनीयत्वात्। संज्ञामूर्तिक्लृप्त्यधिकरणे परमेश्वरस्यानुप्रवेश इव व्याकरणेऽपि कर्तृत्वव्यवस्थापनेन तद्विरोधापत्तेश्च। तस्मात्त्वद्धेतोरेव प्रागुक्तदोषः, न मद्धेतोरिति ॥

T

अथ नवमी—

'अनेन जीवेन' इत्यस्य संनिहितजीवपरत्वे त्रिवृत्कर-णीयतेजोऽबन्नाभिमानिदेवतात्रयपरत्वं वक्तव्यम्, संनिधान-विशेषाभावात्; तथा च 'जीवेन' इति एकवचनमनुपपन्नम्; जीवपदं च जलाभिमानिनि नारायणेऽनुपपन्नम्; तस्य ब्रह्म-कोटित्वाङ्गीकारात्; ततश्च 'जीवेन' इत्यत्र प्रकृतिप्रत्यययोः असामञ्जस्यम्, 'आत्मना' इत्यस्य वैयर्थ्यम् इति बहुदो-षाभ्युपगमात् वरमेकस्यैव 'अनेन' इति इदंशब्दस्य—अय-महमागच्छामि— इत्यादाविव न अतिप्रयोजनत्वाभ्युपगमः; अतः तन्निर्वाहाय यत्नान्तराश्रयणमेव युक्तमिति न मद्धेतो-रुक्तदोषः, किं तु त्वद्धेतोरेव इति ॥

अथ दशमी—

'जीवेन' इत्यत्र एकवचनं जीवाजीवसमुदाये जीवपदं च —काकाद्दधि रक्ष्यताम् इत्यत्र एकवचनवत्, काकतदन्यसमु-दाये काकपदवच्च—उपपद्यते; त्रिमूर्त्यन्तर्गतो नारायणः पर-नारायणादन्यो जीव इति पक्षे तु तत्र प्रकृत्यंशस्य न का-प्यनुपपत्तिः; तस्मात् 'आत्मना' इत्येतावन्मात्रस्य मत्पक्षे नातिप्रयोजनत्वम् 'अनेन' इति प्रथमश्रुतपदस्यार्थकत्वानु-

T

सारेण सोढुं युक्तमिति तद्व्याकरणमर्यादामतिलङ्घ्य—अहं भुक्त्वा इत्यादि प्रयोगसमर्थनस्याकर्तव्यत्वात् व्याकरणमर्यादया च अत्र कर्तरि तृतीयानुपपत्तेः त्वद्धेतोरेव बाधासिद्धिदोषः, न मद्धेतोरिति सहार्थैवात्र तृतीया इति युक्तम् ॥

इति व्याकरणश्रुतिगततृतीयैकवचनसमर्थनवादः ॥ १७ ॥



T

# सर्वोपादानत्वहेतुकसर्वशब्दवाच्यत्व-समर्थनवादः ॥

---

व्याकरणश्रुतिबलादिव सर्वोपादानत्वश्रुतिबलादपि ब्रह्मणः सर्वशब्दवाच्यत्वं सिध्यतीति निर्णेतुं कथान्तरं प्रस्तूयते—

ब्रह्म वृक्षत्वजातिप्रवृत्तिनिमित्तकशक्त्या वृक्षशब्दवाच्यम् वृक्षोपादानत्वात्, यत् वृक्षोपादानम् तत् वृक्षत्वजातिप्रवृत्तिनिमित्तकशक्त्या वृक्षशब्दवाच्यम्— यथा वृक्षोपादानपार्थिवद्रव्यम्— इति प्रथमा कक्ष्या ।

अथ द्वितीया—

वृक्षाकारपरिणतस्य वृक्षाभिन्नस्य पार्थिवद्रव्यस्येव निर्विकारतया वृक्षाकारपरिणतिरहितस्य ततो भिन्नस्य वृक्षोऽयं जीवति— इत्यादिवृक्षशब्दसामानाधिकरण्यव्यवहारविषयात् वृक्षाभिमानिजीवतोऽपि भिन्नस्य ब्रह्मणः त्वदुक्तशक्त्या वृक्षशब्दवाच्यत्वं न संभवतीति बाधितमिदमनुमानम्; हेतुश्च असिद्धः, कार्याकारपरिणततदभिन्नद्रव्यस्य उपादानत्वेन अतथाभूतस्य ब्रह्मणः क्वचिदप्युपादानत्वासंभवात्;



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्मात् ब्रह्म वृक्षत्वजातिप्रवृत्तिनिमित्तकशक्त्या वृक्षशब्द-वाच्यं न भवति, उभयसिद्धत्वदुक्तसाध्यवद्भिन्नत्वात्, यत् उभयसिद्धत्वदुक्तसाध्यवद्भिन्नम्, न तत् वृक्षत्वजातिप्रवृत्ति-निमित्तकशक्त्या वृक्षशब्दवाच्यम्— यथा कूटम् इति ॥

अथ तृतीया——

वृक्षत्वप्रवृत्तिनिमित्तकशक्त्या वृक्षशब्दवाच्यत्वे प्रयो-जकं वृक्षशब्दप्रवृत्तिनिमित्तवृक्षत्वाश्रयत्वम्, तत् पार्थिव-द्रव्यस्य ब्रह्मणश्च अविशिष्टम्; अतः पार्थिवद्रव्यवत् ब्रह्मणोऽपि मदुक्तसाध्यवत्त्वं युज्यते इति मदनुमानस्य न बाधः; नापि हेत्वसिद्धिः, कार्यावस्थाश्रयकारणत्वस्य उपादानलक्षणतया तस्यापि ब्रह्मपार्थिवद्रव्ययोरविशिष्ट-त्वात्; त्वदनुमानं तु अप्रयोजकम्, उभयसिद्धमदुक्तसा-ध्यवद्भिन्नस्यापि ब्रह्मणो वृक्षत्वाश्रयतया तत्प्रवृत्तिनिमित्त-कशब्दवाच्यत्वोपपत्तेः इति ॥

अथ चतुर्थी——

वृक्षत्वजात्याश्रयत्वमात्रस्य तत्प्रवृत्तिनिमित्तकशब्दवाच्य-ताप्रयोजकत्वे कार्यावस्थाश्रयकारणत्वमात्रस्य उपादानलक्षण-त्वे च कालस्यापि वृक्षत्वप्रवृत्तिनिमित्तकशब्दवाच्यत्वं वृक्षो-

T

पादानत्वं च प्रसज्येत; अतः कालवत् ब्रह्मणः सर्वाधा-
तया वृक्षत्वाश्रयत्वेऽपि तत्प्रवृत्तिनिमित्तकशब्दवाच्यत्वं वृ-
क्षोपादानत्वं च न संभवतीति त्वदनुमानस्य बाधासिद्धि
तदवस्थे; मदनुमानं च नाप्रयोजकम्, ब्रह्मणः वृक्षत्वा-
श्रयत्वमात्रेण तत्प्रवृत्तिनिमित्तकशब्दवाच्यत्वे कालस्यापि त-
द्वाच्यत्वं स्यादिति विपक्षबाधकानुकूलतर्कसद्भावात् इति।

अथ पञ्चमी—

त्वयापि वृक्षत्वाश्रयत्वं तत्प्रवृत्तिनिमित्तकशब्दवाच्यताप्र-
प्रयोजकमेष्टव्यम्, न तु वृक्षाभिन्नत्वम्, वृक्षाभिमानिजी-
वाव्यापकत्वात्; तत्र आश्रयत्वं त्वयापि कालातिप्रसङ्गवार-
णाय सर्वाधारताप्रयोजकसंबन्धातिरिक्तसंबन्धविशेषगर्भमेष्ट-
व्यम्; मयापि तथैवेष्यत इति नातिप्रसङ्गः; अतो मदनुमा-
नस्य न बाधासिद्धी, त्वदनुमानं च अप्रयोजकमेवेति॥

अथ षष्ठी—

वृक्षाभिमानिजीवस्य वृक्षत्वाश्रयत्वं संबन्धविशेषगर्भमि-
त्यत्र अस्ति प्रमाणम्— वृक्षो जीवति— इत्यादिसामानाधि-
करण्यव्यवहारः; ब्रह्मणस्तु तत् संबन्धविशेषगर्भमित्यत्र
नास्ति प्रमाणम्, 'अक्षरमम्बरान्तधृतेः' इत्यधिकरणासिद्धका-

लसाधारणसर्वाधारताप्रयोजकसंबन्धमात्रेण तस्य वृक्षत्वाश्रयत्वोपपत्तेः; अतस्त्वया कालातिप्रसङ्गो निरसितुं न शक्यते इति त्वदनुमानस्य बाधासिद्धी तदवस्थे, मदनुमानं च नाप्रयोजकमिति ॥

अथ सप्तमी—

ब्रह्मणः संबन्धविशेषगर्भं वृक्षत्वाश्रयत्वमस्तीत्यत्र प्रमाणाभावोऽसिद्धः; तस्य श्रुतिसिद्धेन सर्वोपादानभावेन प्राप्तस्य वृक्षोपादानत्वस्य निर्वाहार्थं कालगुणजातस्य काल इव वृक्षत्वस्य ब्रह्मणि सर्वाधारताप्रयोजकसंबन्धभिन्नेनापि संबन्धविशेषेण वृत्तेरभ्युपगन्तव्यत्वे सति नीलत्वादेर्घटादाविव वृक्षत्वस्यापि ब्रह्मणि तद्द्वारकवैशेषिकसंबन्धस्याप्रत्याख्येयत्वात्; तस्मात् मदनुमानस्य न बाधासिद्धी, त्वदनुमानं तु अप्रयोजकमेवेति ॥

अथाष्टमी—

ब्रह्मणः सर्वोपादानभावे तव नास्ति प्रमाणम्; 'आत्मन आकाशः संभूतः' 'यतो वा इमानि भूतानि जायन्ते' 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्याद्युपादानत्वसमर्पकश्रुतीनां त्वया चिच्छक्तिविषयत्वस्या-

भ्युपगतत्वात्; नीलत्वादिदृष्टान्तवर्णनमपि अयुक्तम्, रूप-
त्वादिप्रतिदृष्टान्तसद्भावात्; तस्मात् तव मते ब्रह्मा-
संबन्धविशेषगर्भवृक्षत्वाश्रयत्वे प्रमाणाभावेन कालादावति-
सङ्गतादवस्थ्यात् त्वदनुमानस्य बाधासिद्धी तदवस्थे, मदनु-
मानं च नाप्रयोजकमिति ॥

अथ नवमी—

ब्रह्मणः सर्वोपादानभावे प्रमाणाभावोऽसिद्धः, छान्दो-
ग्ये ब्रह्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय 'यथा सोम्यैकेन
मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्' इत्यादिना तत्रोपादा-
नोपादेयभावापन्नमृत्पिण्डघटादिदृष्टान्तोपादानसामर्थ्यात् ब्र-
ह्मप्रपञ्चयोरपि उपादानोपादेयभावो विवक्षित इत्यवगमात्,
संभवतश्च दृष्टान्तसाम्यस्य त्यागायोगात्; न च तथापि
वृक्षादीनामुपादानोपादेयभावसंबन्धेन ब्रह्माश्रितत्वसिद्धा-
वपि वृक्षत्वादीनां तथाभूतसंबन्धविशेषेण ब्रह्माश्रितत्वं न
सिध्यति; रूपत्वादीनां घटाद्यनाश्रितत्ववत् तेषां ब्रह्मान-
श्रितत्वस्यापि उपपत्तेरिति वाच्यम्, 'आत्मैवेदं सर्वम्' 'सर्वं
खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्यादिश्रुतौ
सर्वोपादानभावप्रयुक्तसर्वप्रपञ्चसामानाधिकरण्यव्यवहारद-
र्शनेन— वृक्षोऽयं जीवतीत्यादिव्यवहारानुसारेण वृक्षत्वादीनां

वृक्षाद्यभिमानिजीवाश्रितत्ववत् तेषां ब्रह्माश्रितत्वस्यापि तत्प्रवृत्तिनिमित्तकशब्दवाच्यताप्रयोजकसंबन्धविशेषगर्भस्य सिद्धेः; अतो मदनुमानस्य न बाधासिद्धी, त्वदनुमानमप्रयोजकमेव इति ॥

अथ दशमी——

सर्वविज्ञानश्रुतिस्तावत् ब्रह्मणः सर्वोपादानत्वे प्रमाणं न भवति, मृत्पिण्डस्य ज्ञानेन तदभिन्नस्य घटशरावादेरिव ब्रह्मज्ञानेन तद्भिन्नस्य प्रपञ्चस्य ज्ञातत्वासंभवेन सर्वविज्ञानप्रतिज्ञानस्यैव ब्रह्मप्राधान्यस्तावकतया औपचारिकत्वात्; न च तस्य औपचारिकत्वे मुख्यसर्वविज्ञानदृष्टान्तीकरणायोगः, चन्द्रमण्डलमिव जगद्विस्मरकान्तिमनोहरमस्य मुखम्—— इत्यादिव्यवहारेषु मुख्यस्यापि स्तुत्यौपचारिकदृष्टान्तीकरणस्य बहुलमुपलम्भात्; मृत्पिण्डस्य घटशरावादीनां च भिन्नभिन्नमृत्कार्यतया तस्य तदुपादानत्वाभावेन दृष्टान्तोपन्यासस्यापि मार्तिकत्वरूपप्रकारैक्यविषयत्वेन औपचारिकत्वाच्च; दृष्टो हि देवदत्त एवं भोजयितव्यः इति देवदत्तभोजनव्याख्यानानन्तरम्, एतेन यज्ञदत्तभोजनं व्याख्यातमिति अव्याख्यातेऽपि व्याख्यातसमानप्रकारकत्वेन व्याख्यातत्वव्यवहारः; एवंरूपमौपचारिक-

T

त्वम् 'एकेन मृत्पिण्डेन' इति एकग्रहणमपि प्रसाधयति; न हि एकमृत्पिण्डज्ञानेन देशान्तरकालान्तरवर्तिसकलमृत्पिण्डज्ञानं कथमपि समर्थयितुं शक्यम्; 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिस्तु जीवविषया, तस्यैव पर्यायेण देवमनुष्यपशुपक्षिसरीसृपादिसर्वात्मभावस्य लोकवेदयोः प्रसिद्धतरत्वात्; अस्ति च जीवेऽपि ब्रह्मशब्दः 'इदं ब्रह्मागच्छति' इत्यादि श्रुत्यन्तरे; अतः त्वदनुमानस्य बाधासिद्धी तदवस्थे; मदनुमानं च न अप्रयोजकम् इति ॥

अथैकादशी--

उदाहृतच्छान्दोग्यश्रुतिस्तावत् ब्रह्मणः सर्वोपादानत्वे प्रमाणं भवत्येव; तत्र हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म' इत्यत्र सत्पदं सूक्ष्मचिदचिद्रूपापन्नचिच्छक्तिविशिष्टशिवपरम्; अन्यथा तदतिरिक्तजीववर्गादिसत्त्वे अवधारणविरोधात्; तज्ज्ञाने च तत्कार्यं सर्वमपि विषयं भवति, कार्यद्रव्यस्य कारणानन्यत्वात्; तद्गतस्थौल्यावस्था परं न विषयः; अतः तेनाकारेण अश्रुतत्वादिश्रवणमुपपद्यते; दृष्टान्तोऽपि उपादानज्ञानेन उपादेयानां ज्ञातत्वविषय एव; न च मृदेव घटादीनामुपादानम्, न तु मृत्पिण्डः, घटादिषु मृदाकारस्येव पिण्डाकारस्यानुवृत्त्यभावादिति वा

च्यम्; मृत्पिण्ड एव घटः कृतः इति व्यवहारानुसारेण तस्य घटाद्युपादानत्वात्; न च उपादानगतयावदाकारानुवृत्तिरुपादेये नियतास्ति, क्षीरस्य वत्सस्य च यावदाकारानुवृत्त्यभावेऽपि लोके 'ऋषभोपानहोर्ञ्यः' इति व्याकरणसूत्रे च क्षीरस्य दध्नि वत्सस्य ऋषभे उपादानत्वव्यवहारात्; मृत्पिण्डगतमृत्त्वरूपकिंचिदाकारानुवृत्तिः घटादिष्वस्त्येव; एवं च 'सर्वं मृण्मयं विज्ञातं स्यात्' इत्यत्र सर्वशब्दः 'एकेन मृत्पिण्डेन' इति प्रागगृहीतैकमृत्कूटविकारघटशरावादिसामस्त्यपरो युक्तः; एवं दृष्टान्तस्य मुख्यत्वव्यवस्थितौ तद्गौणत्वमुखेन आपतत् दार्ष्टान्तिकस्य गौणत्वं प्रत्याख्यातं भवति; दार्ष्टान्तिके सर्वविज्ञानं प्राधान्यविषयतया गौणम्, दृष्टान्ते तु तत्प्रकारैक्यविषयतया इति तयोर्वैरूप्यं च परिहृतं भवति; 'सर्वं खल्विदं ब्रह्म' इत्यादिश्रुतिरपि न जीवविषया, 'तज्जलान्' इति सर्वस्य प्रपञ्चस्य ब्रह्माधीनजन्मस्थितिलयत्वोक्तेर्जीवेऽनन्वयात्; अतो मदनुमानस्य न बाधासिद्धी, त्वदनुमानं च अप्रयोजकमेवेति ॥

अथ द्वादशी—

सद्विज्ञानेन सर्वविज्ञानं मुख्यमुपपादयितुं न शक्यम्,

T

सच्छब्दस्य सूक्ष्मचिदचिद्विशिष्टवस्तुपरत्वकल्पने प्रमाणा-
भावात्; 'सदेव' इत्यवधारणस्य असत्कारणत्वनिषेधदृढी-
करणार्थत्वेन 'एकमेवाद्वितीयम्' इति पदानामधिष्ठात्रन्तर-
निषेधदृढीकरणार्थत्वेन च अन्वयसंभवात्; अतः सत्-
ब्रह्मस्वरूपमात्रपरं वाच्यमिति तद्विज्ञानेन मुख्यं सर्वस्य
श्चविज्ञानं न संभवति; अतो दृष्टान्तस्य मुख्यसर्वविज्ञान-
विषयत्वसंभवेऽपि दार्ष्टान्तिकं मुख्यप्राधान्यापेक्षसर्वविज्ञा-
नावलम्बनमेवेति वाच्यम्; न च दार्ष्टान्तिके सर्वविज्ञानस्य
गौणत्वे तत्र मुख्यसर्वविज्ञानदृष्टान्तीकरणायोगः, दार्ष्टान्ति-
कानुगुण्यार्थं दृष्टान्तेऽपि सर्वविज्ञानस्य 'सर्वं मृण्मयं'
इत्यत्र सर्वशब्दस्यासंकोचमाश्रित्य गौणस्यैव ग्रहणोपपत्तेः;
मुख्यगौणत्ववैरूप्यापेक्षया सत्येव गौणत्वे तत् क्वचित् प्राधा-
न्यापेक्षम् अन्यत्र प्रकारैक्यापेक्षम् इत्यवान्तरवैरूप्यस्य
ह्यत्वात्, सर्वशब्दासंकोचलाभेन स्वारस्याच्च; 'सर्वं खल्वि-
दं ब्रह्म' इत्येतदपि जीवसार्वात्म्यविषयमित्येव वक्तुं युक्तम्
तत्सार्वात्म्यस्य प्रसिद्धतरत्वात्; प्रपञ्चजन्मस्थितिलयेषु
अदृष्टद्वारा जीवाधीनत्वस्यापि सत्त्वाच्च; अतो मदनुमाने
न बाधासिद्धी, त्वदनुमानं च अप्रयोजकमिति ॥

अथ त्रयोदशी—

सच्छब्दस्य सूक्ष्मचिदचिदाकारापन्नशक्तिविशिष्टशिवपरत्वे प्रमाणाभावोऽसिद्धः, 'सदेव' इत्यवधारणस्यासत्कारणत्वनिराकरणदृढीकरणार्थत्वेऽपि अधिष्ठात्रन्तरनिषेधार्थस्य 'एकम्' इत्यस्य तद्दृढीकरणार्थस्य एवकारस्य उपादानान्तरनिषेधार्थस्य 'अद्वितीयम्' इत्यस्य च तत्र प्रमाणत्वात्; चिदचिद्वर्गयोः सच्छब्दार्थबहिर्भावे हि द्विकर्तृकेषु नामरूपव्याकरणप्रभृतिसृज्यवस्तुषु कर्त्रन्तराणां हिरण्यगर्भादीनाम् अचिद्वर्गोपादानभूतशुद्धमायायाश्च सत्त्वेन 'एकमेवाद्वितीयम्' इत्यवधारणानि 'सदेव सोम्येदमग्र आसीत्' इत्येतस्यानन्तरमसद्वादनिराकरणोत्तरस्य 'सत्त्वेव सोम्येदमग्र आसीत्' इत्येतस्य चानन्तरमभ्यस्तानि 'एकमेवाद्वितीयम्' इत्यवधारणानि न संगच्छेरन्; अतस्तदनुसारेण सच्छब्दस्य सूक्ष्मचिदचिदाकारापन्नशक्तिविशिष्टशिवपरत्वमभ्युपगन्तव्यम्; तथा सति उक्तप्रकारेण सूक्ष्मदशापन्नस्य स्थूलचिदचिदाकारापन्नशक्तिविशिष्टतया स्थूलदशापत्त्यर्थं 'बहु स्याम्' इति संकल्पोऽपि उपपद्यते; तत्र हि बहुशब्दो वैपुल्यवाची, न तु संख्याविशेषवाची; चिदचिद्वर्गभेदविवक्षायां बहुत्वसंख्यायाः पूर्वमपि सत्त्वेन, तयोर्ब्रह्मविशेषणतया विशिष्टरूपैक्यात् तद्भेदाविवक्षायां पश्चाद-

पि बहुत्वसंख्याभावेन च उभयथापि 'बहु स्याम्' इति संकल्पायोगात्; तस्मात् उक्तरीत्या सूक्ष्मदशापन्नं सत् स्थूलदशापन्नं स्याम्—इति संकल्पमकरोत् इत्येव तदर्थो वक्तव्य इति तदनुसारेणापि विशिष्टपरत्वमङ्गीकर्तव्यम्; एवं च दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि एकविज्ञानेन सर्वविज्ञानं मुख्यमेव लभ्यते, सर्वशब्दस्य मृण्मयशब्दानुसारेणेव एकशब्दानुसारेणापि संकोचौचित्यात्; अतो बाधकाभावेन दृष्टान्तसाम्यानुरोधात्, प्रपञ्चस्य स्थूलसूक्ष्मावस्थाद्वयेऽपि ब्रह्मविशेषणतोक्त्या तदपृथक्सिद्धत्वलाभाच्च, ब्रह्मप्रपञ्चयोरुपादानोपादेयभावे सद्विद्यागतं सर्वविज्ञानप्रतिज्ञानं प्रमाणं भवत्येव; तथा चिच्छक्तेः प्रपञ्चोपादानभावे प्रमाणत्वेनाभ्युपगतानि 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादीन्यपि ब्रह्मणः सर्वोपादानभावमाक्षिपन्ति इति तत्र प्रमाणभावं भजन्ते; चिच्छक्तेः ब्रह्मापृथक्सिद्धतया चिच्छक्त्यपृथक्सिद्धस्य प्रपञ्चस्यापि ब्रह्मापृथक्सिद्धिलाभात्; तस्मात् सर्वोपादानत्वहेतोः नासिद्धिः; नापि साध्यस्य बाधः, ब्रह्मप्रपञ्चयोर्भेदेऽपि— सर्वं ब्रह्म— इति सामानाधिकरण्येन तस्य बृक्षत्वाद्याश्रयत्वोपपत्तेः; तद्धि 'यतो वा इमानि भूतानि

T

जायन्ते' इत्यादिश्रुतिप्रसिद्धं तज्जत्वादिकमनुवदतीति युक्तम्, सारूप्येण तस्य शीघ्रं बुद्धिस्थिरीकरणात्, न तु अदृष्टद्वारकं जीवजन्यत्वादिकम्, तस्य पुरुषयत्नेन विलम्बितं बुद्धिस्थिरीकर्तव्यत्वात्; अत एव हि 'यतो वा' इत्यादिकं चिच्छक्तिपरम्, तदर्थस्य ब्रह्मणि कथमन्वयः इत्याशङ्कावारणार्थम् 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इत्युपाक्षिप्तब्रह्मोपासनापेक्षितगुणविधानार्थे 'मनोमयः प्राणशरीरः' इत्यादिसंदर्भे 'आकाशात्मा' इत्युपास्यस्य ब्रह्मणो विशेषणमुक्तम्; 'यदेष आकाश आनन्दो न स्यात्' इत्यादिश्रुतिषु आकाशशब्दोक्ताया: चिच्छक्तेरपि अयमात्मा— चैत्रशरीरस्य चैत्र इव; अतो यथा शरीरकृतं जन्मस्थितिलयं शरीरिणि भवति— एवं चिच्छक्तिकृतं प्रपञ्चजन्मस्थितिलयं ब्रह्मणो भवतीति 'तज्जलान्' इत्येतत् युक्तमिति तदभिप्रायः; यत्तु जीवस्य सर्वात्मभावः प्रसिद्धतरः इत्युक्तम्, तत् विपरीतम्, 'इदं सर्वं यदयमात्मा' 'आत्मैवेदं सर्वम्' 'सर्वो वै रुद्रः' 'पुरुष एवेदं सर्वम्' इत्यादिश्रुतिषु 'रुद्रो ह्येवैतत्सर्वम्' इत्यादिस्मृतिषु च ब्रह्मण एव हि तत् प्रसिद्धतरम्; जीवस्य तु 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इत्यादिश्रुति-

T

मवलम्ब्य पर्यायतः सर्वशरीरग्रहणरूपसर्वात्मभावः कल्पनीय इति न तस्य वेदतः सुप्रसिद्धिरस्ति; नापि लोकतः; यद्यपि 'यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किं तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्' इत्यादिश्रुतिषु जीवस्यापि मुक्तौ सार्वात्म्यं प्रसिद्धतरम्, तथापि सिद्धसाध्ययोः सार्वात्म्ययोः सिद्धस्यैवात्र ग्रहणं युक्तम्, सापेक्षनिरपेक्षन्यायात्; तस्मात् मदनुमानस्य न बाधासिद्धी, त्वदनुमानं तु अप्रयोजकमिति अनयैव भङ्ग्या घटोपादानत्वादिना घटादिशब्दवाच्यत्वस्यापि सिद्धौ ब्रह्मणः स्वोपादेयसकलवस्तुवाचकशब्दवाच्यत्वसिद्धिः ॥

इति सर्वोपादानत्वहेतुकसर्वशब्दवाच्यत्वसमर्थनवादः ॥ १८ ॥



# ऐकशास्त्र्यनिराकरणवादः ॥

एवं सकलशब्दवाच्यत्वेन सिद्धं ब्रह्म अलौकिकश्रेयःसाधनत्वप्रवृत्तिनिमित्तककर्मवाचिधर्मशब्दवाच्यमपि भवति ; साक्षादपि उक्तप्रवृत्तिनिमित्तसंबन्धेन तद्वाच्यं भवितुमर्हति, 'श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते । ताद्रूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः' इति वेदावगम्यश्रेयःसाधनताकत्वप्रवृत्तिनिमित्तकतया अभ्युपगतस्य धर्मशब्दस्य कर्मवत् जातिगुणद्रव्याण्यपि अर्थं इति मीमांसकैरुक्तत्वात् ; तेन 'अथातो धर्मजिज्ञासा' इति सूत्रगतधर्मशब्दगृहीततया ब्रह्मणोऽपि जैमिनियधर्मविचारप्रतिज्ञाविषयत्वमस्ति न वा— इति विचारार्थं कथान्तरं प्रस्तूयते—

तदस्तित्ववादिनां परेषामिदमनुमानम्—ब्रह्म स्वरूपप्रमाणसाधनफलैः सह जैमिनीयविचारप्रतिज्ञाविषयः, अलौकिकश्रेयःसाधनत्वात्, कर्मवत् ; ब्रह्मणोऽपि नक्षत्रेष्ट्यादिषु देवतात्वेनान्वयात् जैमिनीये यागेषु देवताप्राधान्यतदभावविचारे देवतासामान्यात्मना विषयत्वमस्ति, देवतानां कर्माधिकारानधिकारविचारे च तदात्मना विषयत्वमस्तीति सि-

T

द्धसाधनवारणाय स्वरूपप्रमाणसाधनफलैः सह- इति विशेषणम्— इति प्रथमा कक्ष्या ॥

अथ द्वितीया—

ब्रह्मणो जैमिनीयधर्मविचारप्रतिज्ञाविषयतायाम् अग्रे तद्विचारेण भाव्यम्, न त्वसौ तत्र दृश्यते; न च तमपि चिकीर्षितो महर्षेः विघ्नः कश्चित् उत्प्रेक्षितुं शक्यते; नापि विस्मरणम्, यो हि द्वादशलक्षण्यां स्वरूपप्रमाणसाधनफलैः सह कर्मजातं निर्णीय तत्रासूत्रितान् कांश्चित्तदुपयुक्तान् न्यायानालक्ष्य तत्संग्रहार्थं द्वादशलक्षणीशेषं संकर्षणकाण्डमकार्षीत्, तस्य महर्षेः ब्रह्मविचारे विघ्नं विस्मरणं वा कथमुत्प्रेक्षामहे; न च कर्मविचारोपयुक्तन्यायैरेव ब्रह्मणोऽपि स्वरूपप्रमाणसाधनफलनिर्णयः सिध्यतीत्यभिप्रेत्य पृथक्तद्विचारो न कृत इति शक्यं वक्तुम्, कर्मपरवाक्यार्थनिर्णायकन्यायेभ्यो विलक्षणानामेव ब्रह्मपरवाक्यार्थनिर्णायकन्यायानां चतुर्लक्षण्यां प्रथनदर्शनात्; न च द्वादशलक्षणीचतुर्लक्षण्योः ऐकशास्त्र्याभ्युपगमेन ब्रह्मविचारप्रतिज्ञानिर्वाहः कल्पयितुं शक्यः, भिन्नवक्तृकयोः धर्मब्रह्मविचारप्रतिज्ञोपक्रमयोः परस्परविलक्षणसाध्यासाध्यार्थनिर्णायकन्यायप्रथनप्रवृत्तयोः तयोरैकशास्त्र्यकल्पने प्रमाणा-

भावात्; अतो बाधितमिदमनुमानम् इति— ब्रह्म नोक्त-साध्यवत्, कर्मान्यत्वात् घटवत्— इति ॥

अथ तृतीया कक्ष्या—

न बाधितं मदनुमानम्, ऐकशास्त्र्यकल्पनेन प्रतिज्ञानिर्वाहोपपत्तेः; न च तत्कल्पकाभावः, वेदरूपैकग्रन्थव्याख्यात्वस्य तत्कल्पकत्वात्; न च वक्तृभेदः तत्कल्पनाबाधकः, वक्तृभेदेऽपि व्याकरणरूपैकप्रबन्धव्याख्यानत्वेन वामनजयादित्यवृत्त्योः ऐकशास्त्र्यदर्शनात्; नापि धर्मब्रह्मविचारप्रतिज्ञोपक्रमौ तद्बाधकौ, धर्मशब्देन कर्मब्रह्मसाधारणेन द्वादशलक्षणीचतुर्लक्षणीसाधारणप्रतिज्ञायां वृत्तायां कर्मविचारानन्तरम् 'अथातो ब्रह्मजिज्ञासा' इत्यस्य 'अथातः शेषलक्षणम्' इतिवत् अवान्तरप्रतिज्ञापरत्वोपपत्तेः; न च परस्परविलक्षणन्यायग्रथनं तद्बाधकम्, निर्णेयार्थानुसारेण न्यायवैलक्षण्योपपत्तेः; द्वादशलक्षण्यामपि कर्मभेदशेषशेषिभावादिनिर्णेयार्थानुसारेण विलक्षणन्यायग्रथनदर्शनात्; अतो न बाधितं मदनुमानम्, त्वदनुमानं तु अप्रयोजकम्— इति ॥

अथ चतुर्थी कक्ष्या—

न्यायानामिह वैलक्षण्यं भेदमात्रं न विवक्षितम्, किंतु

विरोधः; प्रसिद्धो हि विरोधः, चतुर्लक्षण्यां जैमिनिमतस्य प्रायः पूर्वपक्षीकरणदर्शनात्; न हि परस्परविरुद्धमतद्वया-वलम्बनेन द्वाभ्यां प्रवर्तितं शास्त्रद्वयं ताभ्यामैकमत्येन एक-शास्त्रतया कृतमिति कल्पयितुं शक्यम्; धर्मशब्दश्च ब्रह्म-प्रतिकोटितया यागादिकर्मपरत्वेन 'फलमत उपपत्तेः' इत्यधिकरणे 'धर्मं जैमिनिरत एव' इति सूत्रे प्रयुक्तः; आपस्तम्बेन च महर्षिणा 'धर्माधर्मौ चरत आवां स्वः इति न देवगन्धर्वा न पितर इत्याचक्षते अयं धर्मोऽयं धर्म इति यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः यद्गर्हन्ते सो-ऽधर्मः' इति अनुष्ठेययागादावेव धर्मशब्दः प्रयुक्तः; अतस्त-दनुसारेण धर्मजिज्ञासासूत्रगतस्यापि तस्य यागाद्यनुष्ठेयपरत्वं वाच्यमिति धर्मब्रह्मजिज्ञासासूत्रयोः साधारणावान्तरप्र-तिज्ञापरत्वविभागकल्पनमपि न युक्तम्; तस्मात् बाधितं त्वदनुमानम्, मदनुमानं च नाप्रयोजकम्, यत् येन रूपेण नानुष्ठेयम् तस्य तेन रूपेण अनुष्ठेयपरधर्मशब्दप्राह्यत्वा-योगात् इति ॥

अथ पञ्चमी—

असिद्धोऽयं जैमिनीयवैयासिकमतयोः विरोधः, चतुर्लक्ष-ण्यां क्वचिदपि जैमिनीयमतस्य पूर्वपक्षीकरणाभावात्; यत्तु

T

पुरुषार्थाधिकरणे 'शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः' इति ब्रह्मापलापपरं पूर्वपक्षसूत्रम्, न तत् जैमिन्यभिमतस्य पक्षस्य अनुवादकम्, किं तु मदीयस्याभ्युच्चयवादस्य; अत एव 'परं जैमिनिर्मुख्यत्वात्' इत्यादिसूत्रेषु ब्रह्माभ्युपगमेनैव प्रवृत्तस्य पक्षस्य जैमिनीयत्वेनानुवादः; एवं 'परामर्शं जैमिनिरचोदना चापवदति हि' इति सूत्रं संन्यासापलापस्य जैमिनिना अभ्युच्चयवादत्वेन उपन्यस्तस्यैवानुवादकम्, न तु तदीयसिद्धान्तस्य; अत एव 'तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः' इति सूत्रे संन्यस्तवतः संन्यासात् प्रच्युतिः जैमिनेरपि न संमता इत्युक्तम्; एवमन्यत्रापि तत्र तत्र विरोधपरिहार उन्नेयः; धर्मशब्दस्य अनुष्ठेयासाधारण्यमपि असिद्धम्, 'ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्' इति महाभारते भगवत्साधारण्योक्तेः; अतो विरोधाभावात् कथंचित् विरोधसद्भावेऽपि ब्रह्मानभ्युपगमादेः द्वादशलक्षण्यामसूत्रितत्वात् धर्मशब्दसाधारण्याच्च कर्तृभेदेऽपि ऐकशास्त्र्याङ्गीकारे न काचिदनुपपत्तिः; त्वदनुमानं तु अप्रयोजकमेव, अननुष्ठेयस्यापि धर्मशब्दगृहीतत्वेन जैमिनीयविचारप्रतिज्ञाविषयत्वोपपत्तेः इति ॥

T

अथ षष्ठी कक्ष्या—

यदुक्तं विरोधो नास्तीति, तदसिद्धम्, ब्रह्मसंन्यासाभ्युपगमानभ्युपगमाभ्यां विरोधस्याप्रत्याख्येयत्वात्, यत्तु जैमिनेः तदुभयाभ्युपगमप्रदर्शकं सूत्रम्, तत् तदभ्युपगम एव तस्य सिद्धान्त इत्यस्य ज्ञापकमिति न अवधारयितुं शक्यम्, 'विप्रतिषेधाच्चासमञ्जसम्' इति सांख्याधिकरणोक्तन्यायेन जैमिनिमतस्य परस्परविरुद्धतया अनुपादेयत्वोद्घाटनपरत्वेन अन्यथासिद्धेः; यच्चोक्तं ब्रह्मानभ्युपगमतदभ्युपगमैकान्त्यादिषु जैमिनिबादरायणयोः विरोधसद्भावेऽपि ब्रह्मानभ्युपगमादेः द्वादशलक्षण्याम् असूत्रितत्वात् अविरुद्धायास्तस्याः चतुर्लक्षण्या सह ऐकशास्त्र्यमुपपद्यत इति, तदप्ययुक्तम्, अविरुद्धार्थत्वासिद्धेः; तथा हि— 'तस्य निमित्तपरीष्टिः' इति धर्मप्रमाणनिरूपणं प्रतिज्ञाय प्रथमाध्यायेन यत् तत्र प्रमाणनिरूपणं कृतम्, तत्तावद्विरुद्धम्; तत्र हि 'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति सूत्रेण— आम्नायस्य कृत्स्नस्यापि प्रयोजनपर्यवसानाय क्रियार्थत्वावश्यंभावात् अतदर्थानाम् 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिक्रियावाक्यानपेक्षिततया क्रियार्थत्वरहितानाम् आनर्थक्यं निष्प्रयोजन-

त्वम्, तस्मात् अक्रियार्थवाक्यजातमप्रमाणमुच्यते— इत्येतदर्थकेन वेदेष्वर्थवादानामप्रामाण्यमाशङ्क्य, 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति सूत्रेण— सिद्धार्थवादानां विधिवाक्येन एकवाक्यत्वात् विधीनां स्तुतिरूपेणार्थेन सप्रयोजनाः स्युः— इत्येतदर्थकेन तेषां विध्येकवाक्यतया प्रामाण्यमुपपादितमर्थवादाधिकरणे; औदुम्बराधिकरणेऽपि— 'उक्तं तु वाक्यशेषत्वम्' इति अर्थवादाधिकरणोक्तार्थस्मारणेन तद्दृढीकृतम्; धर्मविचारप्रतिज्ञाया ब्रह्मविचारसाधारण्ये हि 'तस्य निमित्तपरीष्टिः' इति धर्मप्रमाणनिरूपणप्रतिज्ञापि ब्रह्मप्रमाणनिरूपणसाधारणी स्यात्; तथा सति अक्रियार्थानामानर्थक्यशङ्कायां केषांचिदक्रियार्थानां फलसाधनयागादिविधिशेषत्वेन केषांचित् स्वतःफलभूतब्रह्मप्रतिपादकत्वेन च प्रामाण्यमुपपद्यत इति विभज्य परिहरणीयम्; एवमन्यत्रापि प्रमाणाध्यायार्थविरोधोऽनुसंधेयः; तथा 'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वात्' इत्याष्टमिकाधिकरणे ऐन्द्रपुरोडाशेषु हविःसामान्यात् आग्नेयविध्यन्तः, न तु देवतासामान्यात् ऐन्द्रविध्यन्त इति निर्णयार्थे प्रवृत्ते— देवतायाः शब्देन उद्देश्यमात्ररूपत्वेन गुणत्वात् इति युक्तिः जैमिन्यभिमता; तदपि मतं वैया-

सिकमतविरुद्धम् — वैयासिकतन्त्रे देवताधिकरणे देवतानां यागदेशे संनिधानस्य हविर्भोक्तृत्वेन प्राधान्यस्य च समर्थितत्वात्; तथा 'चोदना पुनरारम्भः' इति द्वैतीयीकाधिकरणे कर्मणामपूर्वद्वारा फलसाधनत्वं जैमिनिना समर्थितम्, तदपि 'फलमत उपपत्तेः' इति वैयासिकाधिकरणेन विरुद्धम्; तत्र कर्मोपासनप्रसादितस्य परमेश्वरस्य फलप्रदत्वसमर्थनात्; तस्मात् शास्त्रयोरेव विरोधोऽस्ति; ब्रह्मसंन्यासापलापप्रयुक्तोऽपि तयोरस्ति विरोधः; तथा हि—'तत्त्वमसि' इत्यादिब्रह्मविषयाणि वाक्यानि जीवं ब्रह्म बोधयन्तीति 'विधिना त्वेकवाक्यत्वात्'— इति अक्रियार्थानां विधिशेषत्वोक्त्या तेषामुपासनाविधिशेषत्वमुक्तं भवति; तदुपासनाश्च क्रतूपयुक्तकर्तृरूपद्रव्यसंस्कारत्वात् प्रोक्षणादिन्यायेन क्रतुशेषतां भजन्ते; कर्तृमात्रस्य लौकिकक्रियासाधारण्येऽपि देहात्मभावेनापि लौकिकक्रियोपपत्तेः; 'आत्मानमुपासीत' इत्यादिषु अनारभ्याधीतेषु वेदान्तेषु उपासनासंस्कार्यत्वेनानूदितस्य आत्मनः स्वर्गादिभोक्तृयागादिविध्याक्षिप्तदेहातिरिक्तात्मरूपत्वेन अव्यभिचरितक्रतुसंबन्धितया तद्द्वारा वाक्यप्रमाणेन 'यदेव विद्यया करोति' इति श्रुतिप्रमाणेन च तासां क्रतुसंबन्धोपपत्तेः; न च अपहतपाप्मत्वादिजीवासं-

भावितगुणाम्नानेन ब्रह्मणो जीवादधिकत्वसिद्धेः तदुपासनानां न क्रतुशेषत्वप्रसक्तिरिति वाच्यम्, अक्रियार्थानां विधिशेषत्वनियमस्य जैमिन्यभिमतस्य समन्वयाधिकरणेन भङ्गं कृत्वा वेदान्तानां स्वातन्त्र्येण उपक्रमादितात्पर्यलिङ्गेन च ब्रह्मतद्गुणेषु प्रामाण्ये व्यवस्थापिते खलु अपहतपाप्मत्वादिगुणैः जीवाधिकं ब्रह्म सिध्येत्, जैमिनिदृष्ट्या तेषां विधिशेषत्वे तथाभूतगुणवर्णनस्य जीव एव स्तुत्यर्थत्वेनान्वयं को वारयेत्; दृश्यते हि क्रत्वन्वयितत्तद्वस्त्वसंभावितगुणवर्णनं तत्तन्मन्त्रार्थवादेषु— यथा 'दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या संभव' 'द्यां ते धूमो गच्छतु अन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहा' 'अपहतपाप्मानो वा ऋतवः' 'आपो वा इदꣳ सर्वम्' इत्यादिषु; एवं ब्रह्मापलापे सति तत्प्राप्त्युपायः संन्यासोऽपि अपलपितो भवति; अत एव कर्मानधिकारिणामन्धपङ्ग्वादीनां कथंचित् गत्युपन्यासः संन्यास इति मीमांसकप्रवादः; तस्मात् शास्त्रयोर्विरोधो नास्तीति अयुक्तम्; धर्मशब्दस्य ब्रह्मसाधारण्यवचनमपि अयुक्तम्, 'ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्' इति भारतवचनस्य 'धर्मो विग्रहवान्राम:' इतिवत् स्तुत्यर्थत्वेनापि उपपत्तेः; तस्मात् मदनुमानं न बाधि-

तम्, त्वदनुमानं तु अप्रयोजकमिति ॥

अथ सप्तमी—

न तावत् बाधितं मदनुमानम्, पूर्वतन्त्रे प्रामाण्यप्रतिज्ञाया अक्रियार्थानामानर्थक्येनाप्रामाण्यशङ्कायाश्च ब्रह्मपरवाक्यसाधारण्येऽपि, क्रियाविशेषार्थवादेषु विधिशेषत्वेन सार्थकतया प्रामाण्यप्रकारमुक्त्वा, ब्रह्मपरवाक्येषु स्वतः पुरुषार्थब्रह्मविषयतया क्रियाविधिशेषत्वमनपेक्ष्य स्वत एव प्रामाण्यमिति तत्प्रामाण्यप्रकारमनुद्घाट्य, तद्विषये गूढाभिसंधिरासीत् जैमिनिरिति प्रथमाध्यायोद्घाटितविरोधपरिहारसंभवात्; 'विप्रतिपत्तौ हविषा नियम्येत' इत्याष्टमिकाधिकरणसिद्धान्ते देवताया गुणत्वं न युक्तिः, द्रव्यस्यापि गुणत्वाविशेषात्; किं तु 'कर्मणस्तदुपाख्यत्वात्' इति सूत्रशेषोक्ता— हविस्त्यागरूपस्य यागकर्मणो हविःषु उपलभ्यमानत्वात् हविःसामान्यं बलीयः, हविर्हि त्यज्यमानमुपलभ्यते, न देवतेति एषैव मूलयुक्तिः— इत्याष्टमिकाधिकरणविरोधपरिहारलाभात्; 'चोदना पुनरारम्भः' इत्यधिकरणे कर्मणां द्वारसद्भावमात्रमुक्तम्, न त्वीश्वरप्रसादप्रत्याख्यानेन अपूर्वमेव द्वारमिति समर्थितमिति तद्विरोधपरिहारलाभात्; 'विधिना त्वेकवाक्यत्वात्' इत्यत्र वायुर्वे-

पिष्टादिवाक्यानामेव विधिशेषत्वेन प्रामाण्यमुक्तम्, न ब्रह्मपरवाक्यानामिति; अत एव ब्रह्मापलापादिशङ्कापरिहारलाभात् भारतवचनानुसारेण धर्मशब्दस्य अलौकिकश्रेयःसाधनमात्रवाचितया ब्रह्मसाधारण्यसंभवे तत्प्रवृत्तिनिमित्ते विहितत्वानुष्ठेयत्वादिविशेषणानुप्रवेशेन ब्रह्मव्यावृत्तशक्तिकल्पनस्य गौरवपराहततया भारतवचनस्य स्तुत्यर्थत्वकल्पनानुपपत्तेः; तस्मात् न बाधितं मदनुमानम्, त्वदनुमानं तु अप्रयोजकमेवेति ॥

अथाष्टमी कक्ष्या—

प्रथमाध्यायार्थविरोधसमाधानं तावत् अयुक्तम्, सामान्यप्रतिज्ञानाप्रामाण्यशङ्कयोः साधारण्ये, केषुचिदक्रियार्थेषु अप्रामाण्यशङ्कां परिहृत्य केषुचित् गूढाभिसंधिरासीत् इति कल्पनस्यापहास्यत्वात्; यः खलु विध्यर्थवादमन्त्रनामधेयात्मकवेदस्य धर्मप्रामाण्यं सप्रकारमुपपाद्य स्मृत्याचारयोरपि तत्र संभवत् प्रामाण्यमुपपादयामास, स कथं जैमिनिः ब्रह्मप्रमाणविचारसाधारण्येन धर्मप्रमाणविचारं प्रतिज्ञाय ब्रह्मपरवेदान्तभागरूपार्थवादसाधारण्येन आनर्थक्यादप्रामाण्यशङ्कामुद्भाव्य क्रियाशेषार्थवादमात्रे परिहारमाह, न तु ब्रह्मविषयवेदान्तरूपार्थवादेषु— इति कथमिदमसारमुत्प्रेक्षणं न्यायविदः

T

श्रद्दधीरन्; किंच धर्मविचारप्रतिज्ञायास्तत्प्रमाणविचारप्रतिज्ञायाश्च कर्मब्रह्मतदुपासनादिसाधारण्ये 'अन्यानर्थक्यात्' इति अर्थवादाधिकरणपूर्वपक्षसूत्रस्य 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इत्यादिकर्मविधिफलार्थवादवत् उपासनाविधिफलार्थवादा अपि विषया भवेयुः, तुल्यं हि तेष्वपि अन्यानर्थक्यचोद्यम्—यदि 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति' इति प्रजापतिविद्याफलार्थवादोऽपि विवक्षितार्थः स्यात्, तर्हि 'सोऽश्नुते सर्वान्कामान्' इति केवलं सर्वकामावाप्त्यर्थत्वेन श्रुतानन्दमयब्रह्मोपासना, 'तेषां सर्वेषु लोकेषु कामचारो भवति' इति केवलं सर्वलोकावाप्त्यर्थत्वेन श्रुता दहरोपासना च व्यर्था स्यात्; यदि उक्तोपासनाभिः सर्वलोककामावाप्तिसहिता मुक्तिः, तर्हि वसुरुद्रादित्यमरुत्साध्यतत्तुल्यभोगमात्रप्राप्तिसहितमुक्तिफला मधुविद्या गार्हपत्यादिलोकत्रयप्राप्तिपूर्वकमुक्तिफलोपकोसलविद्या लोकविशेषप्राप्तितत्रत्यभोगरहितकेवलमुक्तिफलाक्षरादिविद्या च अनर्थिका स्यात्; यदि सकलविषयभोगविरक्तं ब्रह्मानन्दैकप्रेप्सुमुपासनाधिकारिणं प्रति लोकविशेषप्राप्तिः तत्रत्यभोगश्च न फलम्, किंतु स्वेप्सितफलप्राप्तौ अन्तरायमात्रमिति इष्यते, तदा निरन्तरायाविलम्बितेप्सितफल-

T

प्रापकत्वेन अक्षरादिविद्याः श्रुता इति अतथाभूता मधुविद्यादयोऽनर्थिकाः स्युः; यदि अनियतकालारम्भत्वेन यावज्जीविकत्वेन च अनियतकालपरिमाणाः न्यूनाधिकगुणाः न्यूनाधिकवर्णाश्रमधर्मानुगृहीताश्च सर्वा अपि ब्रह्मविद्या अविशिष्टमुक्तिफलाः, तदा गुणतः कर्मतः कालतो वा अधिका अनर्थिकाः स्युः; यदि 'निरञ्जनः परमं साम्यमुपैति' इत्यादयो विद्याफलार्थवादा विवक्षितार्थाः स्युः, तदा मुक्तेरपि वैधफलत्वप्राप्तौ 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' 'सर्वेभ्यः कामेभ्यो ज्योतिष्टोमः' इति सार्वकाम्यवाक्ययोः तत्संग्राहकत्वमपि स्यादिति सकृत्प्रयुक्ताभ्यां दर्शपूर्णमासाभ्यां सकृत्प्रयुक्तेन ज्योतिष्टोमेन वा मुक्तिसिद्धेः सकलवर्णाश्रमसाहित्येन यावज्जीवमनुष्ठेयाः सर्वा अपि ब्रह्मोपासनाः अनर्थिकाः स्युः— इत्येवम् अन्यानर्थक्यसूत्रस्य सर्वविषयत्वे च सर्वसाधारणेन परिहारेण सूत्रितेन भवितव्यम्; कर्मविध्यर्थवादमात्रविषयत्वमेव च परिहारसूत्राणां दृश्यते 'सर्वत्वमाधिकारिकम्' 'फलस्य कर्मनिष्पत्तेः तेषां लोकवत् परिमाणतः फलविशेषः स्यात्' इति; तत्र आद्यसूत्रेण 'विद्या प्रशंसा' इति पूर्वसूत्रतः प्रशंसापदानुवृत्तियुक्तेन पूर्णाहुतिवाक्ये यत् कामसर्वत्वम्, तत् प्रशंसामात्रम्, न तु साक्षात्फलम्, अग्निसंस्कारस्य

T

च पूर्णाहुतेः फलानपेक्षत्वात्, प्रशंसार्थमुपादीयमानकामसर्वत्वम् आधिकारिकम्, पूर्णाहुत्यनन्तरमग्निसिद्धौ सत्यामेव हि नानाफलेषु कर्मसु अधिक्रियते पुरुषः; तेषां फलानां सिद्धिः पूर्णाहुत्यधीनेति तत् फलसर्वत्वं पूर्णाहुतिफलत्वेन प्रशंसार्थमुपादीयते; न च अग्निसाध्यकर्मफलग्रहणेन सर्वकामावाप्तिसाधनतया पूर्णाहुतिः प्रशंसितुं न शक्यते, आकाशगाम्यमरकन्यालाभादेः अग्निसाध्यकर्मफलत्वाभावादिति शङ्कयम्, यतः पूर्णाहुतिवाक्ये सर्वत्वमधिकारापेक्षम् — यावत्फलजातं कर्मविधिवाक्येष्वधिकृतम्, तावत्येव संकुचितवृत्ति, सर्वौदनोऽनेन भुक्तः—इत्यादौ प्रकरणादिना संकोचदर्शनात् इत्ययमर्थ उच्यते; न च इत्थं प्रशंसार्थत्वम् 'सोऽश्नुते सर्वान्कामान्' इत्यादिषु रात्रिसत्रार्थवादवत् फलसमर्पकेषु अङ्गीकर्तुं शक्यम्; द्वितीयसूत्रेण अग्निहोत्रतः स्वर्गसिद्धेः इष्टिसोमाद्यानर्थक्यम्— इत्यादिशङ्कापरिहाराय कृषिन्यायेन कर्मभूयस्त्वात् फलभूयस्त्वमुच्यते; तत्र शङ्का तावत् उपासनाभागेऽपि समाना; तत्परिहारः सिद्धान्तभागे न दृश्यते; न हि तत्र कर्मभूयस्त्वात् फलभूयस्त्वन्यायः प्रवर्तते; 'तथा फलाभावात्' इति सूत्रोक्तम् उच्यमानफलाभावरूपमप्रामाण्यकारणम् 'शोभतेऽस्य मुखं य एवं वेद'

T

इत्यादिकर्मकाण्डगतफलार्थवादस्य 'चक्षुष्यः श्रुतो भवति' इत्यादिब्रह्मकाण्डगतफलार्थवादस्य च साधारणम्, कर्मकाण्डगतार्थवाद एव परिहारसूत्रं दृश्यते; 'विद्या प्रशंसा' इति विदुषो मुखमेवं गर्गत्रिरात्रब्राह्मणार्थवेदनेनैव शोभते, न वनितामुखवल्लावण्येन इति विद्या प्रशस्यत इति; नायं परिहारः 'चक्षुष्यः श्रुतो भवति' इत्यत्र प्रवर्तते, चक्षुष्यत्वश्रुतत्वयोः ज्योतिर्विद्याफलत्वाभ्युपगमात्; एवम् अन्यानर्थक्यादिसूत्राणामवर्जनीये तत्तदुपासनाविधिफलार्थवादसाधारण्ये तत्तत्सिद्धान्तसूत्राणां कर्मविधिफलार्थवादविषयाणामेव ग्रथनेऽपि, जैमिनेः क्वचित् परिहारोद्घाटनं क्वचिदभिसंधिनिगूहनम् इत्येवं गत्याश्रयणं कस्य नापहास्यम्; तस्मात् आत्मोपासनानां क्रतुशेषत्वात् अपापश्लोकश्रवणादिवत् तत्फलार्थवादा अविवक्षितार्थाः इत्यभिप्रेत्य अन्यानर्थक्यशङ्का तत्परिहारश्च तेषु न प्रवर्तिताः; अत एव वेदोपरा वेदान्ता इति विचारणीयाभावात् असारत्वाभिप्रायो जैमिनीयानां प्रवाद इति प्रथमाध्यायार्थविरोधसमाधानं तावदयुक्तमेव; तथैव आष्टमिकाधिकरणविरोधसमाधानमपि; तत्र हि— हविषो दृश्यमानत्वेऽपि यागस्य देवताराधनरूपत्वात् देवतैव प्रसन्ना फलदात्री प्रधानभूता; अतः

T

तत्सामान्यं हविःसामान्यात् बलीय इति शङ्कानिराकरणार्थं सूत्रम्— 'गुणत्वेन देवताश्रुतिः' इति; न चैतदभ्युच्चयपरत्वेन योजयितुं शक्यम्, नवमाध्याये जैमिनिना 'देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्' इति सूत्रेण यथा अतिथिपूजात्मकमातिथ्यम् अतिथिप्रीत्यर्थं सत् अतिथिप्रधानम्— एवं देवपूजात्मकं यजनमपि देवताप्रीत्यर्थं सदेव देवताप्रधानम्, सैव च प्रीता देवता फलदात्रीति पूर्वपक्षं कृत्वा 'अपि वा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्यात् गुणत्वेन देवताश्रुतिः' इति सूत्रेण न देवताप्रधानं यजनम्; तदेव अपूर्वद्वारा फलजनकम्; न तु हविषा प्रीता देवता; तस्यास्तु द्रव्योद्देश्यतया यागोपसर्जनत्वेनैव श्रुतिरिति सिद्धान्तमभिधाय, 'अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिप्रधानत्वात्' इति सूत्रेण आतिथ्यवैषम्यं यजने दर्शितम्— आतिथ्यम् अतिथिप्रीतिविधानम्—यथा अतिथिः प्रीयते तथा कर्तव्यतया विहितमिति तदतिथिप्रधानं युज्यते, कर्मणि तु नास्ति प्रीतिविधानम्—यथा देवता प्रीयते तथा कर्म कर्तव्यमिति; अतो न देवताप्रधानं यजनमिति कण्ठत एव देवताप्राधान्यस्य निराकृतत्वात्; एतेन 'चोदना पुनरारम्भः' इत्यधिकरणवि-

T

रोधसमाधानमपि निरस्तम्, जैमिनिना देवताप्राधान्ये स्पष्टं निराकृते 'चोदना पुनरारम्भः' इत्यधिकरणे व्याख्यातृभिः व्यवहृतमपूर्वमेव द्वारं जैमिनेरपि अभिमतम् इति अवधारणात्; ब्रह्मतत्प्राप्त्यर्थसंन्यासापलापविरोधसमाधानमपि अयुक्तम्, ब्रह्मविषयवाक्यानां कर्तृसंस्काररूपकर्माङ्गोपासनाविषयजीवात्मस्वरूपसमर्पकत्वमभ्युपगच्छतः जैमिनेः मते ब्रह्मणि प्रमाणाभावेनैव तद्द्वयापलापसिद्धेरनिवार्यत्वात्; अत एव अर्थवादाधिकरणे वार्तिककारैः 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादानां विधिशेषत्वसमर्थनानन्तरमुक्तम्—एतेन उपनिषदामपि नैराकाङ्क्ष्यं व्याख्यातमिति; यत्तु वार्तिककारैः व्याकरणाधिकरणे परमात्मोपासनाविधितत्फलवचनान्युदाहृत्य तासां स्वातन्त्र्येण अभ्युदयनिःश्रेयससाधनत्वमुक्तम्, तत् सर्वथा ब्रह्मापलापभीरूणां तेषामेव मनीषिकया प्रवृत्तम्, न तु सूत्रकाराभिमततया, जैमिनीयवैयासिकसूत्राणां स्फुटविरोधस्य दर्शितत्वात्; यत्तु प्रवृत्तिनिमित्तगौरवपरिहारार्थं धर्मशब्दस्य ब्रह्मसाधारण्यावश्यंभावात् भारतवचनस्य स्तुत्यर्थत्वं न कल्प्यत इति; तत्रेदमुत्तरम्— अद्धा तस्य स्तुत्यर्थत्वं न कल्प्यम्, किंतु कृष्णस्तुतिप्रकरणादेव सिद्धम्; तत धर्मशब्दस्य अलौकिकश्रेयःसाधनमात्रवाचितायां न निर्व-

T

इति; तदा हि अनुष्ठातृत्वेन अलौकिकश्रेयःसाधनानां जीवात्मनां निमित्तत्वेन तथाभूतानामन्येषां च बहूनां धर्मशब्दः साधारण इति तद्वाच्यत्वोक्त्या भगवतः का स्तुतिर्लभ्यते; तस्मादुदाहृतभारतवचनस्वारस्यप्रसिद्ध्यर्थमेव धर्मशब्दस्य यागादिकर्ममात्रवाचित्वमङ्गीकर्तव्यम्— धर्मसंस्थापनार्थमवतीर्णो भगवान् साक्षात् स्वयमेव धर्मः इत्युक्त्या स्तुतो भवति; अस्तु वा यथाकथंचित् धर्मशब्दस्य ब्रह्मण्यपि वृत्तिः, तथापि धर्मजिज्ञासासूत्रोक्तः धर्मशब्दः 'धर्मं जैमिनिरत एव' इति सूत्रगत इव ब्रह्मव्यावृत्त एव ग्राह्यः, 'चोदनालक्षणोऽर्थो धर्मः' इति विचार्यत्वेन प्रतिज्ञातस्य धर्मस्य चोदनालक्षणत्वोक्तेः; 'चुदप्रेरणे' इति धातोः निष्पन्नो हि चोदनाशब्दः प्रवर्तकवचनमाचष्टे; तस्मात् चोदना धर्मे साक्षात् प्रमाणम्; तत्तच्चोदनासंनिध्याम्नातानि सिद्धार्थबोधकानि वचनानि स्तुत्यादिद्वारा तत्तच्चोदनैकवाक्यतया तत्र प्रमाणानि; प्रधानविध्येकवाक्येष्वेव रात्रिसत्राद्यर्थवादेषु श्रूयमाणं फलं विध्यपेक्षितत्वात् विवक्षितम्; कर्तृसंस्कारत्वेन कर्माङ्गेषु आत्मोपासनेषु श्रूयमाणं तु फलं विध्यनपेक्षितत्वात् न विवक्षितमित्यभिप्रायेणैव न तेषु जैमिनिना अन्यानर्थक्यादिदोषपरिहाराश्चिन्तिताः; भगवान् बादरा-

T

यणस्तु क्षयिष्णुसातिशयाभ्युदयफलं यागादिरूपं धर्ममेव सकलवेदार्थं मन्वानः जैमिनिः उपक्रमाद्यवगमितमहातात्पर्यसकलवेदान्तप्रमाणकं ब्रह्म नित्यनिरतिशयपुरुषार्थरूपमुक्तिफलानि तदुपासनानि कर्मणां तत्साधनसहकारिभावं च नाज्ञासीत्— इत्येतदालोच्य जैमिनीयपर्यालोचनेन लोको मा मोमुहत् इति लोकानुग्रहाय 'अथातो ब्रह्मजिज्ञासा' इत्यादिशास्त्रं प्रणिनाय–– इति अस्त्येव जैमिनीयबादरायणीययोः शास्त्रयोः महान्विरोधः; अतः तयोरैकशास्त्र्यासंभवात् बाधितं त्वदनुमानम्, मदनुमानं तु नाप्रयोजकम्, क्षयिष्णुसातिशयफलं यागादिकमेव विचार्यत्वेन प्रतिज्ञातवतः तन्त्रे तदन्यस्य विचार्यत्वायोगात्; न च कर्मान्यत्वेऽपि यूपाहवनीयगोदोहनादीनां स्वरूपप्रमाणादिभिर्विचारो दृष्ट इति तद्वत् ब्रह्मणोऽपि देवतात्वेन यागाद्यन्वयसद्भावात् हेत्वसिद्धिः, देवतायाः त्यज्यमानद्रव्योद्देश्यत्वेऽपि तद्वाचकशब्दस्यैव उच्चारणार्थकृतिरूपानुष्ठानविषयत्वेन तस्याः तद्विषयत्वाभावात्; एतेन जैमिनीये विचार्यपरस्य धर्मशब्दस्य कर्मपरत्वेन साक्षात् ब्रह्मास्पर्शित्वेऽपि उपासनरूपकर्मपरत्वस्याप्रत्याख्येयतया तद्विषयफलरूपब्रह्मस्पर्शित्वमवर्जनीयमिति प्रतिज्ञासाधारण्यात् यथा कथंचित् विरोधमवधूय ऐकशास्त्र्यं

T

समर्थनीयमित्यपि शङ्का निरस्ता, धर्मशब्दस्य उत्तरसूत्रजा-तपर्यालोचनया क्षयिष्णुसातिशयाभ्युदयफलकर्ममात्रपरत्वस्य उक्तत्वात्; अस्ति हि धर्मशब्दस्य तथाभूतकर्ममात्रेऽपि वैदिकः प्रयोगः– 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इति; अयं कठवल्लीमन्त्रः क्षयिष्णुसातिशयफलसाधनकर्मतत्साध्यफलतत्साधककर्तृविलक्षणसाधनसाध्यसाधकत्रयपर इति मतद्वयेऽपि समानम्; 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति सूत्रे परैः उक्तत्रयलाभार्थम् इत्थमयं मन्त्रो व्याख्यातः— धर्मोऽभ्युदयफलकयागादिः, ततोऽन्यत्र तद्विलक्षणं साधनम्, अधर्मो धर्मादितरः तत्साध्यः स्वर्गादिरभ्युदयः, ततोऽन्यत्र तद्विलक्षणं साध्यम् अस्मात्, बुद्धिसंनिहितात् यागादिसाधकात् सांसारिकफलप्रवणात् पुरुषादन्यत्र तद्विलक्षणं साधकं च– इति यत्तत् साधनादित्रयं पश्यसि, कृताकृतात् भूताच्च भव्याच्चेति धर्मादीनां त्रयाणामपि विशेषणम्, कृताकृतम् प्रारब्धापरिसमाप्तं यत्प्रकारमुच्यते, तेन भूतभविष्यद्वर्तमानात्मकात् प्रसिद्धसाधनादेः विलक्षणं साधनादित्रयं वद इत्युक्तं भवति; यद्वा अन्यत्र धर्मादन्यत्राधर्मात्– इति प्रसिद्धपुण्यपापयोरसाधनप्रश्नः, अन्यत्रास्मात् कृताकृतात्

भूताच्च भव्याच्चेति भूतभविष्यद्वर्तमानात्मकानित्यसाध्येतरनित्यसाध्यप्रश्नः, साधकप्रश्नस्य तु साध्यप्रश्न एवान्तर्भावः, साधकस्यापि नित्यत्वात्; साध्यकोटित्वाच्चेति; तत्र अधर्मशब्दस्य पापे प्रसिद्धस्य धर्मफलस्वर्गादिफलत्वेन, अस्मात् इत्यस्य कृताकृतविशेषणभावेन प्रतीयमानस्य विभिद्य स्वयमेव साधकत्वेन, कृताकृतादित्यस्य अस्मात् इत्येतद्विशेष्यभावेन प्रतीयमानस्य धर्मादिसर्वविशेषणत्वेन, भूताच्च भव्याच्च इत्यनयोः पृथक् अन्यत्र-शब्दयोगात् स्वातन्त्र्येण प्रतीयमानयोः धर्मादिसर्वविशेषणत्वेन च योजना क्लिष्टेति प्रथमप्रकारे दोषः; द्वितीयप्रकारे साधकप्रश्नालाभो दोषः, नित्यत्वेन प्राप्यकोटित्वेन च द्वितीयप्रश्नसंग्रहीतत्वाभ्युपगमे यागादिफलसाधकविलक्षणसाधकालाभः यागादिफलसाधकस्यापि नित्यत्वेन भूतभविष्यद्वर्तमानान्यत्वरूपसंग्राहकक्रोडीकृतत्वात्, अपहतपाप्मत्वाद्याविर्भावविशिष्टत्वेन मुक्तस्येव स्वर्गादिविशिष्टत्वेन प्राप्यत्वाच्च; तस्मात् अनुपपन्ना परकीया योजनेति, तामुपेक्ष्य अस्माभिः अन्या ऋज्वी योजना दर्शिता, प्रथमपादेन यत् बलवदनिष्टाननुबन्धिक्षयिष्णुसातिशयफलम्, यच्च तदनुबन्धि तथाभूतफलम्, तदुभयविलक्षणं साधनमुपन्यस्तम्, द्वितीयपादेन 'प्लवा ह्येतेऽदृढा यज्ञरूपा अष्टादशोक्तमवरं

T

येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति'— इत्यादिमन्त्रान्तरनिन्दितयागादिसाधकविलक्षणः साधक उपन्यस्तः; तत्र कृताकृतात् इत्यस्य कृतमप्यकृतम् अकृतप्रायं यस्य तस्मादिति व्याख्या, तृतीयपादेन स्वर्गादिसाध्यविलक्षणं साध्यमुपन्यस्तम्, तत्र चकाराभ्यां भूतभव्यान्वताभ्या भूतभव्योभयाकारस्य वर्तमानस्य संग्रहः, एवम्—

अन्यत्रधर्ममनुना प्रथितेतरेषु
प्रश्नत्रये करणसाधकतत्फलेषु ।
पादत्रयेण सुवचे क्रमशो निबद्धे
क्लिश्नन्ति तं किमिति तत्परयोजनार्थम् ॥

इति मतद्वयेऽपि तत्र धर्मशब्दः क्षयिष्णुसातिशयफलकर्ममात्रपर इति निर्विवादम्; किंच तथा विधप्रयोगदर्शनेऽपि अग्रिमव्यवहारानुसारेण तावन्मात्रपरत्वं जैमिनीयप्रयोगस्य तावानेव धर्मो नान्योऽस्तीति भ्रान्तिकृता कल्पयितुं शक्यम्; दृष्टं हि 'अथातो धर्मं व्याख्यास्यामः' इति कणादसूत्रे विचार्यपरस्य धर्मशब्दस्य अग्रिमसूत्रानुसारेण किंचिद्धर्मपरत्वम्; अग्रे हि यागाद्यनुष्ठानप्रकारो न चिन्तितः, किंतु षष्ठाध्याये प्रथमाह्निके दानप्र-

तिग्रहधर्मश्चिन्तितः, द्वितीयाह्निकेन चातुराश्रम्यधर्मः किया-नपि चिन्तितः संग्रहतः; तस्मात् युक्तं धर्मविचारप्रतिज्ञान-स्य न ब्रह्मविचारसाधारण्यमिति सिद्धम् । अत्रायं मत-द्वयसंक्षेपः—

जातिद्रव्यगुणान्वयि धर्मत्वं ब्रह्मणोऽपि समवेतम् ।
तदुपासनक्रियाया निःसंदेहं च धर्मत्वम् ॥ १ ॥

तत्साक्षाद्गोचरयेद्धर्मविचारप्रतिज्ञानम् ।
स्वर्गादिवद्विचार्यः क्रियाफलत्वेन वा ब्रह्म ॥ २ ॥

इत्यैकशास्त्र्यमुभयोर्मीमांसाशास्त्रयोर्यदाश्रिषत ।
तदाशामपनेतुं तेषां प्रतिबोधनं क्रियते ॥ ३ ॥

भवदभिमतरूपं ब्रह्म तत्तद्वचो हि
स्पृशति यदि विचार्ये पूर्वतन्त्रप्रतिज्ञा ।
किमिति न भवितव्यं तद्विचारैस्तदास्तां
ननु परिहरणीयं सर्वथा तद्विरुद्धम् ॥ ४ ॥

लक्षसूत्रगतचोदनापदं प्रेरकं विधिपदं हि नोज्झति ।
अक्रियार्थवचसामनर्थतामर्थवादनयपूर्वपक्षताम् ॥ ५ ॥

अर्थवादवचसामनर्थता पर्यहारि विधिशेषभावतः ।
तत्किमागमवचांसि न स्पृशेच्चोदनं तव समं हि तेष्वपि ॥
न स्पृशेद्यदि ततो हि जैमिनिः स स्वयंफलपराणि सूत्रयेत् ।

अत्र गूढमभिसंधिमल्पधीरस्य कल्पयति केन हेतुना ॥ ७॥

इत्थं गूढाभिसंधिः कियति तु विषये कल्पनीयो महर्षे-
रन्यानर्थक्ययुक्त्याद्यपि हि विफलतोक्त्यादिसाधारणं ते।
कृत्स्नं धर्मप्रमाणं कलयितुमनसं लक्षणे तन्यमाने
स्मृत्याचारादि तद्वत्स्मृतिपथमगमत्किं नु वेदान्तभागः॥

अत्र निर्भरमशक्यसंवरे प्रस्फुटे प्रणव एव विस्वरे।
श्रद्दधीत क इवेह तावकीमैकमत्यकृतिकत्थनां तयोः ॥ ९॥

अष्टमे च नवमे च देवतामध्वरेषु गुणमाह जैमिनिः।
स्वप्रधानमथ बादरायणस्तत्र वा परिहृतिः क्रमेत का ॥

द्वारं यागादीनां यदपूर्वं देवताप्रसाद इति।
वैषम्यं तत्रापि प्रवर्तते नैव परिहृतिः कापि ॥ ११ ॥

तस्मात्पूर्वत्र तन्त्रे क्षयनियतफलः कामिकार्यो विचार्यो
धर्मस्तत्रैव वेदं सकलमपि मुनिर्जैमिनिर्मानमूचे।
एतत्कर्मैकनिष्ठैर्गुरुकृतमहितं तन्मतं बोधयिष्य-
न्ब्रह्मज्ञानाय सूत्राण्यकुरुत भगवान्पुण्डरीकाक्ष एव॥

इति तन्त्रयोर्विरोधे प्रधानभूतार्थफलसमालम्बे।
जाग्रति न धीषु विदुषां लभते पदमैकशास्त्र्यवार्तापि॥

इति ऐकशास्त्र्यनिराकरणवादः ॥ १९ ॥

# अध्ययनविधेरर्थज्ञानफलकत्वनिराकरणवादः ॥

एवम् 'अथातो धर्मजिज्ञासा' इति सूत्रे विचार्यपरस्य धर्मशब्दस्य ब्रह्मसाधारण्याभावेन ब्रह्मविचारार्थं पृथक् 'अथातो ब्रह्मजिज्ञासा' इति शास्त्रान्तरे समारब्धव्ये समर्थिते, यदि अध्ययनविधिः अर्थज्ञानफलकः, तदा ब्रह्मविचारेऽपि धर्मविचार इव स एव प्रयोजको भवेत्; स यदि अक्षरावाप्तिमात्रविश्रान्तः तदा तत्र प्रयोजकान्तरमन्वेषणीयम्; पक्षद्वयमपि भाष्यकारैः दर्शितम्; तत्र कतरः पक्षः श्रेयानिति निर्णयार्थं कथान्तरं प्रस्तूयते—

तत्र 'स्वाध्यायोऽध्येतव्यः' इति विधिविहितम् अर्थवद्वेदभागाध्ययनम् अर्थज्ञानफलकम्, अर्थवद्विषयविहिताध्ययनत्वात्, अङ्गाध्ययनवत्— इति प्रथमा कक्ष्या; 'वेदाङ्गानि समस्तानि कृष्णपक्षे तु संपठेत्' इति विधिविहितं वेदाङ्गानामध्ययनम् अर्थज्ञानफलकम्, अन्यथा तेषां वैदिकस्वरवर्णादिनिर्णायकत्वासंभवात्; तन्निर्णयार्थत्वेनैव च तेषां वेदाङ्गत्वात्; अतो न दृष्टान्तस्य साध्यवैकल्यम्; स्तोभाक्षराध्य-

T

यने कौतुकादिप्रवृत्तलौकिकाध्ययने च व्यभिचारवारणार्थं हेतौ विशेषणद्वयम्; तयोरेव अंशतो बाधवारणार्थं पक्षे विशेषणद्वयम्; एवमपि विनाप्यर्थज्ञानं जपमात्रेण महाफलजनकस्य श्रीपञ्चाक्षरादिमन्त्रस्य गुरूपदेशानूच्चारणरूपे ग्रहणे व्यभिचारवारणाय हेतौ विहितविशेषणस्य स्थाने नित्यविधिविहितत्वं कार्यम् इति ॥

अथ द्वितीया कक्ष्या—

अप्रयोजकमिदम्, विपक्षे अनिष्टप्रसङ्गाभावात्; न च अर्थज्ञानफलकत्वाभावे अध्ययनविधेः निष्फलत्वप्रसङ्गः; अक्षरावाप्त्या तस्य साफल्यात्, अक्षरावाप्तिर्हि प्राप्यकर्मार्थकतव्यप्रत्ययेन फलतया उपनीता स्तोभभागाध्ययने स्वाध्यायाध्ययनफलत्वेन क्लृप्ता अर्थज्ञानात्प्राग्भाविनी अध्ययनस्य अर्थज्ञानफलकत्वपक्षेऽपि तन्निर्वाहकतया प्रथममपेक्षिता च, अध्ययनस्य कालान्तरभाविविचारसाध्यार्थज्ञानकारणत्वस्य अक्षरावाप्तिशब्दितस्वाधीनोच्चारणहेतुदृढसंस्कारलाभमूलकविचारणीयवेदवाक्यस्मृतिद्वारा निर्वाह्यत्वात्; किंच अर्थज्ञाने दृष्टफले नियमविधिरास्थेयः, न च तस्यावकाशोऽस्ति; यदा तावत् अध्ययनजन्यविधिवाक्यार्थज्ञानवतामेव विहितानुष्ठानमभ्युदयकरम्— इतिवत् अध्ययनजन्य-

T

निषेधवाक्यार्थज्ञानवतामेव निषिद्धानुष्ठानं प्रत्यवायकरमिति नियमफलमाश्रियते, तदा तदध्ययनरहितानां तच्छाखिनां हिंसानृतादिभिः प्रत्यवायो न स्यात्, वेदाध्ययने सति एतानि निषिद्धानि प्रत्यवायकराणि– इति विशिष्य तज्ज्ञानावश्यंभावात् तदनुष्ठाने प्रत्यवायो भवेदिति अनिष्टफलत्वप्रतिसंधानेन तत्र प्रवृत्तिरपि न स्यात्; अथोच्येत—निषेधवाक्येषु प्रत्यवायफलकं निषिद्धानुष्ठानं न शास्त्रार्थः, किंतु प्रत्यवायपरिहारफलकं तदननुष्ठानमिति, तद्विषयो नियमः— अध्ययनपूर्वकनिषेधवाक्यार्थज्ञानवत एव निषिद्धाननुष्ठानं प्रत्यवायपरिहाराय भवतीति; तथा च निषिद्धानुष्ठानेन प्रत्यवायजनने निषेधवाक्यार्थज्ञानं नापेक्षितमिति, तदध्ययनरहितानां तदनुष्ठाने प्रत्यवायाभावो न प्रसज्यते; प्रत्यवायपरिहारोपयोगिज्ञानफलकमध्ययनं नानिष्टफलकमिति तेषामध्ययनप्रवृत्त्यभावोऽपि न प्रसज्यते— इति; एवमपि अनधीतवेदानां निषिद्धाननुष्ठानेऽपि प्रत्यवायापरिहारात् अवश्यंभावी प्रत्यवायः तदनुष्ठानेनैवास्तु— इति प्रतिसंधानेन तेषां निषिद्धानुष्ठानप्रसङ्गो दुर्वारः; अध्ययनं विना उपायान्तरेण निषेधवाक्यार्थं जानन् प्रत्यवेयात् इति नियमफलमाश्रियत इति चेत्, एवं सति अध्ययनरहितानां निषि-

द्ध्वर्जनार्थमुपायान्तरेण ज्ञाने तत्कृत: प्रत्यवाय:, तदज्ञाने निषिद्धानुष्ठानकृत:—इत्युभयथाप्यवर्जनीय: प्रत्यवायो भवेत्; एवम् अध्ययनसंध्यावन्दनादिविध्यर्थानामध्ययनात्प्रागुपायान्तरेण ज्ञाने अध्ययननियमविध्यतिक्रमेण, तदज्ञाने अध्ययनादिषु अप्रवृत्त्या च प्रत्यवायप्रसङ्गो द्रष्टव्य: ; ननु अध्ययनगृहीतवेदार्थज्ञानवतामेव अनुष्ठानमभ्युदयकारि इत्येवमादिफलम् अध्ययननियमस्य न कल्प्यते, किं तु कर्मसु शूद्रानधिकारासिद्धि: तत्फलमभ्युपगम्यते—कर्मविधयो हि अनुष्ठेयार्थज्ञानवदधिकारिसापेक्षा: स्वाध्यायाध्ययनविधे: अर्थज्ञानफलकत्वे तद्विधिप्रापितानुष्ठेयार्थज्ञानेषु त्रैवर्णिकेष्वेवाधिकारिषु लब्धानुष्ठाना: न शूद्राणां तज्ज्ञानमाक्षिपन्ति, तस्य अर्थज्ञानफलकत्वाभावे तु कर्मविधिभिरेवानुष्ठानार्थम् अर्थज्ञानमाक्षेप्यमिति अविशेषात् शूद्राणामपि अर्थज्ञानमाक्षिप्य तानपि अधिकारित्वेन गृह्णीयुरिति चेत; मैवम्, अध्ययननियमसद्भावेऽपि शूद्राधिकारापत्तेरनिवार्यत्वात्, त्रैवर्णिकानामपि 'स्वाध्यायोऽध्येतव्य:' इति पितृपितामहादिपरम्परागतस्वशाखामात्र एव अध्ययनस्य विहितत्वेन न शाखान्तरगताङ्गमन्त्रोपसंहारेण कर्मानुष्ठानार्थं शाखान्तरगततत्तद्वाक्यार्थग्रहणाक्षेपावश्यंभावेन, तथैव शूद्रस्यापि कर्मतदङ्गविषयवाक्यार्थप्र-

T

हणाक्षेपोपपत्तेः ; न च वाच्यम्—शूद्रस्य कर्मानुष्ठानापेक्षित-ज्ञानं कात्स्न्र्येनापेक्षणीयम्, त्रैवर्णिकानां तु शाखान्तराम्नात-मात्रगोचरमिति आक्षेपलाघवात् विधयः त्रैवर्णिकानेवाधि-कुर्युः न तु शूद्रमिति, एवं तर्हि यस्य कर्मणो यस्यां शाखायां भूयसामङ्गानां विधानम्, 'भूयस्त्वेनोभयश्रुति' इति न्यायेन प्रधानस्यापि तत्र विधानम्, शाखान्तरे तु स्वल्पाङ्गविधा-नम्—तत्र कर्मणि तच्छाखाध्यायिनामेवाधिकारः स्यात्; तस्मात् त्रैवर्णिकानामपि अर्थज्ञानाक्षेपावश्यंभावात् शूद्रान-धिकारे तस्य वेदतदर्थग्रहणयज्ञानुष्ठाननिषेध एव हेतुरिति, नासौ अर्थज्ञानफलकस्य अध्ययननियमविधेः फलमिति ; तस्मात् विहितमर्थवद्वेदभागाध्ययनम् अर्थज्ञानफलकं न भव-ति, विहितवेदाध्ययनत्वात्, स्तोभभागाध्ययनवत्; अर्थ-ज्ञानफलमुद्दिश्य कौतुकेन क्रियमाणे लौकिकाध्ययने अंशे बाधस्य व्यभिचारस्य च वारणार्थं पक्षहेत्वोः विहितविशे-षणमिति ॥

अथ तृतीया कक्ष्या—

मदनुमानं नाप्रयोजकम्, अध्ययनस्यार्थज्ञानफलकत्वा-भावे वेदस्य अर्थपरत्वाभावप्रसङ्गस्य विपक्षे बाधकस्य सत्त्वात्— विशिष्टार्थप्रतीत्युद्देश्यकोच्चारणाधीनं हि श-

T

ब्दानामर्थपरत्वम्; अत एव गौरश्वः पुरुषो हस्ती इति पदसमभिव्याहारस्य नास्त्यर्थपरत्वम्, तदुच्चारणस्य विशिष्टार्थप्रतीत्युद्देश्यकत्वाभावात्; यत्र तु आप्तकृतस्य तदुच्चारणस्य विशिष्टार्थप्रतीत्युद्देश्यकत्वमस्तीत्यवसितम्, तत्र अयं गौः पुंगवः अश्वो वेगवान् पुरुषो नियतचेष्टः हस्ती महाबलः— इति गवाश्वादिपदानां पुंगवादौ गौणवृत्तिकल्पनया अर्थपरत्वमुपपाद्यत एव; ततश्च वेदेऽपि अर्थपरत्वसिद्ध्यर्थमर्थावबोधोद्देश्यकोच्चारणापेक्षणे लोके इव रागप्रयुक्तस्य तस्यासंभवात् विधिप्रयुक्तं तदेष्टव्यम; विधिश्च अध्ययनविधेरन्यः कश्चित् अर्थज्ञानफलकत्वकल्पनायोग्यः स्वाध्यायोच्चारणविषयो न दृश्यत इति अध्ययनविधेरपि अर्थाववोधोद्देश्यकत्वाभावे वेदस्य अर्थपरत्वं न सिध्येदेव; न च वाच्यम्-व्युत्पन्नस्य लौकिकादिव वैदिकादपि वाक्यादर्थप्रतीतेरनिवार्यतया बाधकाभावादौत्सर्गिकं प्रामाण्यं न भज्यते, तत एव वेदस्यार्थपरत्वं सिध्येत्— इति, एवमपि येषां यजमानप्रस्तरादिवाक्यानां यथाश्रुतार्थे बाधकमस्ति, तेषां गौणीलक्षणान्यवधारणकल्पनाद्याश्रयणेन अर्थपरत्वस्य असमर्थनीयतया तेषां निरर्थकत्वप्रसङ्गात्; न च तेषामपि वेदान्तर्गतत्वहेतुना सामान्यतोऽर्थवत्त्वसिद्धौ तन्निर्वाहायार्थविशेषपर्यवसानोप-

यौगिलक्षणादिकल्पनया सार्थकत्वं सिध्येदिति वाच्यम्, वेदान्तर्गतत्वेऽपि स्तोभभागवत् अनर्थकत्वोपपत्त्या तत्रैव व्यभिचारेण च अनुमानस्यासाधकत्वात्; एवं तर्हि स्तोभभागाध्ययनाव्यापकं निषेधाध्ययनसंध्यावन्दनादिविधिषु अशक्यनियमनं चाध्ययनम् अर्थज्ञानफलं न स्यादिति चेत्, न, स्तोभभागांशेऽध्ययनविधेः अक्षरावाप्तिफलकत्वाभ्युपगमात्; न चैवं सति विधिवैरूप्यं दोषः, यदेव हि किंचन विध्यन्तरोपयोगि स्वाध्यायाध्ययनेन शक्यं भावयितुम्, तत्सर्वं तेन भावयेत्—इति एकयैव वचनभङ्ग्या उभयार्थत्वलाभात्; एवं च स्तोभभागव्यापित्वेन अर्थज्ञानोपजीव्यत्वेन च अक्षरावाप्तेरध्ययनफलत्वावश्यंभावेऽपि, अर्थज्ञानस्यापि तत्फलत्वस्यावश्यवाच्यतया तन्निर्वाहाय स्वाध्यायस्योपादेयाध्ययनगुणत्वेन अन्वयेऽभ्युपगन्तव्ये स्वाध्यायप्राधान्यसमर्पकतव्यप्रत्ययस्वारस्यभङ्गो न दोष इति तस्यार्थसिद्धस्वाध्यायगताध्ययनसंस्कार्यतानुवादकत्वमेव कल्पयितुमुचितम्; अस्ति हि शाब्दबोधे अध्ययनगुणस्यापि स्वाध्यायस्य आर्थिकमध्ययनसंस्कार्यत्वम्, अध्ययनस्य तत्संस्कृतं स्वाध्यायद्वारमनपेक्ष्य तदर्थज्ञानाद्युत्पादकत्वासंभवात्; तस्मात् नाप्रयोजकं मदनुमानम्, त्वदनुमानं तु अध्ययनस्य

अर्थज्ञानफलकत्वाभावे वेदस्य निरर्थकत्वप्रसङ्ग इति प्रतिकूलतर्कपराहतम् इति ॥

अथ चतुर्थी कक्ष्या—

शब्दानामर्थपरत्वे अर्थप्रतीत्युद्देश्यकमुच्चारणं न प्रयोजकम्, मौनिना लिखित्वा दत्ते परेणाप्येतेनैव लिखितं दृष्ट्वा मनसानुसंहिते श्लोकादौ तदभावात्; अतस्तत्र प्रयोजकापेक्षणे अन्यदेव किंचित् प्रयोजकमन्वेषणीयमिति त्वदनुमानमप्रयोजकमेव, मदनुमानं च न प्रतिकूलतर्कपराहतमिति ॥

अथ पञ्चमी कक्ष्या—

शब्दानामर्थतात्पर्ये संभवदनुगतं प्रयोजकं नोपेक्षणीयमिति अर्थप्रतीत्युद्देश्यकमुच्चारणं तत्र प्रयोजकं भवत्येव, किंतु नोच्चारणत्वेन प्रयोजकम्; कथं तर्हि? अर्थप्रतीत्युद्देश्यकव्यापारत्वेन, अतो मौनिश्लोकेऽपि लिखित्वा दानरूपस्य तदुद्देश्यकव्यापारस्य सत्त्वात् नोक्तदोषः; एवं च वेदे तदनुकूलव्यापारो अध्ययनरूपादुच्चारणादन्यो न संभवतीति तस्यार्थवत्त्वनिर्वाहार्थमध्ययनविधेरर्थज्ञानफलकत्वमवश्यमास्थेयमिति नाप्रयोजकं मदनुमानम्, त्वदनुमानं च प्रतिकूलतर्कपराहतमिति ॥

T

अथ षष्ठी कक्ष्या—

यदि अर्थप्रतीत्युद्देश्यकव्यापारत्वेन तात्पर्यप्रयोजकता, तर्हि अध्ययनादन्य एव कृत्स्नस्वाध्यायार्थप्रतीत्युद्देशेन अध्ययनानन्तरं कर्तव्यो विचारः; न हि विचारमन्तरेण कस्यापि क्रतूपासनोपयुक्तः वेदार्थनिर्णयः संभवति; अतस्तस्यैव वेदानामर्थपरत्वे प्रयोजकत्वोपपत्तौ नाध्ययनस्य तत्प्रयोजकत्वनिर्वाहार्थं तव्यप्रत्ययस्वारस्यादिप्राप्तमक्षरावाप्तिमतिलङ्घ्य अर्थज्ञानस्यापि तत्फलत्वं कल्पनीयमिति त्वदनुमानमप्रयोजकमेव, मदनुमानं च न प्रतिकूलतर्कपराहतमिति ॥

अथ सप्तमी कक्ष्या—

अध्ययनस्यार्थज्ञानफलकत्वाभावे कृत्स्नस्वाध्यायार्थप्रतीतेरुद्देशेन विचार एव न प्राप्नुयात्; तस्यार्थावबोधफलकत्वे हि तदीयफलोपकार्यङ्गतया तद्विध्याक्षिप्तः स प्राप्नुयात्; न हि विध्यन्तरमूला रागमूला वा तत्प्राप्तिः संभावयितुं शक्यते; एवं च अध्ययनानन्तरं कृत्स्नवेदार्थविचारकर्तव्यतामिच्छता त्वयापि तन्निर्वाहार्थमध्ययनविधेरर्थज्ञानफलकत्वस्यावश्याभ्युपगन्तव्यतया साक्षादर्थप्रतीत्युद्देश्यकव्यापारोऽध्ययनमेव, विचारस्तु तदङ्गमिति वेदतात्पर्यप्रयोजकव्यापारत्वमपि अध्ययनस्यैव पर्यवस्यति, अतो मदनुमानं नाप्रयोजकम्,

T

त्वदनुमानमेव प्रतिकूलतर्कपराहतमिति ॥

अथाष्टमी कक्ष्या—

अध्ययनस्य तव्यप्रत्ययोपात्ताक्षरावाप्त्यर्थत्वेन अर्थज्ञानार्थत्वाभावेऽपि अध्ययनसंस्कृतस्य स्वाध्यायस्य विनियोगाकाङ्क्षायामर्थज्ञाने तस्य विनियोगो भवति— यथा 'अग्नीनादधीत' इति विहितस्याधानस्य द्वितीयाश्रुत्युपनीताग्निसिद्ध्यर्थत्वेन क्रत्वर्थत्वाभावेऽपि आधानसंस्कृतानामग्नीनां विनियोगाकाङ्क्षायां तेषां क्रतुषु विनियोगो भवति; एवं च स्वाध्यायस्यार्थज्ञानकरणत्वं विचारमितिकर्तव्यतामपेक्षत इति तदितिकर्तव्यतारूपेण विचारः प्राप्नुयादेव; अतो वेदानामर्थपरत्वस्य तदर्थप्रतीत्युद्देश्यकविचारव्यापारेण सिद्धेः न तत्सिद्ध्यर्थम् अध्ययनस्यार्थज्ञानफलकत्वं कल्पनीयमिति त्वदनुमानमेवाप्रयोजकम्, मदनुमानं तु न प्रतिकूलतर्कपराहतमिति ॥

अथ नवमी कक्ष्या—

संस्कृतस्वाध्यायेतिकर्तव्यतारूपेण विचारस्य प्राप्तौ हि स एव तात्पर्यप्रयोजकव्यापारो भवेत्; तत्प्राप्तिरेव न संभवति, तन्मूलभूतस्यार्थज्ञाने स्वाध्यायविनियोजकस्य वचनस्याभावात्; ननु वचनाभावेऽपि विनियोगाकाङ्क्षस्य स्वा-

T

ध्यायस्य अर्थज्ञानजननसामर्थ्यरूपलिङ्गादर्थज्ञाने तस्य विनियोगो लभ्यत इति चेत्, न, 'धन्यं यशस्यमायुष्यं पुण्यं स्वर्गापवर्गदम् । धारणं धर्मशास्त्रस्य वेदानां धारणं तथा' 'त्रिभिरनश्नन्पारायणैः पूतो भवति' इत्यादिवचनप्राप्तेन धारणपारायणादिविनियोगेन निराकाङ्क्षीकृतस्य स्वाध्यायस्य ततोऽन्यत्र लैङ्गिकविनियोगकल्पनाया अप्रवृत्तेः; न हि आधानसंस्कृतानामग्नीनाम् 'आहवनीये जुहोति' 'गार्हपत्ये हवींषि श्रपयति' 'दक्षिणाग्नावन्वाहार्यं पचति' इत्यादिवाचनिकविनियोगैः निराकाङ्क्षीकृतानामन्यत्रापि यत्र यत्र लौकिके वैदिके वा कार्ये सामर्थ्यमस्ति, तत्र सर्वत्रापि वस्तुसामर्थ्येन विनियोगकल्पना प्रवर्तते; न वा सादनप्रोक्षणादिसंस्कृतानां स्फ्यादीनां यज्ञायुधानाम् 'स्फ्येनोद्धन्ति' इत्यादिवाचनिकविनियोगनिराकाङ्क्षीकृतानाम् अन्यत्रापि यत्र यत्र यज्ञोपयुक्तकार्ये सामर्थ्यमस्ति, तत्र सर्वत्रापि तेन विनियोगकल्पना प्रवर्तते; तस्मात् विचारप्राप्तिरध्ययनविधेरर्थज्ञानफलकत्वमभ्युपगम्य तत्प्रसादायत्तैव सा समर्थनीया; ततश्च तात्पर्यप्रयोजकव्यापारोऽपि प्रथमोपस्थितं साक्षादर्थप्रतीत्युद्देश्यकम् अध्ययनमेवेति पर्यवस्यति– इति नाप्रयोजकं मदनुमानम्, त्वद-

T

नुमानं च प्रतिकूलतर्कपराहतमिति ॥

अथ दशमी कक्ष्या—

स्वाध्यायस्य धारणपारायणादिषु विनियोगेन आकाङ्क्षाशान्तावपि साङ्गाध्ययनवशात् फलवत्त्वेनापातप्रतीतानां कर्मणामनुष्ठानार्थमर्थनिर्णयाकाङ्क्षाणाम् अस्य वाक्यस्य अयमेवार्थ इति निर्णयरूपेऽर्थज्ञानेऽपि विनियोगो भवत्येव; क्रत्वपेक्षितार्थनिर्णये कारणाकाङ्क्षायां तत्कारणीभावयोग्यस्य अध्ययनसंस्कृतस्वाध्यायस्यापि तत्र विनियोगाकाङ्क्षोत्थापनसंभवात्; अस्ति हि उत्थापिताकाङ्क्षयापि विनियोगः — यथा ज्योतिष्टोमे सामवेदगतस्तोत्रप्रकरणाम्नातायाः 'अग्न आयाहि वीतये' इत्यादिकाया ऋचः स्तोत्रविनियोगेन निराकाङ्क्षाया अपि 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति यजुर्वेदविहितस्योपस्थानस्य करणभूताग्निदेवत्यर्गाकाङ्क्षोत्थापितया आकाङ्क्षया तत्रापि करणत्वेन विनियोगः। एवं च अर्थनिर्णयकरणतया विनियुक्तस्य अधीतस्वाध्यायस्य इतिकर्तव्यताकाङ्क्षया विचारः प्राप्नुवन् अर्थप्रतीत्युद्देश्यकव्यापारो भवेत् इति न तत्सिद्ध्यर्थम् अध्ययनस्य क्लिष्टमर्थज्ञानफलकत्वं कल्पनीयम्; अतः त्वदनुमानमप्रयोजकम्; मदनुमानं च न प्रतिकूलतर्कपराहतम् इति ॥

अथ एकादशी कक्ष्या—

क्रत्वपेक्षितार्थनिर्णयः कल्पसूत्रतदभिज्ञोपद्रष्टृवचनादिनापि संभवन् न नियमेन विचारमितिकर्तव्यतामपेक्षते ; न च तत्रापि कल्पसूत्राभ्यासादिकम् अर्थप्रतीत्युद्देश्यकव्यापारः स्यादिति वाच्यम्, तथा सति सिद्धान्ताभिमतविचारनियमासिद्धिप्रसङ्गात् ; न च अध्ययनस्य अर्थज्ञानफलकत्वपक्षेऽप्येष दोषः, तस्मिन्पक्षे यावदधीतार्थवत्स्वाध्यायार्थज्ञानसंपादनार्थं विचारस्यावश्यापेक्षितत्वेन तदनाक्षेपशङ्कानवकाशात् ; न हि क्रत्वनुष्ठानापेक्षिततत्तत्क्रतूपयुक्तवेदभागार्थज्ञानमिव यावदधीतस्वाध्यायार्थज्ञानमपि विचारमन्तरेण संभवतीति संभावयितुमपि शक्यते, एकरूपाणां वेदवाक्यानां न्यायतो भिन्नभिन्नार्थानाम् असमीकरणेन तत्तदर्थावधारणस्य तदुपपादकन्यायानुसंधानं विना संपादयितुमशक्यत्वात् ; तस्मात् वेदे तात्पर्यनियामकम् अर्थप्रतीत्युद्देश्यकव्यापारं विचारमभ्युपगच्छतापि विचारनियमसिद्ध्यर्थमध्ययनविधेरर्थज्ञानफलकत्वम् अभ्युपगन्तव्यमिति ॥

अथ द्वादशी कक्ष्या—

यथा अध्ययनविधेरर्थज्ञानफलकत्वपक्षे फलापवर्गिणी अध्ययनभावना यावदधीतस्वाध्यायार्थज्ञानपर्यन्तं व्याप्रियत

इति स्नानात् प्रागेव युगपत् सकलवेदार्थज्ञानसंपादनार्थं विचारमपेक्षते, तथा तस्य अक्षरावाप्तिफलकत्वपक्षेऽपि अध्ययनावाप्तानां वेदाक्षराणामर्थज्ञाने कर्मानुष्ठानाकाङ्क्षोत्थापिताकाङ्क्षया विनियोगे सति, दारपरिग्रहमारभ्य यावज्जीवं निरन्तरमनुष्ठेयेषु नित्यनैमित्तिकावश्यापेक्षितकाम्यकर्मसु विघ्नपरिहारार्थं तावदपेक्षितविधिमन्त्रार्थवादविभक्तसकलस्वाध्यायार्थज्ञानं स्नानात्प्राग्युगपदेव संपादनीयम्; अन्यथा कदाचित् कल्पसूत्रार्थपरामर्शोपद्रष्टृवचनाद्यमेलने तत्कालावश्यानुष्ठेयकर्मानुष्ठानविघ्नप्रसङ्गात्— इति युगपत् संपादनार्थम् अस्त्येव विचारापेक्षा; ततो विचारनियमासिद्ध्यभावात् विचार एवार्थप्रतीत्युद्देश्यकव्यापार इति ॥

अथ त्रयोदशी कक्ष्या—

एवमपि कृत्स्नस्वाध्यायार्थविषयो विचारनियमो न सिध्यति, कर्मकाण्ड इव ब्रह्मकाण्डे विचाराक्षेपकाभावात्; न च ब्रह्मोपासनरूपक्रत्वनुष्ठानं तदर्थनिर्णयापेक्षं ब्रह्मभागविचाराक्षेपकमस्तीति वाच्यम्, 'विकल्पो विशिष्टफलत्वात्' इति न्यायात् एकामेव ब्रह्मोपासनां यावज्जीवं चिकीर्षमाणस्य मुमुक्षोः तावन्मात्रोपयोगिवेदान्तवाक्यार्थनिर्णयस्य आप्तोपदेशतोऽपि लब्धुं शक्यत्वेन तदर्थगुरूपायरूपवि-

चाराक्षेपासंभवात्; न च सिद्धान्ते श्रवणविधिरस्ति, येन ततो वेदान्तविचारकर्तव्यता लभ्येत; 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति गुरूपसदनविधिस्तु स्वानुष्ठेयोपासनापेक्षितकतिपयवेदान्तवाक्यार्थोपदेष्टृगुरूपसदनविषयतयापि चरितार्थम्; तस्मात् विचारनियमसिद्ध्यर्थम् अध्ययनविधेः अर्थज्ञानफलकत्वमेवाङ्गीकरणीयमिति ॥

अथ चतुर्दशी कक्ष्या—

अध्ययनविधेरर्थज्ञानफलकत्वाभावेऽपि कृत्स्नस्वाध्यायविचारः सिध्यत्येव, एकामेवोपासनां चिकीर्षमाणेनापि पुरुषेण मन्त्रार्थवादादिप्रसिद्धमहामहिमशालिनां देवताविशेषाणां मध्ये विशिष्य इदमेव ब्रह्मेति निर्धार्य यावज्जीवम् अहरहरावर्तनीया ब्रह्मोपासना आरब्धव्या; तन्निर्धारणं तु यद्यपि अयमितिवत् इदं ब्रह्मेति शृङ्गग्राहिकया आप्ततमोपदेशेनापि कथंचित् लब्धुं शक्यम्, तथापि तल्लक्षणमुखेनैव संपादनीयम्; ब्रह्मसद्भावमात्रं संप्रतिपद्य तत् किं ब्रह्म इति इदंतया ज्ञानार्थम् 'अधीहि भगवो ब्रह्म' इति उपसन्नाय भृगवे 'यतो वा' इत्यादिलक्षणमुखेन तदुपदेशसामर्थ्यतः 'तद्विजिज्ञासस्व तद्ब्रह्म' इति वाक्यशेषतश्च लक्षणमुखेनैव ब्रह्म निर्धार्य उपासनीयमिति नियमोऽन्नयनात्, न हि शृङ्ग-

ग्राहिकया उपदेशस्यापि उपासनोपयोगिब्रह्मनिर्धारणोपायत्वे गुरूपाये लक्षणमुखेन ब्रह्मनिर्धारणे गुरुः शिष्यं प्रवर्तयेत्; लक्षणमुखेन ब्रह्मनिर्धारणं लिप्सुः असंभवातिव्याप्तिशङ्कानिरासेन लक्षणदृढीकरणार्थं सर्ववेदान्ततात्पर्यनिर्णायकविचारमपेक्षते; अत एव शास्त्रे 'जन्माद्यस्य यतः' इति लक्षणमुखेनैव ब्रह्म निरूप्य लक्षणविशिष्टब्रह्मणि प्रमाणप्रदर्शनपूर्वकं तदसंभवातिव्याप्तिशङ्कानिरासार्थः कृत्स्नवेदान्तविचारः कृतो दृश्यते; तस्मात् अध्ययनविधेः अक्षरावाप्तिफलकत्वेऽपि विचारनियमसिद्धेः स एवार्थप्रतीत्युद्देश्यकव्यापारः इत्युपपद्यत एवेति ॥

अथ पञ्चदशी कक्ष्या—

एवमपि सर्वेषां ब्रह्मोपासनानां विचारनियमो न सिध्यति, आनन्दमयब्रह्मोपासनाप्रकरणे लक्षणाम्नानसामर्थ्यात् तदुपासनार्थिन एव लक्षणमुखेन ब्रह्म निर्धारणनियमसिद्धेः; न हि उपासनास्वपि प्रकरणविशेषाम्नाता धर्माः सर्वासूपासनासु पारिप्लवा भवन्ति, तथा सति 'पूर्वोऽतिथिभ्योऽश्नीयात्' इत्यादिविधिविहितानामपि वैश्वानरविद्यादिप्रकरणाम्नातानां धर्माणां सर्वोपासनासाधारण्यप्रसङ्गात्; अतो विचारनियममिच्छता विचारमेव अर्थप्रतीत्युद्देश्यकव्यापार-

मभ्युपगच्छता च त्वयापि तन्निर्वाहार्थम् अर्थज्ञानफलकत्व-मभ्युपगन्तव्यमिति ॥

अथ षोडशी कक्ष्या—

श्रवणविधिमनङ्गीकुर्वतो भाष्यकारस्य मते सर्वमुमुक्षु-साधारण्येन विचारनियममनभ्युपगम्यापि उपासनानुष्ठानं समर्थयितुं शक्यत एव; ये स्वयं विचारसमर्थाः विचारमन्तरेण सर्वविधसंशयनिवृत्तिमलभमानतया स्वयं विचारमिह कुर्वन्ति, तेषां श्रवणमननप्रणाड्या उपासनारम्भः, अतथाभूतानां बहुकर्मानुष्ठानलब्धचित्तशुद्ध्यतिशयतया ब्रह्मापरोक्ष्यवति गुरौ अतिविश्वासवतां विनापि श्रवणमनने गुरूपदिष्टप्रकारेण उपासनारम्भ इति; न हि कर्मसु उपासनेषु वा सर्वाधिकारिसाधारण्येन विचारनियमः कर्तुं शक्यते, स्त्रीणां तदभावात्; एवं च प्राचीनशालादीनां वैश्वानरविद्यादिषु संभावितसंशयनिवृत्त्यर्थं विद्यानुष्ठानप्रकारमात्रोपदेष्टृगुरूपसर्पणादिलिङ्गमपि उपपद्यते; एवं च विचारहीनानाम् अर्थज्ञानार्थगुरूपसर्पणादिव्यापार एव अर्थप्रतीत्युद्देश्यकव्यापारो भविष्यति; यद्युच्येत—श्रवणविधिं प्रत्याख्यातवतापि श्रवणविध्यर्थमन्यथासिद्धं समर्थितवता भाष्यकारेण वेदाध्ययनवतां मुमुक्षूणां विचारनियमः स्वीकृत एव;

T

प्राचीनशालादीनां तु कृतश्रवणानामेव श्रवणकाले 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः' इति मन्त्रोक्तरीत्या विपर्यासेनार्थं निर्णीय उपासनासु प्रवृत्तानां परस्परवैमत्यदर्शनेन संजातसंदेहानां पुनर्गुरूपसर्पणमिति— लिङ्गमपि अन्यथा उपपद्यते; अत एव त्वया सर्वेषां वेदाधिकारिणां विचारनियममभ्युपगम्य विचार एवार्थप्रतीत्युद्देश्यकव्यापारत्वेन प्रतिज्ञात इति—— तथापि न दोषः, प्रकरणविशेषाम्नातस्यापि लक्षणस्य ब्रह्मेदंतानिर्धारणरूपदृष्टार्थताबलात् सर्वोपासनासाधारण्यस्योपपत्तेः; अत एव 'विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते' 'अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय' 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इत्यादिभिः उपासनविशेषप्रकरणविहितानामपि चित्तप्रसादचित्तैकाग्र्यरूपदृष्टप्रयोजनार्थानां विद्यासाधनसहकारिभस्मोद्धूलनशमदमादीनां सर्वोपासनासाधारण्यमभ्युपगम्यते; एवमध्ययनस्य अक्षरावाप्तिफलकत्वेऽपि अध्ययनवतां मुमुक्षूणां वेदान्तविचारनि-

यमः समर्थयितुं शक्यत एव; प्रत्युत तस्यार्थज्ञानफलकत्वपक्ष एव वेदान्तविचारो मुमुक्षूणामेवेति नियमः समर्थयितुं न शक्यते, फलापवर्गिण्या अध्ययनभावनया ज्ञानात्प्रागेव कर्मकाण्ड इव ब्रह्मकाण्डेऽपि अर्थज्ञानफलोपकारिविचाराक्षेपस्यानिवार्यत्वात्; एतेन साक्षात् परम्परया वा वेदार्थज्ञानार्थस्याङ्गाध्ययनस्य वेदाध्ययनकाल एव कृष्णपक्षेषु कर्तव्यस्य अनुष्ठानसादेश्यावगताध्ययनाङ्गत्वान्यथानुपपत्त्या अध्ययनस्यार्थज्ञानफलकत्वमभ्युपगन्तव्यमित्यपि शङ्का निरस्ता, 'षडङ्गो वेदोऽध्येयः' 'वेदाङ्गानि समस्तानि कृष्णपक्षेषु संपठेत्' इत्यादिवचनैः तेषां वेदाङ्गत्वस्यैव प्रतिपाद्यमानतया तेषामध्ययनावाप्तस्वाध्यायफलार्थज्ञानार्थत्वस्यैवावगमात्; तथात्वेऽपि वेदाध्ययनकाल एव अङ्गाध्ययनकर्तव्यताविधेः दारपरिग्रहप्रभृति निरन्तरसंतन्यमानकर्मानुष्ठानोपयोग्यर्थज्ञानेच्छासंपादकापातज्ञानजननार्थत्वेन अन्यथासिद्धेः अङ्गाध्ययनस्य वेदाध्ययनस्य च फलार्थत्वाभ्युपगमेऽपि साक्षात्परम्परासाधारण्येन तत्फलार्थत्वोपपत्तेः; अन्यथा क्रत्वनुष्ठानकालनिर्णायकस्य ज्योतिष्टोमशास्त्रस्य क्रत्वनुष्ठानार्थस्य कल्पसूत्रस्य च तदङ्गत्वाभावप्रसङ्गात्; एतेनैव अङ्गाध्ययनस्य अर्थज्ञानपर्यन्ततायाः कलञ्जत्वन्यायेन वे-

T

दाध्ययनमपि अर्थज्ञानपर्यन्तं स्यादित्यपि शङ्का निरस्ता, 'वेदाङ्गानि समस्तानि' इत्यादिवचनेषु अङ्गप्रातिपदिकानुसारेण द्वितीयाविभक्त्यवगतं प्राधान्यं परित्यज्य– वेदाङ्गैरर्थज्ञानं भावयेत्– इति तेषामर्थज्ञाने गुणभावोऽङ्गीकृतः, अन्यथा अध्ययनावाप्तवेदजन्यार्थज्ञानोपयोगित्वाभावेन वेदाङ्गत्वानिर्वाहात्; न चैवं स्वाध्यायविधिवाक्ये तव्यप्रत्ययावगतस्वाध्यायप्राधान्यं परित्यज्य अर्थज्ञानगुणभावाङ्गीकारे किंचित्कारणमस्ति; न च स्वाध्यायस्य गुणत्वानङ्गीकारे स्वशब्दार्थस्य कुलक्रमागतत्वरूपस्य स्वीयत्वस्य उद्देश्यविशेषणत्वापत्त्या ग्रहैकत्ववत् अविवक्षाप्रसङ्गेन स्वाध्यायाध्ययनविधेः सर्ववेदाध्ययनविषयत्वापत्तिः, सर्ववेदानामध्येतुमशक्यतया संकोचापेक्षासत्त्वेन उद्देश्यस्यापि विशेषणसहिष्णुत्वात्, 'यस्योभयं हविरार्तिमार्च्छेत्यैन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र आर्तिमात्रस्य निमित्ततया उद्देश्यत्वे प्रतिक्षणं यस्य कस्यचित् नाशसंभवेन नैमित्तिकस्याशक्यानुष्ठानता प्रसज्यत इति तत्परिहारार्थम् आर्तिमात्रं न निमित्तम्, किंतु हविरार्तिः निमित्तमिति हविर्विशेषणविवक्षाङ्गीकारात्; तस्मादर्थप्रतीत्युद्देश्यकव्यापारापेक्षणमात्रम् अध्ययनस्य अर्थज्ञानगुणत्वाङ्गीकारे हेतुर्वाच्यः;

स च विचारेणान्यथासिद्धिसमर्थनेन प्रत्याख्यात एव; वस्तुतस्तु शब्दानामर्थपरत्वम् अर्थप्रतीत्युद्देश्यकव्यापारं नापेक्षते, यतः लोकव्युत्पत्तिसिद्धं तदौत्सर्गिकम्; क्वचित्क्वचित् लौकिकवाक्ये वक्तृदोषादपवादेऽपि अपौरुषेये वेदे तदभावात् निरपवादमवतिष्ठते; तदौत्सर्गिकमर्थपरत्वसामान्यं वक्तृविवक्षिते विशेषे लोके पर्यवस्यति; वेदे वक्तुरभावात् न्यायलभ्यविशेषे पर्यवस्यति; तदनुसारेणैव च वेदे लक्षणा गौणी व्यवधारणम्— इति कल्प्यते; अत एव शब्दानामर्थपरत्वम् अर्थप्रतीत्युद्देश्यकोच्चारणाधीनमिति मन्वानेन भवदेवेनापि स्वाभिमतोक्तन्यायबलेनैव स्वाध्यायावाप्तिमात्रफलताप्रत्यायकतव्यप्रत्ययस्वारस्यमुल्लङ्घ्य स्वाध्यायाध्ययनेन यत् भावयितुं शक्यं तत्सर्वं तेन भावयेत् इति व्यवधारणकल्पना अङ्गीकृता; न हि अध्ययनविधेः उक्तार्थनिश्चयोऽयम् अर्थावबोधोद्देश्यकतदुच्चारणविध्यधीनः, तथाभूतविध्यन्तराभावात्, अस्यैव विधेरपेक्षायाम् आत्माश्रयापत्तेः; किंतु शब्दानामर्थपरत्वमौत्सर्गिकमित्येतदाश्रित्य तस्य स्वोक्तन्यायाधीने विशेषे पर्यवसानात् तन्निर्वाहार्थम् इदं व्यवधारणकल्पनमित्येव वक्तव्यम्; एवं च तथैव वेदवाक्यान्तराणामपि अर्थपरत्वसामान्यतद्विशेषपर्यवसानयोः नि-

T

र्वाहे संभवति, किं तन्निर्वाहार्थन्यायाभासावलम्बनया व्यवधारणकल्पनया; इतोऽप्ययं न्यायाभासः, यदि वेदवाक्यानामर्थप्रतीत्युद्देश्यकमुच्चारणं न स्यात्, तदा तेषामर्थपरत्वं न स्यात् इति तर्करूपः खलु अयं न्यायः; अयं च स्वप्रवृत्तेः प्रागेव आपाद्यविपर्ययस्य प्रमाणतः सिद्धिमपेक्षते, अन्यथा तर्कस्य अनिष्टप्रसञ्जकत्वाभावप्रसङ्गात्, तच्च प्रमाणमन्विष्यमाणम्— शब्दानामर्थपरत्वमौत्सर्गिकम्— इत्येतदेवावतिष्ठते; ततश्च तेनैवान्येषामपि वेदवाक्यानामर्थपरत्वसिद्धेः न तत्र नियामकान्तरमपेक्षणीयम्, नतरां तदपेक्षाधीनमध्ययनविधेर्व्यवधारणं कल्पनीयम्; तत्कल्पने च अध्ययनेन भावयितुं शक्यं चार्वाकापादितं ख्यातिलाभादिकमपि तत्फलं स्यात्; विध्यन्तरापेक्षितं यद्भावयितुं शक्यमिति विशेषणेऽपि अतिप्रसङ्गस्तदवस्थः, धनलाभस्य क्रतुविधिभिरपेक्षितत्वात् ख्यातेरपि धनलाभद्वारा क्रतूपयोगात्; तस्मात् अर्थप्रतीत्युद्देश्यकव्यापारापेक्षणीयन्यायः नाश्रयणीयः इति त्वदनुमानमप्रयोजकम्, मदनुमानं न प्रतिकूलतर्कपराहतम् इति अक्षरावाप्तिफलकमेव अध्ययनमिति सिद्धम् ॥

इति अध्ययनविधेरर्थज्ञानफलकत्वनिराकरणवादः ॥

---

T

# अध्ययनस्य स्वविधिप्रयुक्तत्व-समर्थनवादः ॥

---

एवम् अक्षरावाप्तिफलकत्वेन निर्णीतमध्ययनं न स्वविधिप्रयुक्तानुष्ठानम्, किं तु अध्यापनविधिप्रयुक्तानुष्ठानम् इति केचन मन्यन्ते; तेषामित्थं मतम्— अध्ययनविधिः न स्वविषयानुष्ठापकः, निर्नियोज्यत्वात्, प्रयाजादिविधिवत्; न च विश्वजिन्न्यायेन नियोज्यः कल्पनीयः, स्वर्गकामादिनियोज्यकैर्दर्शपूर्णमासादिविधिभिः प्रयाजादीनामिव आचार्यत्वकामिनियोज्येन अध्यापनविधिना अध्ययनस्य प्रयुक्तिसंभवे तत्कल्पनानपेक्षणात्; तथापि उपनयनपूर्वकाध्यापनात् आचार्यत्वं निष्पद्यते, 'उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः। सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते' इति स्मृत्या अचार्यत्वकामः शिष्यमुपनीय वेदमध्यापयेत् इति श्रुत्युन्नयनात्, तदनुसारेण 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इति श्रुतौ 'उपनयीत' इत्यत्र संमाननादिसूत्रविहितात्मनेपदबलात् उपनयने प्रतीयमानस्य आचार्यत्वहेतुत्वस्य

तन्निर्वाहकाध्यापनद्वारकत्वकल्पनौचित्याच्च; तदाचार्यत्वं यद्यपि आधाननिष्पाद्यमाहवनीयत्वादिकमिव अलौकिकातिशयरूपम्, तच्च न स्वतः पुरुषार्थः, तथापि 'आचार्याय वरो देयः' इत्यादिस्मरणात् दक्षिणादानादिहेतुत्वेन गौणपुरुषार्थो भवति; अतस्तत्कामोऽयमध्यापनविधौ नियोज्यः इति सनियोज्यकेन तेन विधिना अध्ययनं प्रयुज्यते— इति; तत्र करिष्यमाणपूर्वपक्षोपयोगिनमपेक्षितांशं परिगृह्य अध्ययनस्य स्वविधिप्रयुक्तत्वसमर्थनार्थं कथान्तरं प्रस्तूयते—

'स्वाध्यायोऽध्येतव्यः' इति विधिविहितं नियमाध्ययनम् अध्ययनविधिप्रयोज्यम्, विध्यन्तराप्रयोज्यत्वे सति विधिप्रयोज्यत्वात्— इति सैद्धान्तिकी प्रथमा कक्ष्या ॥

त्वदीयो हेतुर्विशेषणासिद्धः, अध्ययनानुष्ठानस्य अध्यापनविधिप्रयुक्तत्वात्; तस्मात् उक्ताध्ययनानुष्ठानं न अध्ययनविधिप्रयुक्तम्, अध्यापनविधिप्रयुक्तत्वात्, अध्यापनवत्— इति द्वितीया ॥

अथ तृतीया कक्ष्या—

न मदीयो हेतुर्विशेषणासिद्धः अध्ययनस्य अध्यापनविधिप्रयुक्तत्वायोगात्; न च अध्ययनं विना अध्यापनं न निर्वर्तते इति तस्य तत्प्रयुक्तत्वम्, लौकिकाध्ययनेनापि

तन्निर्वृत्त्या विहिताध्ययनस्य तत्प्रयुक्तत्वासिद्धेः; अत एव त्वदीयो हेतुरसिद्ध इति ॥

अथ चतुर्थी कक्ष्या—

उपनयनस्य अध्यापनाङ्गतया तस्य किंचित्काराकाङ्क्षायाम् उपनेयासत्तिरूपो दृष्ट एव किंचित्कार इति सिद्धौ, अध्यापनं प्रति अनुपयोगिन उपनेयस्यासत्तिः अध्यापनानुपकारिणी न तदङ्गकिंचित्कारो भवतीति, उपनेयस्याध्यापनापेक्षितव्यापाराकाङ्क्षायाम् उपनयनं प्रक्रम्य 'स्वाध्यायोऽध्येतव्यः' इति विधिविहितस्य नियमाध्ययनस्यैव तद्व्यापारतया अन्वयेन तस्य तत्प्रयुक्तत्वसिद्धेः त्वदीयो हेतुर्विशेषणासिद्धः, मदीयश्च नासिद्धः इति ॥

अथ पञ्चमी—

उपनयनस्य अध्यापनाङ्गत्वे स्यादेतदेवम्, न त्वेतदस्ति, तत्र प्रमाणाभावात् इति ॥

अथ षष्ठी—

उपनयनस्य अध्यापनाङ्गत्वे प्रमाणाभावोऽसिद्धः, तथा हि— 'उपनीय तु यः शिष्यम्' इति स्मृत्यनुमितश्रुतिवाक्यगतोपनयनाध्यापनयोः समानकर्तृकत्ववादिनी क्त्वाश्रुतिस्तावत् तत्र प्रमाणम्, समानकर्तृकत्वं हि प्रयोगैक्यं विना

-नोपपद्यते; यद्यपि प्रयोगैक्यं तयोः समप्राधान्ये वैपरीत्ये-नाङ्गाङ्गिभावे च संभवति, तथापि उपनयनमुपनेयासत्ति-मसंपाद्य तत्कर्तृकेणाध्ययनेन अध्यापनं निर्वर्तयितुं क्षममिति दृष्टद्वारसत्त्वात् उपनयनस्य अध्यापनाङ्गत्व एव क्त्वाश्रुतिः पर्यवस्यतीति; तथा 'तमध्यापयीत' इति तच्छब्दपरामृष्टो-पनीतस्य अध्यापनसंबन्धबोधनात् तच्छब्दश्रुतिरपि उपन-यनस्य अध्यापनाङ्गत्वे प्रमाणम्, 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्र 'सा' इति तच्छब्देन दध्यानयनसंस्कृतपयःपरामर्शिना दधिसंसर्ग-प्राप्तघनीभावपयोवाच्यामिक्षापदसामानाधिकरण्यलब्धस्त्री-लिङ्गेन दध्यानयनसंस्कृतस्य पयसो वैश्वदेवयागसंबन्धबो-धनात् पयःसंस्कारस्य दध्यानयनस्यापि वैश्वदेवयागाङ्गत्व-सिद्धिरभ्युपगम्यते; तथा 'उपनयीत' इति आत्मनेपद-श्रुतिरपि तत्र प्रमाणम्, सा हि अध्यापनफलस्य आचार्य-त्वस्य उपनयनान्वयं बोधयन्ती पूर्वोक्तरीत्या उपनयनस्य अध्यापनाङ्गत्वे पर्यवस्यति; तस्मात् अध्यापनविधिना स्वा-ङ्गमुपनयनं प्रयुञ्जानेन उपनीतव्यापाराध्ययनस्यापि प्रयु-क्तिरुपपद्यत इति त्वद्धेतुर्विशेषणासिद्धः, मद्धेतुश्च नासिद्ध इति ॥

अथ सप्तमी कक्ष्या—

क्त्वाश्रुतिस्तावत् उपनयनाध्यापनयोः अङ्गाङ्गिभावे न प्रमाणम्, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्रेव तस्य कर्तृत्वाधिष्ठानपुरुषैक्यमात्रावलम्बनत्वोपपत्तेः; 'तमध्यापयीत' इत्यत्र उपनीतपरामर्शितच्छब्दश्रुतिरपि न प्रमाणम्; तथाहि— दृध्यानयनरीत्या उपनयनस्य समभिव्याहृतक्रियान्वयमात्रं सिध्यति; समभिव्याहृता च क्रिया तत्र वैश्वदेवयागवत् इह अध्यापनक्रियैव न भवति, किंतु अध्ययनक्रियापि, णिजन्तधातुना प्रयोज्यप्रयोजकव्यापारद्वयोपस्थितेः; अतः उपनयनस्य प्रयोज्यव्यापारभूताध्ययनसंबन्धबोधनेनापि तच्छब्दश्रुतिः चरितार्था भवेदिति; तथा आत्मनेपदश्रुतिरपि तत्र न प्रमाणम्, तया हि आहत्य उपनयनस्य न अध्यापनाङ्गत्वं बोध्यते, 'संमाननोत्सर्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इति सूत्रेण उपनयनाध्यापनयोरङ्गाङ्गिभावे नयतेः आत्मनेपदविधानाभावात्; उपनयने अध्यापनफलाचार्यत्वसंबन्धबोधनं तस्याध्यापनाङ्गत्वं कल्पयेदिति चेत्, न, अध्ययनद्वारेण उपनयनोपकार्यस्य अध्यापनस्य फलम् उपकारके व्यपदिश्यते इति उपपत्तेः, आधानद्वारा अग्निहोत्रदर्शपूर्णमासादिसर्वकर्मो-

पकारिण्याम् आधानाङ्गपूर्णाहुतौ 'पूर्णाहुत्या सर्वान्कामानवाप्नोति' इति तदुपकार्यसर्वकर्मफलव्यपदेशदर्शनात्; एवमन्यथासिद्धात्मनेपदश्रुतिरपि तत्र न प्रमाणमिति ॥

अथाष्टमी कक्ष्या—

क्त्वाश्रुतिस्तावत् इहाङ्गाङ्गिभावे प्रमाणं भवत्येव, तदभावे कर्तृकारकभेदेन समानकर्तृकत्वानिर्वाहात्; दर्शपूर्णमासयोः सोमयागस्य च स्वातन्त्र्येण पृथक्फलसाधनतया वाक्यान्तरावगतत्वेन गत्यन्तराभावात् उदाहृतवाक्ये क्त्वाश्रुतिः कर्तृकारकाधिष्ठानैक्यमात्रावलम्बना कथंचिदुपपद्यते; इह तु तथा अनुपपत्त्यभावात् 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्रैव क्त्वाश्रुतेः अङ्गाङ्गिभावपर्यवसानं युक्तम्; तथा 'तमध्यापयीत' इत्यत्र तच्छब्दश्रुतिरपि तत्र प्रमाणं भवत्येव, क्रियाद्वयसमभिव्याहारेऽपि प्रधानक्रियान्वयस्य अभ्यर्हितत्वात्; तथा आत्मनेपदश्रुतिरपि, अङ्गप्रधानभावेन साक्षात्संबन्धिनोऽध्यापनस्य फलम् उपनयने निर्दिश्यते इति वक्तुं शक्ये परम्परासंबन्धकल्पनायोगात्, न हि आधानस्येव उपनयनस्य अन्याङ्गत्वमवधृतमिति ॥

अथ नवमी कक्ष्या—

उपनयनस्य अन्याङ्गत्वं नावधृतमिति असिद्धम्, तस्या-

T

न्याङ्गत्वावधारणात्; तथा हि 'वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्' इति द्वितीयाश्रुतिभिः उपनयनस्य उपनेयब्राह्मणाद्यर्थत्वमवगम्यते; तादर्थ्यं तस्य तदीयकार्याध्ययनाङ्गत्वे निर्वहति, न तु अन्यदीयकार्याध्यापनाङ्गत्वे; तथा उपनयनजन्याचार्यासत्तिरूपदृष्टसंस्कारस्य विनियोगाकाङ्क्षायामध्ययनस्य उपनेयगतत्वेन अन्तरङ्गत्वाच्च तादर्थ्यमेव युक्तम्, न तु अध्यापनाङ्गत्वम्; तस्य अन्यगतत्वेन बहिरङ्गत्वात्; तथा उपनयनजन्यादृष्टसंस्कारस्य उपनेयकार्यार्थत्वादपि तज्जन्याचार्यासत्तिरूपदृष्टसंस्कारस्य तदीयकार्याध्ययनार्थत्वं युक्तम्, अस्ति हि अदृष्टसंस्कारोऽपि उपनयनजन्यः उपनेयस्य सर्वकर्माधिकारार्थः तदपेक्षमेव स्मरणम्--उपनयनादिर्नियमः इति; तदपेक्षमेव च 'तस्मिन्स्तु शिष्यमाणानि जननेन प्रवर्तेरन्' इति षष्ठाध्यायाधिकरणम्; तत्र हि स्मृत्याचारप्राप्तानि कर्माणि जन्मप्रभृति कर्तव्यानि सन्ति सामर्थ्यानुसारेण प्रागप्युपनयनात् कर्तव्यानीति पूर्वपक्षं कृत्वा, उपनयनप्रभृत्येव कर्तव्यानि इति सिद्धान्तितम्, तथा बीजगर्भसमुद्भवदुरितनिर्हरणार्थश्चायमुपनयनजन्यः संस्कारः, 'गार्ह्यैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते । एवमेनः शमं

T

याति बीजगर्भसमुद्भवम्' इत्यादिस्मरणात्; इत्थमेनोनिर्हरणार्थत्वेन कर्मानधिकृतयोरपि मूकोन्मत्तयोः उपनयनावश्यंभावमभिप्रेत्यैव तयोरनुपनयनपक्षो मनुना केषांचित्पक्षत्वेन उपन्यस्तः— 'मूकोन्मत्तौ न संस्कार्याविति केचित्प्रचक्षते। कर्मस्वनधिकाराच्च पातित्यं नास्ति चैतयोः' इति; एवमुपनयनस्य अदृष्टसंस्कारद्वारा उपनेयार्थत्वस्य क्लृप्तत्वात् दृष्टसंस्करद्वारापि तादर्थ्यमेवाभ्युपगन्तुं न्याय्यम्; तथा 'सप्तमे ब्रह्मवर्चसकामम् अष्टमे आयुष्कामम्' इत्याद्युपनयनाश्रितवयोविशेषलक्षणगुणानामुपनेयार्थत्वात् तदाश्रयोपनयनस्यापि तादर्थ्यं वक्तव्यम्; 'तथा कामोऽर्थसंयोगात्' इत्यधिकरणे 'यदि कामयेत वर्षुकः पर्जन्यः स्यान्नीचैः सदो मिनुयात्' इति वाक्ये सदोमातुरध्वर्योः कामना न विवक्षिता, किं तु प्रधानफलाश्रयस्य यजमानस्यैव, प्रधानगुणफलयोः एकार्थत्वस्यौत्सर्गिकत्वात् इति सिद्धान्तितत्वात्; किं च उपनयनविधिना किमर्थमहमाचार्यसमीपं प्रापितः—इति उपनेयस्य कार्याकाङ्क्षया उपनयनविध्यनन्तरं कर्तृरहिततया विहितस्याध्ययनस्य कर्त्राकाङ्क्षया च उपनयनाध्ययनविध्योरेकवाक्यता भवतीति वाक्यप्रमाणमपि उपनयनस्याध्ययनाङ्गत्वे प्रमाणम्; तस्मादुपनयनस्याध्ययनाङ्गत्वेन बहु-

T

प्रमाणावधृतस्य अध्यापनाङ्गत्वाभावात् अध्ययनस्य विध्यन्तराप्रयोज्यत्वमुपपद्यत इति न मद्धेतुर्विशेषणासिद्धः, त्वद्धेतुश्चासिद्ध इति ॥

अथ दशमी कक्ष्या—

अस्तु उपनयनस्य यदाहृतप्रमाणैः अध्ययनाङ्गत्वम्, तथापि अध्ययनस्यैवाङ्गमिति अवधारणं न संभवति, मदुदाहृतप्रमाणैः अध्यापनाङ्गत्वस्याप्युपपत्तेः, न हि अल्पमपि प्रमाणम् अविरोधे बहुप्रमाणबाध्यं भवति; न च किंचिदङ्गभावस्य अन्याङ्गाभावेन विरोधोऽस्ति, प्रयाजादीनामाग्नेयाद्यनेकाङ्गत्वदर्शनात्; न च यस्य यत्प्रधानम्, तस्य तदेव प्रधानं द्वारीकृत्य तदन्याङ्गत्वमयुक्तमिति वाच्यम्, गीतिक्रियारूपसामसंस्कार्यत्वेन तत्प्रधानभूतामृचमेव द्वारीकृत्य साम्नो गुणिनिष्ठगुणाभिधानरूपस्तुतिसाधनत्वस्य 'साम्ना स्तुवीत' इति श्रुतिबोधितस्य संप्रतिपन्नत्वेन तथैव उपनयनस्याध्ययनाङ्गस्य अध्ययननिर्वर्तनद्वारा अध्यापनाङ्गत्वस्यापि उपपत्तेः; तस्मात् अध्ययनस्य अध्यापनविधिना स्वाङ्गभूतमुपनयनं प्रयुञ्जानेन प्रयुक्तिसंभवात् त्वद्धेतुर्विशेषणासिद्धः, मद्धेतुश्च नासिद्धः— इति ॥

अथैकादशी कक्ष्या—



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अध्ययनाङ्गस्य सतः उपनयनस्य अध्यापनेऽपि अङ्गत्वमापादयत् अनन्यथासिद्धमिह नास्ति प्रमाणम्; तथा हि— 'उपनीय तु यः शिष्यम्' इति स्मृतिः न अध्यापनमात्रेणाचार्यो भवति, किंतु उपनयनेनापि इत्येतावन्मात्रपरा— यथा 'न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्षते' इति स्मृतिः केवलं विद्यया तपसा वृत्तेन वा पात्रं न भवति, किंतु त्रिभिरित्येतत्परम्, प्रायपाठानुरोधात्; 'निषेकादीनि कर्माणि यः करोति यथाविधि। संभावयति चान्नेन स विप्रो गुरुरिष्यते' इत्ययम् 'तमाचार्यं प्रचक्षते' इत्येतदनन्तरश्लोको हि निषेकाद्यध्यापनान्तकर्मकरणेन पुत्राणां वृत्तिकल्पनेन च गुरुर्भवति, न तदेकदेशेन इत्येतदर्थो दृश्यते; 'स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति' इति तदर्थसंग्राहकस्मृत्यन्तरे च क्त्वाप्रत्ययोऽपि दृश्यते; न चैतावता निषेकादिचौलान्तकर्मकरणमपि तत्राध्यापनाङ्गमिष्यते; तस्मात् नेह कर्तृकारकैक्येऽभिनिवेष्टव्यम्; तदपि चात्र उपपादयितुं शक्यम् अध्यापनोपकारकाध्ययनान्वयमात्रेण, दृश्यते हि आग्नेययागेन सह समुच्चित्य फलसाधनतया तदुपकारकस्य अग्नीषोमीययागस्याङ्गानाम् आग्नेययागस्य

च कर्त्रैक्यम् एकप्रयोगान्तःपातित्वात्; 'तमध्यापयीत' इत्यत्र तच्छब्दपरामृष्टस्य उपनयनस्य प्रयोज्यव्यापारभूताध्ययनाङ्गत्वमेव, अतिकुशलेन तक्ष्णा रथं निर्मापयति— इत्यत्र प्रयोज्यविशेषणस्य तद्व्यापारे रथनिर्माण एव उपयोगदर्शनात्; 'उपनयीत' इत्यात्मनेपदश्रुतिस्तु उपनयनस्य अध्यापनकारकत्वमात्रेणापि उपपादयितुं शक्येति प्रसाधितं सप्तमकक्ष्यायाम्; न च साक्षात्संबन्धसंभवे अध्ययनाङ्गभावद्वारकपरम्परासंबन्धग्रहणं न युक्तमिति वाच्यम्, उपनयनमध्ययनाङ्गमिति बहुप्रमाणसिद्धत्वेन क्लृप्तसंबन्धविषयत्वे संभवति स्मृतेः कल्प्यसंबन्धान्तरालम्बनत्वाभ्युपगमायोगात्; उपनयनसंस्कारस्य अन्यत्र विनियोगादर्शनेन कैमर्थ्याकाङ्क्षायां हि अक्लृप्तोऽप्यध्यापनेन साक्षात्संबन्धः तदालम्बनं कल्प्येत; किंच आत्मनेपदश्रुतिः उपनयनस्य अध्ययनाङ्गत्व एव प्रमाणम्, संमाननादिसूत्रेणात्मनेपदविधानस्य अकर्त्रभिप्रायार्थत्वात्; कर्त्रभिप्राये क्रियाफले नयतेः आत्मनेपदस्य 'स्वरितञितः' इत्यादिसूत्रेण सिद्धत्वात्; ननु उपनयनं प्रत्याङ्गित्वेन उद्देश्यस्य अध्यापनस्य तत्फलस्याचार्यत्वस्य च कर्तृगतत्वेऽपि तस्याध्यापनाङ्गतायां द्वारभूतस्य उपनयनजन्यसंस्कारस्याकर्तृगतत्वात्

T

संमाननादिसूत्रेण आत्मनेपदम् इत्येतदुपपद्यत इति चेत्, न, उपनयनजन्याचार्यासत्तिरूपसंस्कारस्यापि त्वन्मते उपनयनकर्तृगतत्वात्; न हि तद्गतत्वं तत्समवेतत्वम्, किंतु तादर्थ्यम्, अन्यथा पशुपुत्रहिरण्यादीनां यजमानसमवेतत्वाभावेन 'चित्रया यजेत पशुकामः' इत्यादौ आत्मनेपदं न स्यात्; उपनयनकर्त्रर्थत्वं च माणवकसंस्कारस्य अध्ययननिर्वर्तनद्वारा तदीयाध्यापनार्थत्वात् अस्त्येव; किं च कर्त्रभिप्रायस्यापि क्रियाफलस्य सत्त्वे स्वरितादिसूत्रेणैव आत्मनेपदसिद्धेः संमाननादिसूत्राप्रवृत्तिशङ्का तदवस्थैव; अपि च अकर्तृगतमपि किंचित् क्रियाफलम् अस्तीत्येतावदवलम्बनापि संमाननादिसूत्रप्रवृत्तिरिह अशक्यशङ्का, शाब्दिकमर्यादाविरोधात्--शाब्दिकैर्हि यत्प्रधानं फलमुद्दिश्य क्रियारम्भः, तस्य कर्तृगतत्वाकर्तृगतत्वयोरेव पदव्यवस्थाप्रकरणविषयत्वमङ्गीकृतम्; उक्तं च हरिणा-- यजति याजकः पचति पाचकः—इत्यत्रात्मनेपदं स्यात्, तत्रापि दक्षिणादेः कर्तृगामित्वात्—इत्याशङ्कां निराकुर्वता 'यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः। तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम्' इति; न च ऋत्विगादिव्यापाराः दक्षिणालाभाद्यर्थमारभ्यन्ते इति शङ्का तदवस्थेति वाच्यम्, उपात्तयागपाकादिक्रियासंतत्य-

T

वच्छेदकप्रयोगप्रथमप्रवृत्तेरारम्भशब्दार्थत्वात्; सा च प्रथमप्रवृत्तिः स्वामिगता ऋतुपाकसंकल्पवरणपाचकप्रवर्तनादिरूपैवेति नातिप्रसङ्गः; तस्मात् 'उपनयीत' इत्यात्मनेपदश्रुतिः उपनयनस्य अध्ययनाङ्गत्व एव प्रमाणम् ॥

कैश्चिदिमां कौमारिलोक्तां युक्तिं विलिख्य, तत्र उपनयनमध्यापनाङ्गम् इति वदतामाक्षेपः तत्समाधानं चेति उभयं स्वबुद्धिकल्पितं किंचिल्लिखितम्, तत् प्रसङ्गादिह निराकर्तुं विलिख्यते—ननु क्रियाफलस्य कर्त्रेकगतत्वं कर्त्रभिप्रायत्वम्, तथा च उपनयनफलस्य कर्त्रकर्त्रुभयगतत्वेन तत्र स्वरितादिसूत्राप्रवृत्तेः तत्र आत्मनेपदार्थं संमाननादिसूत्रमिति चेत्, न, तथा विवक्षायाम् 'अग्नीनादधीत' इत्यत्र कर्त्रभिप्रायसूत्रेण आत्मनेपदाभावप्रसङ्गात्, आधानफलस्य अग्नियजमानोभयगतत्वात्; कर्त्रेकगतत्वोक्त्या कर्त्रतिरिक्तचेतनगतत्वव्यावृत्तिर्विवक्षितेति चेत्, न, तथापि 'ऋत्विजो वृणीते' इत्यत्र स्वरितादिसूत्रेणात्मनेपदाभावप्रसङ्गात्; अथ अव्यवहितक्रियाफलस्य कर्तृगतत्वं कर्त्रभिप्रायत्वं विवक्षितम्, ततश्च उपनयनाव्यवहितमाणवकसंस्कारस्याकर्तृगतत्वात् स्वरितादिसूत्राप्रवृत्तेः संमाननादिसूत्रमिति चेत्, न, एवमपि 'अग्नीनादधीत' इत्यत्र कर्त्रभिप्रायसूत्रेण आत्मनेपदा-

T

भावप्रसङ्गात्, आधानाव्यवहितफलस्य अग्निसंस्कारस्य कर्तृगतत्वाभावात् कर्तृगतस्याहिताग्नित्वस्य व्यवहितफलत्वात्; ननु आधानसंस्कृताग्निः कर्तुः फलमिति आधातुरव्यवहितफलान्वयोऽस्तीति चेत्, न, एवमुपनयनस्यापि तत्संस्कृतो माणवकः फलमिति उपनेतुरव्यवहितफलसत्त्वात् कर्त्रभिप्रायसूत्रेणैवात्मनेपदसिद्धेः संमाननादिसूत्रवैयर्थ्यतादवस्थ्यापातात्; तस्मात् असाधारणस्य क्रियाफलस्य कर्तृगतत्वं कर्त्रभिप्रायः इत्यस्यार्थः; एवं चाकर्त्रभिप्रायफलजनकक्रियायामसाधारणस्य फलस्याकर्तृगतत्वेऽपि साधारणफलान्तरलिप्सया कर्तुः प्रवृत्तिरुपपद्यते; असाधारणक्रियाफलस्य आचार्यत्वस्य कर्तृगतत्वात् तादर्थ्ये स्वरितादिसूत्रेणैव आत्मनेपदसिद्धेः संमाननादिसूत्रम् अकर्त्रभिप्रायफलार्थमिति उपनयनस्य अध्ययनाङ्गत्वमपि ततः सिध्यतीति— सर्वमिदम् अस्थानविजृम्भितम्; तथा हि— यत्तावत् शङ्कितम्— कर्तैकगतत्वं कर्त्रभिप्रायत्वं विवक्षितमिति, तत्र किं शाब्दिकमर्यादया यत् प्रधानफलमुद्दिश्य क्रियारम्भः, तदिह क्रियाफलं गृहीत्वा इयमधिकविवक्षाशङ्का, उत यथा कथंचित् क्रियाजन्यफलमात्रं क्रियाफलं गृहीत्वा, यदि आद्यः पक्षः, तदा न अनया अधिकविवक्षया प्रागुक्तदोषोद्धारो

T

लभ्यत इति व्यर्थैव एषा शङ्का भवेत्; उपनयनस्य अध्यापनाङ्गत्वपक्षे तस्य प्रधानं फलमाचार्यत्वमिति तत्फलस्य कर्त्रेकगतत्वात् । यदि शाब्दिकमर्यादामतिलङ्घ्य क्रियाफलस्य प्राधान्यमिह न विवक्षितम्, किंतु कर्त्रेकगतत्वमेव, तथा विवक्षायामपि यजन्ति याजकाः पचन्ति पाचकाः इत्यात्मनेपदं न भविष्यति, स्वामिगतस्वर्गभोजनादेरपि यागपाकफलत्वेन क्रियाफलस्य कर्त्रेकगतत्वाभावात् इति कल्पयित्वा द्वितीयः पक्षः समाश्रीयते, तदा यजते इति स्वामिविषयेऽपि आत्मनेपदं न स्यात्, आत्रेयदानर्त्विग्दक्षिणासदस्यदक्षिणादिविधिमूलकानाम् आत्रेयादिगतहिरण्यलाभादीनामपि यथाकथंचित् यागक्रियाफलभूतानां सत्त्वेन तत्रापि क्रियाफलस्य कर्त्रेकगतत्वाभावात्; क्रीणातिददात्योश्च आत्मनेपदं न स्यात् क्रयफलयोः क्रेयमूल्यद्रव्यलाभयोः दानफलयोः सुकृतदेयद्रव्यलाभयोश्च क्रयदानकर्त्रकर्त्रुभयगतत्वात्, विक्रयप्रतिग्रहफलयोः आदेयमूल्यद्रव्यलाभयोः क्रयदानसापेक्षत्वेन तत्फलत्वस्यापि सत्त्वात्; तस्मात् प्राधान्यविवक्षा अवश्यमाश्रयणीया इति न अनया अधिकविवक्षया प्रागुक्तदोषोद्धारो लभ्यते; यत्तु कर्त्रेकगतत्वविवक्षायां दूषणमुक्तम्— तथासति 'आदधीत' इत्यत्र कर्त्रभिप्रायसूत्रेण आ-

T

त्मनेपदं न स्यादिति, तदपि प्राधान्यविवक्षावश्यंभावसमर्थनेन निरस्तम्; कामश्रुतिप्रयुक्तस्याधानस्य आधानारम्भे प्रयोजकस्य 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादिवाक्येषु कामनाविषयत्वेन श्रुतस्य फलस्य कर्त्रेकगतत्वात्, आधानस्य स्वविधिप्रयुक्त्यङ्गीकारेऽपि अग्निसंस्कारस्य आधानकर्तृगतत्वाच्च; न हि तद्गतत्वं तत्समवेतत्वम्, किंतु तादर्थ्यमित्युक्तम्; अग्निसंस्कारस्य च यजमानगतत्वं निर्विवादम्; न च तस्य 'अग्नीनादधीत' इति द्वितीयाश्रुत्यवगतमग्न्यर्थत्वमपि अस्तीति वाच्यम्, द्वितीयाश्रुत्या हि संभारेषु मथिताग्निनिधानरूपाया आधानक्रियाया निधेयाग्न्यर्थत्वमवगतम्; न तु तज्जन्यसंस्कारस्य, तज्जन्यसंस्कारविशिष्टत्वेन आहवनीयादिशब्दवाच्यस्य 'आहवनीये जुहोति' इत्यदिवाक्यान्तरावगतभाव्युपयोगस्याग्नेः तद्विशिष्टरूपेण आधानं प्रत्युत्पाद्यकर्मत्वाङ्गीकारेण तस्यैव तदर्थत्वायोगात्; तस्मात् आधानक्रियाजन्यसंस्कारस्यापि तद्विशिष्टाग्नेरिव आहवनीयादिपदार्थानतिरेकात् आधातृमात्रार्थतैव, न तु आहवनीयाद्यर्थतापि इति नेयं कर्त्रेकगतत्वपक्षे दूषणभङ्गी युक्ता; एवं तु तत्र दूषणं वक्तव्यम्— तथा विवक्षायां चित्रादिवाक्येषु आत्मनेपदं न स्यात्, चित्रेष्टयादिफलानां पशुहिरण्या-

T

दीनां क्रयप्रतिग्रहादिभिः यजमानेन लभ्यानां विक्रयदानादिभिः तेन अन्यसात्कर्तुं शक्यानां यजमानार्थत्वसमयात्प्राक् पश्चाच्च अन्यार्थत्वस्यापि सत्त्वेन तस्मिन्नपि समये जन्मप्रभृति पितृधनस्वामिभूतपुत्राद्यर्थत्वस्यापि सत्त्वेन तेषां कर्त्रेकगतत्वाभावात्; पचिधातोः स्वामिविषयेऽपि आत्मनेपदं न स्यात्, पचिक्रियाफलस्य अन्नस्य अन्ततो भिक्षुमक्षिकाद्यकर्तृसाधारणस्यावर्जनीयत्वात् इति; यत्तु 'आदधीत' इत्यत्र स्वरितादिसूत्राप्रवृत्तिप्रसङ्गदूषणपरिहारार्थं कर्त्रेकगतत्वम् इत्यनेन कर्त्रतिरिक्तचेतनगतत्वानिषेधो विवक्षित इत्युक्तम्, तदपि अज्ञानविलसितम्, आधानजन्यसंस्काराणाम् आहवनीयाद्यभिमानिदेवतागतत्वात्; अन्यथा आधानकाले आहितस्य आहवनीयादेरचेतनस्याग्नेः आधानप्रयोगसमाप्त्यनन्तरं परित्यागेन तद्गतस्य संस्कारस्य तन्नाशान्नाशोऽवश्यंभावीति आहवनीयाद्यनुवृत्त्यभावप्रसङ्गात्; अजस्रपक्षेऽपि आहवनीयादिशब्दानामनेकार्थत्वापत्तेः; पशौ प्रणयनविशेषसंस्कृतस्याहवनीयस्य औत्तरवेदिकप्रणयनानन्तरं गार्हपत्यतापत्त्या तस्याहवनीयशब्दप्रवृत्तिनिमित्तत्वायोगाच्च; तस्मात् आहवनीयाद्यभिमानिदेवता एव तत्तदायतनविशेषनिहितेषु संभारेषु मथिताग्निनिधानरूपेण आधानेन संस्क्रियन्ते; देवताश्च संस्कृता

T

अजस्रपक्षे यजमानशरीरे अग्निदानपर्यन्तं मध्ये अग्निसंस्कारविच्छेदनिमित्तोपजनने तत्पर्यन्तं च तेष्वग्निषु संनिदधते; अग्नीनामजस्रधारणाभावे तत्तत्कर्मावसानेषु आहवनीयादिदेवता: गार्हपत्यमनुप्रविशन्ति; पशौ च औत्तरवेदिके प्रणयने क्रियमाणे तमाहवनीयोऽनुप्रविशति, तेन प्रागधिष्ठितमग्निं गार्हपत्य: इत्यादिक्रमभ्युपगन्तुं युक्तम्; एवं सत्येव 'नान्तराग्नि संचरति यदि पूर्वोऽनुगत: संचर्य पश्चाहिस्ताहिं गत:' इति 'गार्हपत्याज्ज्वलन्तमाहवनीयमुद्धरति' इति च कल्पसूत्रकारवचनं सामञ्जस्यमश्नुते, न हि संस्कारमात्रस्य पश्चाद्गमनं संभवति, नापि आहवनीयस्य गार्हपत्यानुप्रवेशाभावे गार्हपत्यात् तत्र असत: आहवनीयस्योद्धरणं संभवति; यत्तु कर्त्रैकचेतनगतत्वपक्षे 'ऋत्विजो वृणीते' इत्यत्र आत्मनेपदं न स्यात् इति दूषणमुक्तम्, तत् अतिस्थवीय:, 'वृङ् संभक्तौ' इति श्नाविकरणपठितस्य ङित: खलु वृणीते इति रूपम्, न तु श्नुविकरणपठितस्य ञित: 'वृञ् वरणे' इति धातो:; अत: अत्र स्वरितादिसूत्राप्रवृत्तिप्रसञ्जनम् इष्टप्रसञ्जनमेव, 'अनुदात्तञित आत्मनेपदम्' इति सूत्रविषयत्वात्; तस्मात् इहापि पूर्ववत् यजते पचते इति स्वामिविषयेऽपि आत्मनेपदं न स्यादिति दूषणं वाच्यम्; यत्तु

T

अव्यवहितक्रियाफलस्य कर्तृगतत्वं विवक्षितमिति पक्षान्तरमाशङ्कितम्, तत् कथमाशङ्कनीयत्वेन परहृदयमारूढमिति न जानीमः; यो हि प्रागाशङ्कितं पक्षद्वयम् 'आदधीत' इत्यत्र आत्मनेपदं न स्यात्, 'वृणीते' इत्यत्रात्मनेपदं न स्यादिति एकैकेन दूषणेनादूदुषत्, तस्य कथं तद्दूषणद्वयमपि अत्र जागर्ति– इत्यभिमन्तुमर्हस्य 'आदधीत' इत्यत्रात्मनेपदं न स्यादित्येव असुं पक्षं दूषयिष्यतश्च अयं पक्षः शङ्कनीयत्वेन हृदयमारोहेत्; किंच स्वरितादिसूत्रे कर्त्रभिप्रायविशेषणस्य यजन्ति याजकाः पचन्ति पाचकाः इति प्रसिद्धं प्रत्युदाहरणम्—यत्र यजन्ति इत्यत्र कर्तृगामि फलं दक्षिणालाभरूपं क्रतुप्रयोगमध्य एव भवत् न कदापि व्यवहितफलं भवति, किंतु अकर्तृगामिस्वर्गादिकमेव व्यवहितफलम्, पचन्ति इत्यत्र कर्तृगामि फलं भूतिलाभरूपम् अव्यवस्थया प्राङ्मध्ये पश्चाद्वा भवत् नियमेन व्यवहितं न भवति; अतः सौत्रविशेषणस्य व्यावर्तनीयत्वाभिमतव्यावर्तनाक्षमतापादकं विशेषणान्तरं विवक्षितमिति अशङ्कनीयत्वेन कथं मन्दस्यापि हृदयमारोहेत्; तस्मात् नेयं पक्षान्तराशङ्कोद्भावनशैली पण्डितानां हृदयंगमा; यत्तु अस्मिन्पक्षे 'आदधीत' इत्यत्र आत्मनेपदं न स्यात्,

तदव्यवहितफलस्य अग्निसंस्कारस्य अकर्तृगतत्वादिति दूषणमुक्तम्, तदपि तुच्छम्, तस्यापि पशुहिरण्यादिरीत्या कर्तृगतत्वसमर्थनात्; किं च अग्निसंस्कारस्य कर्तृगामिफलापेक्षया पूर्वभावित्वमपि असिद्धम्, कर्तृगतं हि फलम् आहिताग्नित्वमिति पराभिमतम्, तत् यद्यपि सर्वक्रत्वधिकारार्थत्वात् दानविशेषेषु पात्रतापादकत्वाच्च कर्तुरिष्यमाणं फलं भवितुमर्हति, तथापि न तत्पूर्वभाव्यग्निसंस्कारः, स खलु साङ्गस्य कृत्स्नस्याधानप्रयोगस्य समाप्त्यनन्तरं जायते, न तु संभारेषु अग्निनिधानानन्तरमेव, उदीच्याङ्गवैयर्थ्यापत्तेः आहिताग्नित्वमपि साङ्गाधानप्रयोगसमाप्त्यनन्तरमेव जायते, न तत्र कश्चिद्विशेषोऽस्ति; अपि च यस्मिन् आधानप्रयोगसमाप्त्यनन्तरक्षणे अग्निसंस्कारो जायते, तस्मिन्नेव कर्तृसमवेताधानक्रियाफलरूपमपूर्वमपि जायते; न च आधानस्य अग्निसंस्कारमात्रार्थत्वात् अपूर्वजनकत्वं नास्तीति शङ्कनीयम्, अनाहिताग्नित्वस्य उपपातकेषु परिगणनेन अग्न्याधेयस्य चत्वारिंशत्पुरुषसंस्कारमध्ये परिगणनेन च तस्य पुरुषार्थताया अपि सत्त्वेन तज्जन्यापूर्वस्य अवश्याभ्युपगन्तव्यत्वात्; गुरुणापि विवरणटीकायाम् अग्न्यर्थस्याधानस्य नियोगविषयत्वमप्यस्ति इत्युक्तत्वाच्च; न च

T

आधानसंस्कारस्य साङ्गप्रधानानन्तरभावित्वेऽपि संभारेष्व-ग्निनिधानरूपप्रधानानन्तरमेव अग्नौ स्वायतनप्राप्तिरूपातिशयो जायत इति वाच्यम्, तदानीमेव कर्तरि अपूर्वजननेनाविशेषात्; यत्तु अग्निसंस्कारस्य व्यवहितफलस्य कर्तृगतत्वाभावेऽपि आधानसंस्कृतोऽग्निः अव्यवहितं कर्तृगामि फलमस्तीति शङ्कितम्, तन् संस्कारात् संस्कृतस्य केन विशेषेण कर्तृगामित्वमस्तीति शङ्कितम् इति न विद्मः; कर्तृगतत्वं कर्तृसमवेतत्वं चेत् संस्कृतस्यापि असिद्धम्, कर्त्रर्थत्वं चेत् संकारस्यापि अविशिष्टम्; यत्तु दूषणमुक्तम्– एवमुपनयनस्यापि तत्संस्कृतो माणवकः फलं स्यात्—इत्यादि, तदपि उक्तरीत्यैव निरस्तम्, कर्तृगतत्वं कर्तृसमवेतत्वम् इत्यभ्युपगमे माणवकस्य फलत्वायोगात्, कर्त्रर्थत्वम् इत्यभ्युपगमे उपनयनस्य फलत्वासंभवेऽपि उपनीतस्याव्यवहितफलत्वं संभवतीत्युक्त्ययोगात्; यत्तु स्वयं कर्त्रभिप्रायसूत्रार्थनिर्धारणं कृतम्— असाधारणक्रियाफलस्य कर्तृगतत्वं कर्त्रभिप्रायसूत्रार्थः इति; तदपि तुच्छम्, यदि तस्या एव क्रियाया यत्फलं न क्रियान्तरापेक्षम्, तदसाधारणमिति विवक्षितम्, तदा 'नवसप्तदशेनातिरात्रेण प्रजाकामो यजेत' इति आत्मनेपदं न स्यात्, प्रजोत्पादनार्थं लौकिकक्रियाया अपि अपेक्षणात्; यदि यदे-

कमात्रगतम्, तदसाधारणम् इति विवक्षितम्, तदा चित्रादिवाक्येषु आत्मनेपदं न स्यात्, पश्वादिफलानां पुत्रादिसाधारण्यात्; तस्मात् शाब्दिकमर्यादानुसारेण प्रधानस्य क्रियाफलस्य कर्त्रर्थत्वमेव कर्त्रभिप्रायसूत्रार्थः इत्यस्मदुन्नीत एवात्र आक्षेपसमाधानप्रकारो द्रष्टव्यः; तस्मात् उपनयनस्य अध्यापनाङ्गत्वाभावात् तत्प्रयुक्तिमूलं विहिताध्ययनस्य अध्यापनविधिप्रयुक्तत्वं न भवति इति न मद्धेतुर्विशेषणासिद्धः, त्वद्धेतुश्च असिद्ध इति ॥

अथ द्वादशी कक्ष्या—

उपनयनस्य अध्यापनाङ्गत्वे मदुपन्यस्तानि प्रमाणानि अध्ययनाङ्गत्वविषयतया अन्यथासिद्धान्युपपादयता त्वया विहिताध्ययनस्य अध्यापनविधिप्रयुक्तत्वमेव उपपादितमिति त्वयैव त्वद्धेतोर्विशेषणासिद्धिः मद्धेतोरसिद्ध्युद्धारश्च इत्युभयमपि कृतम्; तथा हि—अध्ययनाङ्गस्योपनयनस्य अध्यापनस्य च कर्तृत्वाधिष्ठातृपुरुषैक्यं कर्त्रैक्यं वा वाक्यार्थ इति यत्पक्षद्वयमुक्तम्, तत्र अध्ययननिर्वर्त्यस्याध्यापनस्य अध्यापयितृपुरुषकर्तृकोपनयनसाध्यत्वेन उपस्थितं यद्विहिताध्ययनं तन्निर्वर्तकत्वेनान्वयं न भजते, वृत्तेः प्रसक्तेः; 'तमध्यापयीत' इत्यत्र तक्षकौशलन्यायेन उपनयनस्य प्रयोज्या-

T

त्वयं वदता त्वया उपनयनाङ्गकं विहितमध्ययनम् अध्यापनविधिप्रयोज्यम् इति स्पष्टमेवोक्तम्; तथा अध्ययनाङ्गे उपनयने श्रुतस्य आचार्यत्वस्य तदङ्गकविहिताध्ययनद्वारा अध्यापनसंबन्धेन आत्मनेपदश्रुतिमुपपादयतापि त्वया विहिताध्ययनस्य अध्यापनविधिप्रयुक्तत्वं स्पष्टमेवाङ्गीकृतम्; अत उपनयनस्य अध्यापनाङ्गत्वनिराकरणेन मम न काचित्क्षतिः, तत्प्रसाधनीयस्य प्रधानार्थस्य अध्ययनाङ्गत्वं व्यवस्थापयता त्वयैव प्रसाधितत्वात्— इति ॥

अथ त्रयोदशी––

उपनयनस्याध्यापनाङ्गत्वे त्वदुपन्यस्तानि प्रमाणानि मया तस्य विहिताध्ययनाङ्गत्वविषयतया न नीतानि, किंतु अध्ययनसामान्यद्वारकत्वमात्रविषयतया; अध्ययनसामान्यद्वारकत्वं च लौकिकाध्ययननिवेशनेनाप्युपपद्यते; विहिताध्ययनस्यैव उपनयनेन संबन्धः क्लृप्त इति चेत्, न, लौकिकाध्ययनस्यापि तत्संबन्धस्य क्लृप्तत्वात्; न हि लौकिकमध्ययनम् आचार्यसमीपप्राप्तिं विना कर्तुं शक्यम्; न वा क्त्वाश्रुत्यादिकं विहिताध्ययननिवेशनमन्तरेण नोपपद्यते; अथापि कथंचित् विहिताध्ययनं द्वारत्वेन निवेश्यत इति प्रत्याशा क्रियेत, यदि विरोधो न स्यात्, अस्ति तु नित्या-

T

नित्यसंयोगविरोधः— अध्ययनं हि नित्यम्, तदङ्गस्य उपनयनस्य नित्यत्वात्, 'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः' इति स्मरणात् 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः' इति अध्ययनाभावे दोषस्मरणाच्च; अध्यापनविधिस्तु काम्य इत्यङ्गीक्रियते; एवं च यत्र ग्रामे जनपदे वा धनवत्त्वादिहेतुभिः आचार्यत्वकामो न स्यात्, सन्वा कश्चित् उपनीय अध्यापयितुं प्रवृत्तः प्रव्रजनादिहेतुभिः निवृत्ताध्यापनसंबन्धः स्यात्, तदा तद्ग्रामजनपदवासिनामपि अध्ययनस्य तेनाचार्येण उपनीतानाम् एकदेशमध्यापितानाम् एकदेशान्तराध्ययनस्य च कथं निवृत्तिः स्यात्; अपि च अध्ययनं यावद्वेदसमाप्ति आचार्याधीनेन स्मृत्युक्तशिश्रूषादिनियमैः तदुपासनापरेण च सता यथा तदुच्चारणं स्वरवर्णादिभ्रंशराहित्येन कर्तव्यमतिक्लेशसाध्यम्; अस्मिन्कथमन्यपुरुषगाम्याचार्यत्वसिद्ध्यर्थमन्यः प्रवर्तेत, कथं च तस्मै दक्षिणां दद्यात्; यद्युच्येत अध्यापयितैव स्वस्याचार्यत्वसिद्ध्यर्थम् अध्ययनेन माणवकस्य अर्थज्ञानादिफलं प्रदर्श्य तं प्रवर्तयेदिति, तथा सति तस्य स्वाधिकार एव प्रवर्तकः स्यात्, न अध्यापनविधिः; न च

.T

अध्यापकेन स्वस्याध्यापनफलसिद्ध्यर्थं माणवकः तदधिकारप्रदर्शनेन अध्ययने प्रवर्तत इति एतावता तस्य अध्यापनविधिप्रयुक्तत्वसिद्धिः, द्रव्यार्जनप्रवृत्तैर्याजकैः निषादः स्वाधिकारं प्रदर्श्य स्थपतीष्टौ प्रवर्तत इति स्थपतीष्टेरपि द्रव्यार्जनविधिप्रयुक्तत्वप्रसङ्गात्; अपि च द्रव्यार्जनोपायत्वेन प्रतिग्रहादिवत् प्राप्ते अध्यापने विध्यसंभवादेव अध्यापनविधिप्रयुक्तमध्ययनमिति निरर्थकं वचः; न च आचार्यत्वार्थत्वेन विधिः शङ्कनीयः, तस्य अपुरुषार्थत्वात्; न च पूजादक्षिणादानादिहेतुत्वेन तस्य पुरुषार्थता, मातृपितृमातुलपितृव्यादीनां यौनसंबन्धेनेव आचार्यस्य मौखसंबन्धेन पूज्यत्वोपपत्तौ तदर्थमाचार्यत्वनामकालौकिकातिशयकल्पनायोगात्; न हि तत्र अन्यत्प्रमाणमस्ति, न च 'तमाचार्यं प्रचक्षते' इति स्मृतिः तत्र प्रमाणम्, तस्य 'आचार्याधीनो भव' इत्यादिश्रुतिस्मृतिदृष्टाचार्यशब्दार्थकथनमात्रपरत्वोपपत्तेः; दृश्यते हि 'ब्राह्मणं पात्रेन च परीक्षेत' इत्यादिश्रुतिस्मृतिदृष्टपात्रशब्दार्थनिर्णयार्था 'न विद्यया केवलया' इत्यादिस्मृतिः; न च आचार्यकरणविशिष्टे नयत्यर्थे आत्मनेपदविधायिनी व्याकरणस्मृतिः तत्र प्रमाणम्, आचार्यकरणं हि आचार्यस्य क्रिया उपनयनाङ्गभूताचार्यानुष्ठेयवैदिककर्मरूपा,

तद्विशिष्टे समीपप्रापणे आत्मनेपदम्, न तु समीपप्रापणरूपधात्वर्थमात्रे इत्येतदर्थत्वात् तस्याः स्मृतेः; तस्मात् अध्ययनस्य विध्यन्तरप्रयोज्यत्वायोगात् न मद्धेतुर्विशेषणासिद्धः, त्वद्धेतुश्चासिद्धः इति स्वविधिप्रयुक्तमेवाध्ययनमिति सिद्धम्॥

इति अध्ययनस्य स्वविधिप्रयुक्तत्व-
समर्थनवादः ॥ २१ ॥



T

# भस्मोद्धूलनत्रिपुण्ड्रयोः सकलब्रह्म-विद्याङ्गत्वसमर्थनवादः ॥

———*———

यथा उपनयनम् अध्ययनविध्येकवाक्यतापन्नविधिविहितत्वेन अध्ययनाङ्गं सत् अधिकारापादकत्वेन सर्वकर्मार्थमपि, एवं भस्मोद्धूलनं पाशुपतविद्याप्रकरणाम्नानेन तदङ्गं सत् चित्तशुद्ध्यापादकत्वेन सकलब्रह्मविद्याङ्गमपि— इति समर्थनाय कथान्तरं प्रस्तूयते—

विष्णुभागवता मन्यन्ते— 'अग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत् व्रतमेतत् पाशुपतं पशुपाशविमोक्षाय' इति अथर्वशिरसि पाशुपतविद्याप्रकरणे समाम्नातं भस्मोद्धूलनं प्रकरणवशात् तन्मात्राङ्गम्, न तु सकलब्रह्मविद्याङ्गम्, न हि 'पूर्वोऽतिथिभ्योऽश्नीयात्' इति वैश्वानरविद्याप्रकरणे समाम्नातम् अतिथिप्राग्भोजनं सकलब्रह्मविद्याङ्गम्— इति; सैद्धान्तिकी मर्यादा तु सकलब्रह्मविद्यापेक्षितचित्तशुद्धिरूपपापक्षयोपकारजनकं भस्मोद्धूलनं सकलब्रह्मविद्याङ्गम्, तस्य हि जाबालश्रुतौ—'पापं नाशयते कृत्स्नमपि

T

जन्मशतार्जितम्' इत्यादिना पापक्षयोपकारहेतुत्वमवधृतमिति ॥

तत्रेयं सैद्धान्तिकी प्रथमा कक्ष्या— 'अग्निः' इत्यादिमन्त्रविधेयं भस्मोद्धूलनं सकलब्रह्मविद्याङ्गम्, विद्याङ्गत्वे सति सकलब्रह्मविद्यापेक्षितोपकारजनकत्वात्, शमदमादिवत्। 'मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा। भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः' इति शातातपस्मृतौ प्रायश्चित्तप्रकरणे स्वतन्त्रप्रायश्चित्ततया विहिते रुद्रजपे तदङ्गे भस्मोद्धूलनादौ च विद्यापेक्षितोपकारजनके व्यभिचारवारणार्थं विद्याङ्गत्वे सतीति विशेषणम्; अतिथिप्राग्भोजनादौ व्यभिचारवारणार्थं विशेष्यम्; न च उदाहृतजाबालश्रुतेः स्वतन्त्रभस्मोद्धूलनविषयत्वसंभवात् विशेषणासिद्धिरिति शङ्कनीयम्; 'अग्निरिति भस्म वायुरिति भस्म' इत्यादिभस्मोद्धूलनमन्त्राणामथर्वशिरस्याम्नातानां जाबालश्रुतौ भस्मोद्धूलनार्थतया समाम्नानेन पाशुपतविद्याङ्गस्यैव भस्मोद्धूलनस्य पापक्षयद्वारकत्वं जाबालश्रुतावुच्यत इति मन्त्रप्रत्यभिज्ञया अवगम्यमानत्वात् — इति ॥

अथ द्वितीया कक्ष्या—

T

प्रकरणनियन्त्रितं भस्मोद्धूलनं प्रकृतिविकृतिभावादिकमन्तरेण अपेक्षामात्रात् न पारिप्लवं भवितुमर्हति; न हि सा उपदेशातिदेशप्रमाणेषु अन्तर्भवति; न च पाशुपतविद्या सकलविद्याप्रकृतिरिति वक्तुं शक्यम्, तस्यां विद्याङ्गविद्यासहकारिकर्मगतिचिन्तनादीनामनाम्नानात्; कृत्स्नविधानेन हि प्रकृतिर्भवति; न चेह प्रमाणान्तरं वास्ति; तस्मात् अप्रयोजकं त्वदनुमानमिति— भस्मोद्धूलनं न सकलब्रह्मविद्याङ्गम्, विद्याविशेषप्रकरणनियन्त्रितत्वात्, अतिथिप्राग्भोजनवत्— इति ॥

अथ तृतीया—

यदुक्तम् अपेक्षा न उपदेशातिदेशप्रमाणेषु अन्तर्भवति, न चेह प्रमाणान्तरमस्तीति, तदयुक्तम्, अपेक्षायास्तु सामर्थ्यपर्यालोचनामूलतया लिङ्गेऽन्तर्भावात्; तयैव खलु अवहननस्य यवादिसाधारण्यम्; अन्यथा व्रीह्युद्देशेन विहितस्य तस्य कुतो यवसाधारण्यं स्यात्; तयैव च विद्याविशेषप्रकरणाम्नातानां यज्ञदानतपःप्रभृतीनां शमदमादीनामर्चिरादिगतिपर्वणाम् अन्येषां चैतादृशानां सकलब्रह्मविद्यासाधारण्यम्। तस्मात् अपेक्षासामर्थ्यं तावत् इहैकं प्रमाणं भवत्येव । तथा— 'व्रतमेतत्पाशुपतं पशुपाशविमोक्षाय' इति श्रुति-

T

रपि तत्र प्रमाणम्; तत्र हि विमोक्षशब्देन विमुक्ति-साधनं विद्यामात्रमुच्यते; यथा 'एतावदरे खल्वमृतत्वम्' इत्यत्र अमृतत्वशब्देन अमृतत्वसाधनमुच्यते; न हि विद्यैकसाध्यायां विमुक्तौ भस्मोद्धूलनस्य साक्षात्साधनत्वं संभवति। तथा 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति मुण्डकवाक्यमपि तत्र प्रमाणम्— तत्र हि शिरोव्रतशब्देन अथर्वशिरस्युक्तं पाशुपतव्रतं प्रत्यभिज्ञाप्यते। तस्मात् नाप्रयोजकं मदनुमानम्। त्वदनुमाने प्रकरणनियन्त्रितत्वम्— किं प्रकरणाम्नानमात्रम्, उत प्रकरणिविद्याविशेषमात्रवशीकृतत्वम्? आद्ये हेतुरप्रयोजकः, आधानप्रकरणाम्नातानां यज्ञपात्राणाम् 'वारणो यज्ञावचरः वैकंकतो यज्ञावचरः' इति वाक्यवशेन यज्ञाङ्गत्ववत् श्रुतिलिङ्गवाक्यैः भस्मोद्धूलनस्य सकलविद्याङ्गत्वोपपत्तेः, विद्याङ्गविद्यासहकारिकर्मशमदमादिषु व्यभिचारी च; द्वितीये हेतुरासिद्धः, प्रकरणात् बलवद्भिः श्रुतिलिङ्गवाक्यैः सर्वविद्याङ्गत्वापादनात्— इति॥

अथ चतुर्थी कक्ष्या—

एकत्र निबन्धनम् अन्यत्रापि अपेक्षामात्रेण पारिप्लवं भवति चेत्— चोदकप्रमाणविचार एव व्यर्थः स्यात्;

अतः न तन्मात्रं प्रमाणम्, न च अवहननस्य अपेक्षामात्रात् यवसाधारण्यम्; किंतु द्वितीयाश्रुत्यवगतम् व्रीहीणामवहननसाध्यत्वं प्राक्सिद्धव्रीहित्वाकारेण न संभवतीति तत्साध्यतावच्छेदकत्वेन अपूर्वीयत्वं लक्षणीयम्; किंच अवहननवाक्ये व्रीहिपदस्य लौकिकापूर्वीयसाधारण्येन व्रीहिमात्रपरत्वे भूतभाविविनियोगरहितेषु लौकिकव्रीहिषु अवहननस्यार्थकर्मत्वम्, अपूर्वीयव्रीहिषु विनियुक्तसंस्कारतया गुणकर्मत्वमिति विधिवैरूप्यापत्तिः; लौकिकव्रीहिमात्रपरत्वे द्वितीयाश्रुत्यवगतद्रव्यप्राधान्यभङ्गापत्तिरिति, तत्परिहारार्थत्वेनापि अपूर्वीयत्वं लक्षणीयम्, तत्र व्रीहित्वस्यापि विवक्षायां विशिष्टानुवाददोषः स्यादिति प्रवृत्तिनिमित्तैक्यात् यवसाधारण्यम्; यज्ञादीनां शमादीनां च 'विविदिषन्ति यज्ञेन' इत्यादौ तृतीयाश्रुत्या 'समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्' इत्यत्र क्त्वाश्रुत्या च सकलविद्यासाधारण्यम्; तत्र हि 'विविदिषन्ति' इति 'पश्येत्' इति च विद्यामात्रमुपात्तम्; अर्चिरादिगतीनां सकलविद्यासाधारण्यमपि 'तद्य इत्थं विदुः ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' इत्यादिवाक्येन; श्रुतिवाक्ये च प्रकरणात् बलीयसी; तस्मात् अपेक्षामात्रेण न क्वापि विनियोगः;

T

'पशुपाशविमोक्षाय' इत्यत्र विमोक्षशब्दो न श्रुत्या सर्वसाधारणः, तस्य मुक्तिवाचित्वात्; द्वारत्वेन विद्या निवेश्यते चेत्, प्रकरणाविरोधेन प्रकृता पाशुपतविद्यैव तथा निवेशयितुमुचिता; 'तेषामेवैताम्' इति वाक्यं शिरसि अङ्गारधारणरूपमुण्डकाध्ययनाङ्गभूतव्रतमाचष्टे; न तु अथर्वशिरसि उक्तं पाशुपतव्रतम्, तत्र आथर्वणिकानां शिरोव्रतशब्दप्रसिद्धेः; तस्मात् अप्रयोजकं त्वदनुमानम्; मद्धेतोः द्वितीय एवार्थः, श्रुतिलिङ्गवाक्यविरोधाभावेन भस्मोद्धूलनस्य प्रकरणिविद्याविशेषवशीकृतत्वोपपत्तेः— इति ॥

अथ पञ्चमी—

अपेक्षासामर्थ्यं तावत् प्रमाणं भवत्येव, तद्वशादेवाकृत्स्नविधानानाम् अन्यतो धर्मग्रहणम्; तदपेक्षामूलमेव च चोदकवाक्यकल्पनम्; प्रकृतिविशेषव्यवस्थार्थस्तु आष्टमिको विशेषातिदेशविचारः; निरपेक्षस्यापि अन्यदीयधर्मग्रहणे, सोमस्यापि ऐष्टिकधर्मग्रहणं प्रसज्येत; अवहननस्य यवसाधारण्यमपि अपेक्षयैव, न अपूर्वीयत्वलक्षणया, लक्षणाहेत्वोः त्वदुपन्यस्तयोः अयुक्तत्वात्; तथा हि— आद्यो हेतुस्तावत् अयुक्तः, साध्यतावच्छेदकानुपस्थितावपि स्वर्गज्योतिष्टोमयोरिव व्रीह्यवहननयोः शब्देन साध्यसाधनभावबोधसंभवात्;

T

द्वितीयोऽप्ययुक्तः, अवहननवाक्यजन्यशाब्दबोधस्य व्रीहित्व-प्रकारकत्वेऽपि द्वितीयाश्रुतिनिर्दिष्टव्रीहिगुणतया विधीयमान-मवहननं भूतभाव्युपयोगरहितलौकिकव्रीहिविषयं भवितुं न योग्यमिति विधेयसामर्थ्यात् शाब्दबोधानन्तरम् अपूर्वीय-व्रीहीणां विषयत्वावगतिसंभवात्; 'यस्योभावग्नी अनुगतौ अभिनिम्रोचेदभ्युदियाद्वा पुनराधेयं तस्य प्रायश्चित्तिः' इत्यत्र हविरार्त्यधिकरणन्यायेन अग्न्युभयत्वस्याविवक्षायाम् अग्न्यनुगममात्रस्य शाब्दबोधवेलायां निमित्तत्वावगतावपि निमित्ते विधीयमानमाधानं सहितयोरेवाग्न्योरुत्पादनक्षमम्, न तु एकैकस्याग्नेरिति विधेयसामर्थ्यात् उभयाग्न्यनुगमस्यैव निमित्तत्वपर्यवसानाङ्गीकारात्; 'तप्ते पयसि दध्यानयति' इत्यत्र शाब्दबोधस्य पयस्त्वमात्रप्रकारकत्वेऽपि 'सा वैश्वदे-व्यामिक्षा' इति तदनन्तरवाक्ये तस्य पयसो यागान्वय-विधाने सति तत्सामर्थ्यात् शाब्दबोधानन्तरं तदपूर्वसंब-न्धिनः पयसो विषयत्वावगतिरिति अवश्यवक्तव्यत्वाच्च; य-ज्ञादीनां शमादीनां च साधारण्यं न श्रुत्या, 'तमेतं वेदानु-वचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाश-केन' इति श्रुतौ— तमेतं विविदिषन्ति— इति 'तस्मादेवं-विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्ये-

T

वात्मानं पश्येत्' इति श्रुतौ च— एवंवित् पश्येत्— इति च प्रकृतविद्याविशेषसंबन्धबोधनात्; किं तु अपेक्षयैव; अर्चिरादिगतेरपि अपेक्षयैव सर्वसाधारण्ये सिद्धे 'ये चेमेऽरण्ये' इति वाक्यं पञ्चाग्निविद्यायाम् अर्चिरादिगतिसद्भावे दृष्टान्तार्थम्—जीवगतागतविषया न ब्रह्मविद्या इति दिव्यस्थानप्राप्तिफलाभावेन तस्या देवयानगत्यभावप्रसक्तौ तत्सद्भावविधानार्थम् 'तद्य इत्थं विदुः' इति वचने प्रवर्तनीये तत्र दृष्टान्तार्थे दीपकालंकारेण ब्रह्मविद्या अपि सहोपात्ताः; 'पशुपाशविमोक्षाय' इत्यत्र विमोक्षशब्दः श्रुत्यैव सर्वविद्यासाधारणः, तस्य भावार्थप्रत्ययान्ततया मुक्ताविव— करणार्थप्रत्ययान्ततया विद्यायामपि शक्तिसद्भावात्; 'शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इति वाक्यम् अथर्वशिरोवर्णितपाशुपतव्रतविषयमेव, सौरपुराणादिषु तथा व्याख्यातत्वात्, उपब्रह्मणानुसारेण श्रुत्यर्थस्य ग्राह्यत्वात्; अध्यापकप्रसिद्धितः पुराणप्रसिद्धेः बलवत्त्वात्; तस्मात् नाप्रयोजकं मदनुमानम्; त्वदनुमाने च हेत्वसिद्धिः— इति ॥

अथ षष्ठी—

अपेक्षासामर्थ्यं चोदककल्पनयैव अन्यत्र अन्यधर्मप्रापकम्, न तु साक्षात्, इष्टिपशुसोमादिषु तथा दर्शनात्;

T

न चेह पाशुपतविद्या विद्यान्तराणां प्रकृतिरिति वक्तुं शक्यम्, कृत्स्नविधानत्वाविशेषेण वैपरीत्यस्यापि वक्तुं शक्यत्वात्; अत एवावहननस्य यवसाधारण्यं न अपेक्षामात्रेण, तथा सति चोदककल्पनावश्यंभावेन यवानां व्रीहिविकारत्वापत्त्या 'व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रस्य यवपुरोडाशेषु ऊहप्रसङ्गात्; अतः अवहननस्य यवसाधारण्यमिच्छता तद्वाक्यगतस्य व्रीहिपदस्य अपूर्वीयत्वलक्षणैव उपासनीया; तथा सति कार्यतावच्छेदकप्रतीत्या कार्यकारणभावबोधनम् अपूर्वविनियुक्तत्वप्रतीत्या विनियुक्तसंस्कारबोधनं च निराकाङ्क्षं पर्यवस्यति; उपपादकसापेक्षार्थप्रतिपादकत्वकल्पनं हि अनन्यगतिकम्; 'तेषामेव' इति श्रुतै प्रकृतवाचिनि 'एताम्' इति पदे सत्यपि सकलब्रह्मविद्यासाधारण्यमभ्युपगच्छतः तव मते तथैव यज्ञादीनां शमादीनां च तत् संभवतीति तेषां श्रुत्या सर्वसाधारण्याभावोक्तिरपि अयुक्ता; 'ये चेमेऽरण्ये' इति वाक्यम् अर्चिरादिगतेः सर्वासु ब्रह्मविद्यासु प्राप्त्यर्थमेव, न तु अपेक्षावशात् प्राप्तस्य अन्यत्र दृष्टान्तीकरणार्थम्, तस्याश्चोदककल्पनामन्तरेण न अन्यत्र अन्यदीयधर्मप्रापकत्वम् इत्युक्तत्वात्; अत एव सूत्रकारैः 'अनियमः सर्वेषाम्' इत्यधिकरणे अर्चिरादिगतेः सर्वविद्यासाधारण्ये

T

'ये चेमेऽरण्ये' इति शब्द एव स्वतन्त्रप्रमाणतया उपन्यस्तः; 'पशुपाशविमोक्षाय' इत्यत्र विमोक्षशब्दो विमुक्तिवाची इत्येव युक्तम्, तादर्थ्यचतुर्थ्या मुख्यपुरुषार्थत्वस्य औत्सर्गिकत्वात्; 'शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्यत्र अध्यापकप्रसिद्धम् अध्ययनाङ्गं शिरसि अङ्गारधारणमेव ग्राह्यम्, 'स्वाध्यायस्य तथात्वेन' इति सूत्रे तथा व्याख्याततत्वेन न्यायनिर्णायकसूत्रानुगृहीततया अर्थवादप्रायपुराणप्रसिद्धितो बलवत्त्वात्; तस्मात् त्वदनुमानमप्रयोजकम्; मदनुमाने च न हेत्वसिद्धिरिति ॥

अथ सप्तमी—

अपेक्षासामर्थ्यस्य अन्यत्र अन्यदीयधर्मप्रापकत्वं चोदककल्पनयैवेति न नियमः; 'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति विहितस्य आग्नीध्रोपस्थानस्य आग्नेयर्गपेक्षायाः साक्षादेव 'अग्न आयाहि वीतये' इत्यादिस्तोत्राङ्गभूताग्नेयर्क्प्रापकत्वाभ्युपगमात्; 'त्रिणवेनौजस्कामम्' त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इत्यादिविधिविहितेषु विवृद्धस्तोमकेषु क्रतुषु यत्र आगमेन संख्यापूरणं कार्यं तत्र अन्यत्र निबद्धानामृचाम् अपेक्षासामर्थ्यादेव आगमस्य अभ्युपगतत्वाच्च; अतोऽवहननस्य अपेक्षयैव यवसाधारण्यमुपपद्यते इति तदर्थं न

T

अपूर्वीयत्वलक्षणा वाच्या; नापि कार्यतावच्छेदकविनियुक्तत्वप्रतीत्यर्थम्, श्रुतोपपत्त्यर्थमुपपादकान्वेषणस्यैव सर्वत्र दृष्टत्वेन तदर्थं श्रुतपदलक्षणायाः क्वचिदपि अभावात्; अपूर्वीयत्वलक्षणायाम् अवहननस्य जुह्वादिष्वपि प्रसक्तौ तेषामवहननानपेक्षां यवानां तदपेक्षां च आलोच्य तण्डुलद्वारकत्वस्य शाब्दबोधानन्तरं निवेशनीयतया लक्षणापक्षेऽपि अपेक्षासामर्थ्यगवेषणावश्यंभावाच्च; एतेन व्रीहिधर्माणामपेक्षयैव यवेषु प्राप्तौ यवानां व्रीहिविकारत्वापत्तिरिति शङ्कापि दूरनिरस्ता, अवहननादिवाक्यजन्यव्रीहित्वप्रकारकशाब्दबोधानन्तरं द्वितीयाश्रुतिनिर्दिष्टव्रीहिप्राधान्यनिर्वाहाय तण्डुलद्वारा दर्शपूर्णमासापूर्वोपयोगिनां व्रीहीणामवहननादिसंस्कार्यत्वम् इत्यवगतिकाले व्रीहिशास्त्रसमकालप्रवृत्तिकेन 'यवैर्यजेत' इति शास्त्रेणावगतयागीयपुरोडाशसाधनभावानां यवानामपि वितुषीभावव्यपेक्षामालोच्य संस्कारवाक्यश्रुतमपि व्रीहित्वं प्रयोजककोटौ न निविष्टम्, किंतु उक्तरूपापूर्वोपयोगित्वमात्रम् इत्यवगत्युदयेन तद्वशादवहननादिसंस्काराणां यवसाधारण्यप्राप्त्या यवानां व्रीहिविकारत्वाप्रसङ्गात्; जुह्वादिव्यावर्तकस्य तण्डुलद्वारकत्वस्य विशिष्टानुवाददोषापत्त्या लक्षणीयकोटावनिवेशितस्य निवेश-

T

नार्थं शाब्दबोधानन्तरं तत्परिष्कारकबोधान्तरोदयस्य अवश्याभ्युपगन्तव्यत्वात्; यज्ञादीनां शमादीनां च सर्वविद्यासाधारण्यम् अपेक्षयैव, न श्रुत्या, तत्र विद्याविषयश्रुतेः प्रकृतविद्याविषयपरामर्शिश्रुत्या नियन्त्रितत्वात्; 'तेषामेवैताम्' इति श्रुतिरपि उक्तन्यायेन शब्दप्रवृत्त्या प्रकृतविद्यामात्रविषया; हेतुवशात्तु अर्थतः सकलविद्यासाधारणी; तथा हि— 'तेषामेवैताम्' इत्यत्र विद्याशब्दस्य 'ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति उपक्रान्ताक्षरविद्यारूपब्रह्मविद्याविषयत्वम् 'एताम्' इति प्रकृतपरामर्शेनैव सिध्यति; अतस्तत्र ब्रह्मविशेषणमधिकं हेतुसूचनार्थम्— यस्मादेषा विद्या ब्रह्मविद्या, तस्मात् चीर्णशिरोव्रतायैव देया; न तु अचीर्णशिरोव्रताय इति; हेतुसाधारण्ये च हेतुमति सर्वत्र विधेयमर्थात् सिध्यति; अत एव आतिथ्येष्टिप्रकरणे 'चतुरुपभृति गृह्णाति' इति चतुर्ग्रहणाम्नानस्य प्रकरण्यातिथ्यमात्रविषयत्वेऽपि 'न ह्यत्रानूयाजाः' इति हेतुसाधारण्यात् यत्र यत्र इष्टौ अनूयाजानामभावः, तत्र सर्वत्राप्युपभृति चतुर्गृहीतमेव, नाष्टगृहीतम् इति सिद्धिरिष्यते; 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते'

इत्यत्र तु अन्नसाधनत्वहेतुबलात् यद्यदन्नसाधनम् तेन सर्वेणापि होतव्यम् इति व्याप्त्याक्षेपे दर्वीपिठरादीनामपि अन्नकरणत्वेन होमसाधनत्वप्राप्तौ श्रुतस्य शूर्पस्य अश्रुतैर्दर्वीपिठरादिभिः विषमशिष्टविकल्पः स्यादिति तत्परिहाराय व्याप्त्यनाक्षेपात् हेतुवन्निगदमात्रम्, न तु हेतुरित्यभ्युपगम्यते; 'ब्रह्मविद्याम्' इत्यत्र तु 'न ह्यत्रानूयाजा इज्यन्ते' इत्यत्रेव व्याप्त्याक्षेपे बाधकाभावात् सद्धेतुरिति तेन सर्वविद्यासाधारण्यमापतत् न निवारयितुं शक्यम्; न च इह यज्ञादिवाक्ये शमादिवाक्ये च सर्वविद्यासाधारण्यापादकं हेतुश्रवणमस्तीति अपेक्षासामर्थ्यादेव सर्वविद्यासाधारण्यमभ्युपेयम्; तथा 'आनन्दादयः प्रधानस्य' इत्यधिकरणे निर्णीतम् —— विद्याविशेषश्रुतानामानन्दादिगुणानाम्, 'अक्षरधियाम्' इत्यधिकरणे निर्णीतं स्थूलत्वादिनिषेधानां च सर्वविद्यासाधारण्यम् अपेक्षासामर्थ्यादेव उपपादनीयम्; एवं सर्वविद्यानामुपासनारूपत्वमपि, विदेः उपासिना सह प्रयोगस्य संवर्गविद्यादौ क्वचिदेव दर्शनेन तावन्मात्रमवलम्ब्य विद्यान्तरेषु केवलविदिश्रवणस्य उपासनार्थत्वकल्पनायोगात्; न च साक्षात्काररूपफलानुसारेण आवृत्तिसिद्धिः, साक्षात्काररूपफलश्रवणस्यापि असार्वत्रिकत्वात्, 'ततस्तु तं पश्यते निष्क-

लं ध्यायमानः' इत्यादौ कचित्कचिदेव तस्य श्रवणात्; एवम्— अपेक्षासामर्थ्यस्य विद्यान्तरसाधारण्यकल्पकत्वस्य व्यवस्थितौ अर्चिरादिगतेरपि तत एव सिध्यतीति 'ये चेमेऽरण्ये' इति वाक्यं दृष्टान्तार्थमेव, 'अनियमः सर्वेषाम्' इत्यधिकरणे दृष्टान्तीकरणार्थम् अपेक्षासामर्थ्यसिद्धार्थानुवादकमेव 'ये चेमेऽरण्ये' इति वाक्यं शब्दपदमाचष्टे, न तु स्वतन्त्रप्रमाणभूतम्; यद्वा तदधिकरणम् अर्चिरादिगतेः सकलब्रह्मविद्यासाधारण्यनिर्णयार्थं न भवति, अपेक्षासामर्थ्यादेव तत्सिद्धेः; अपेक्षासामर्थ्यस्य 'आनन्दादयः प्रधानस्य' इत्यादिषु बहुष्वधिकरणेषु क्षुण्णत्वात्; न च अर्चिरादिगतेः सर्वविद्यासाधारण्ये पञ्चाग्निविद्यायामुपकोसलविद्यायां द्विर्द्विः पाठः व्यर्थः स्यात् इत्यधिकाशङ्कानिराकरणार्थं तदधिकरणमिति वाच्यम्, पञ्चाग्निविद्याया अब्रह्मविद्यात्वेन तस्याः धूमादिमार्ग एवेति शङ्कामपनेतुं तस्यामर्चिरादिमार्गप्रतिपत्त्यर्थम् 'ये चेमेऽरण्ये' इति ब्रह्मविद्यादृष्टान्तोपन्यासेन तत्स्थिरीकरणार्थम् 'वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तनाः' इति पृष्टदेवयानपितृयाणव्यावर्तकप्रतिपादनार्थं च अर्चिरादिगतिवर्णनम्, उपकोसलविद्यायाम् 'अथ यदुचैवास्मिञ्छव्यं कुर्वन्ति यदुच न अर्चिषमेवाभिसं-

भवन्ति' इति उपकोसलविद्योपासकस्य दहनादिशवकर्माभावेऽपि गार्हपत्यादीनामग्नीनाम् उपकोसलविद्याङ्गविद्याभिः उपासितानामनुग्रहात् अविलम्बेनार्चिर्लोकप्राप्तिरस्ति, न तु विद्यान्तरोपासकानामिव दहनादिशवकर्मवैगुण्ये अर्चिर्लोकप्राप्तौ कियान्विलम्बोऽस्ति— इति विशेषप्रतिपादनार्थम् 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' इत्यर्चिरादिमार्गेण परं ब्रह्म प्राप्तानाम् अनावृत्तिप्रतिपादनार्थं च तत्संकीर्तनमिति द्विःपाठावैयर्थ्यस्य स्पष्टत्वात्, तस्मात् तदधिकरणम् अर्चिरादिगतेः सकलसगुणविद्यासाधारण्यप्रतिपादनार्थं न भवति, किं तु कस्यांचिद्विद्यायां तदभावप्रतिपादनार्थम्; निर्गुणविद्या हि देशान्तरप्राप्तिफलकसगुणविद्यावत् गत्यपेक्षा न भवति, 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इति श्रुतेः; भाष्यकारैरपि एतत्सूत्रम् 'केचिदाहुः' इत्यादिना द्वितीयव्याख्यानप्रदर्शनेन तथैव योजितम्; तस्मात् अपेक्षासामर्थ्यादेव अर्चिरादिगतेः सर्वविद्यासाधारण्यम्; अवश्यं च तस्यामपि अपेक्षासामर्थ्यमुपासनीयम्; पर्यङ्कविद्याम्नातेन्द्रवरुणप्रजापतिलोकादिपर्वोपसंहारार्थम्; 'पशुपाशविमोक्षाय' इत्यत्र विमोक्षशब्दो विमुक्तिकारणवाचीत्येव युक्तम्, विद्यैकसाध्याया विमुक्तेः भस्मोद्धूलनक्रि-

याफलत्वायोगात्, फलत्वयोग्ये मुख्यार्थान्तरे विद्यमाने तदयोग्यमर्थान्तरं गृहीत्वा कथंचित् प्रयोज्यप्रयोजकभावमात्रावलम्बः फलत्वव्यपदेश इति तन्निर्वहणायोगात्। 'शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्यत्र शिरोव्रतमथर्वशिरःप्रसिद्धं पाशुपतव्रतमेव, सौरसंहितादिषु तथैव उपब्रह्मणात्; तथा हि— स्कान्दे सौरसंहितायां पठ्यते— 'इदं शिरोव्रतं चीर्णं विधिवद्यैर्द्विजातिभिः। तेषामेव परां विद्यां वदेदज्ञानबाधिकाम्। शिरोव्रतमिदं नाम शिरस्याथर्वणश्रुतेः। यदुक्तं तद्धि वान्यत्तत्पाशुपतसंहिताम्। शाखाभेदेषु नामानि तस्यास्य प्रविभेदतः। पठ्यते मुनिशार्दूल शाखास्वेकं वृतं हि तत्। अग्निरित्यादिभिर्मन्त्रैः षड्भिः शुद्धेन भस्मना। सर्वाङ्गोद्धूलनं कुर्याच्छिरोव्रतसमाह्वयम्' इति; ब्रह्मोत्तरखण्डेऽपि—अयमित्याश्रमो धर्मो यैः समाचरितस्तथा। तेषामेव परं ज्ञानं संसारच्छेदकारणम्। उद्धूलनं त्रिपुण्ड्रं च मायापाशनिवृत्तये। आमनन्ति मुनिश्रेष्ठा अथर्वशिरसि स्थितम्। अतोऽपि पापविच्छेदलाभाय ज्ञानसिद्धये। उद्धूलनं त्रिपुण्ड्रं च मुमुक्षुः सर्वदाचरेत्— इति। कथं तर्हि 'स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च' इति सूत्रम्? तस्य हि अयमर्थः:— स्वाध्यायस्य तथात्वेन स्वा-

T

ध्यायं प्रत्यङ्गत्वेन शिरसि अङ्गारधारणरूपस्य शिरोव्रतस्य विधिः, न तु विद्यां प्रत्यङ्गत्वेन, ततः समाचारे अधिकारात् आथर्वणिकानां वेदव्रतोपदेशार्थे समाचाराख्ये ग्रन्थे तथाप्रतिपादनात्, 'नैतदचीर्णव्रतोऽधीते' इत्यग्रिमवाक्ये मुण्डकाध्ययनाङ्गत्वस्य स्पष्टमुक्तत्वाच्च इति । एवं च अत्र ब्रह्मविद्याशब्दस्य ब्रह्मविद्याप्रतिपादकमुण्डकोपनिषद्वाचित्वप्रदर्शनात् 'स ब्रह्मविद्याम्' इति उपनिषदुपक्रमगतोऽपि ब्रह्मविद्याशब्दः तदर्थ इत्युक्तं भवति; युक्तं चैतत्— 'स ब्रह्मविद्याम्' इत्युपक्रमानन्तरम् 'द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च तत्रापरा यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणन्यायमीमांसाधर्मशास्त्राणीति । अथ परा यया तदक्षरमधिगम्यते' इति विद्याशब्दस्य विद्यास्थानेषु प्रयुक्तत्वात्; उच्यते— उदाहृतं सौरसंहितादिवचनजातं विधानार्थं प्रवृत्तं नार्थवादत्वशङ्कास्पदम्, तत् सूत्रादपि प्रबलम्, वेदोपब्रह्मणार्थत्वात् वेदार्थनिर्णये सूत्राणामपि उपजीव्यत्वाच्च । अत एव 'स्मर्यते च' इत्यादीनि सूत्राणि । अतः 'स्वाध्यायस्य' इति सूत्रं कृत्वाचिन्तारूपेण नेतव्यम्— यद्यत्र शिरोव्रतपदम् आथर्वणिकसमा-

त्रानुष्ठेयं शिरसि अङ्गारधारणमेव आचक्षीत, तदापि न दोषः, तस्मिन्पक्षे समाचारग्रन्थानुसारेणैव तस्य मुण्डकाध्ययनाङ्गत्वस्यैव प्राप्तेः, तस्य विद्याङ्गत्वाप्रसक्तेः इति। सन्ति हि एतादृशान्यपि सिद्धान्तानभिमतमर्थं कृत्वाचिन्तारूपेण सिद्धान्ततया प्रदर्शयन्ति; यथा तावत् जैमिनीयसूत्रम्— 'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात्' इति। इदं हि सूत्रम्— ज्योतिष्टोमप्रकरणाम्नातेन 'दीक्षितो न ददाति न जुहोति' इति वाक्येन क्रत्वर्थपुरुषार्थानां सर्वेषामपि होमानां प्रतिषेधः क्रियते, अथवा क्रत्वर्थेषु प्रत्यक्षशिष्टान्विहाय अतिदेशप्राप्तानां पुरुषार्थानां च होमानां प्रतिषेधः क्रियते—इति पूर्वपक्षनिराकरणार्थम्; अनेन प्रतिषेधपक्षे, स्वस्वविधिभिः क्रतुमध्ये कर्तव्यत्वेन, दीक्षितप्रतिषेधात् अकर्तव्यत्वेन च प्राप्तानां होमानां विकल्पः प्रसज्यते; तत्परिहाराय 'दीक्षितो न जुहोति' इति वाक्यस्य अग्निहोत्रादिवाक्यशेषत्वमभ्युपगम्य नञः पर्युदासे वृत्तिराश्रयणीया, तेन अदीक्षितो यावज्जीवमग्निहोत्रं जुहोति— इत्यादिरर्थः संपद्यते इति। अत्र वस्तुतः प्रतिषेध एव युक्तः, न पर्युदासः, विकल्पाप्रसक्तेः, न खलु पुरुषार्थहोमनिषेधे विकल्पः प्रसज्यते, होमः पुरुषार्थः,

T

होमनिषेधः क्रत्वर्थ इति विधिनिषेधयोः विषयभेदात्; उभयोरपि क्रत्वर्थत्वेन विषयैक्ये हि षोडशिग्रहणाग्रहणरीत्या तयोरन्यतरस्य परिग्रहेऽपि क्रतोः साद्गुण्यात् विकल्पो भवेत्; इह होमनिषेध एव क्रत्वर्थ इति होमपक्षे क्रतोर्वैगुण्यात् न विकल्पप्रसक्तिः; न क्रत्वर्थस्यापि होमस्य निषेधे विकल्पः प्रसज्यते, निषेधस्य पुरुषार्थहोमविषयतया चारितार्थ्येन क्रत्वर्थतया प्राप्तस्य बाधनायोगात्; तस्मात् यदि प्रतिषेधाश्रयणे पर्युदासाधिकरणपूर्वपक्षरीत्या विकल्पः प्रसज्यते, तदा तत्परिहाराय 'दीक्षितो न जुहोति' इत्यस्य अग्निहोत्रादिवाक्यशेषत्वमङ्गीकृत्यापि विकल्पः परिहरणीयः इति कृत्वाचिन्तारूपेण इदं सूत्रं प्रवृत्तम्; किंचित्प्रकरणाम्नातस्य एकस्य शब्दस्य प्रदेशान्तराम्नातानेकवाक्यशेषभावादपि पापीयान् विकल्पः इति न्यायं व्युत्पादयितुम् इति नेतव्यम्; तथैव नीतं भट्टपादैः। एवं वैयासिकमपि 'प्राणादयो वाक्यशेषात्' इति सूत्रं कृत्वाचिन्तावलम्बनं दृश्यते— 'यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः' इति मन्त्रे पञ्च पञ्च इति शब्दाभ्यां पञ्चविंशतिसंख्याप्रतीतेः 'पञ्चपञ्चजनाः' इत्यनेन पञ्चविंशतिः सांख्योदितानि तत्त्वान्युच्यन्ते इति पूर्वपक्षे प्राप्ते— 'न संख्योपसंग्रहादपि

नानाभावादतिरेकाच्च' इति सूत्रेण सिद्धान्तः कृतः, पञ्चविंशतिसंख्योपसंग्रहादपि सांख्यतत्त्वग्रहणप्रत्याशा न कार्या, नानाभावात् आत्मप्रतिष्ठितत्वरूपसांख्यतत्त्ववैलक्षण्यात् आत्माकाशशब्दाभ्यां पञ्चविंशतिसंख्यातिरेकाच्च— इति तदर्थः; अपिशब्देन पञ्चविंशतिसंख्याप्रतीतिरपि नास्ति, पञ्चजनशब्दस्य 'पञ्चानां त्वा पञ्चजनानाम्' इत्यादाविव समस्तस्य अर्थविशेषसंज्ञात्वात् इत्यपि दर्शितम्, तर्हि के ते पञ्चजनसंज्ञासंज्ञिता इत्याकाङ्क्षायाम् 'प्राणादयः' इति सूत्रम्— वाक्यशेषे 'प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इत्यस्मिन् षष्ठ्यन्तप्राणादिशब्दोदिताः प्राणादयो मनःपर्यन्ताः पञ्चजनशब्दसंज्ञिनः इति सूत्रार्थः; एवं पञ्चजनशब्दार्थग्रहणं न युक्तम्, प्राणादिषु पञ्चसु एकस्य पञ्चजनशब्दप्रवृत्तिनिमित्तस्याभावात्; तत्रैवं सूत्रमुपस्कर्तव्यम्— प्राणशब्देन वायुविकारत्वात् त्वगिन्द्रियं लक्ष्यते, अन्नशब्देन पृथिवीविकारत्वात् घ्राणं लक्ष्यते, तेनैव अद्यते अनेनेति व्युत्पत्त्या रसनेन्द्रियमपि उपचर्यते, तेन षट्स्वपि अनुगतमिन्द्रियत्वं प्रवृत्तिनिमित्तम्, अन्नशब्दोक्तत्वेन घ्राणरसनयोरेकीकरणात् पञ्चसंख्या— यथा हेमन्तशिशिरयोरेकीकरणात् ऋतुषु 'द्वादश मासाः पञ्च-

र्तवः' इति पञ्चसंख्या—इति भूयानिह क्लेशः; एवं तु वक्तुं युक्तम्— पञ्चजनाः प्रसिद्धरूढ्या मनुष्याः, ते चत्वारो वर्णाः निषादश्चेति पञ्चसंख्या, अन्येषां मनुष्याणां सत्त्वेऽपि पञ्चानामेव यागसंबन्धेन अभ्यर्हितत्वात् 'जना यदग्निमयजन्त पञ्च' इति मन्त्रान्तरदर्शनाच्च तेषामिह ग्रहणमिति । 'यमाय हार्म्यमवपन्पञ्च मानवाः' 'वैवस्वतो न तृप्यति पञ्चभिर्मानवैर्यमः' इति मन्त्रयोः निषादपञ्चमाश्चत्वारो वर्णाः पञ्च मानवाः इति भट्टभास्करादिभिर्व्याख्यातम्; 'यं त्वा होतारं मनसा हि सा विदुः त्रयो भौवनाः पञ्च मानवाः' इत्याथर्वणमन्त्रेऽपि 'पञ्च मानवाः' इत्येतत् माधवीयभाष्ये तथा व्याख्यातम्; 'यस्मिन्पञ्च पञ्चजनाः' इत्येतस्मिन्मन्त्रे 'पञ्चपञ्चजनाः' इत्येतत् बृहदारण्यकभाष्ये व्याख्यातम्—'पञ्च पञ्चजनाः गन्धर्वाः पितरो देवाः असुरा रक्षांसि, निषादपञ्चमा वा वर्णाः' इति; एवं प्रसिद्धेऽर्थे सत्यपि यत् अप्रसिद्धातिक्लिष्टार्थग्रहणेन 'प्राणादयः' इति सूत्रम्, तत् कृत्वाचिन्तया— यदि 'पञ्चपञ्चजनाः' इत्यस्य प्रसिद्धमक्लिष्टमर्थान्तरं न संभाव्यते, तथापि वाक्यशेषे श्रुतेषु कथंचन किंचित्प्रवृत्तिनिमित्तं पञ्चसंख्यां च तेषु संपाद्य तेषु 'पञ्चपञ्चजना' इत्येतत् वर्तितव्यम्, न

तु सांख्यतत्त्वेषु, वेदे कथंचन वैदिकार्थग्रहणस्यैव युक्तत्वादिति न्यायं व्युत्पादयितुम्। एवं न्यायव्युत्पादनार्थं कृत्वाचिन्तायाः प्रवृत्तिरित्येतत् 'ज्योतिषैकेषामसत्यन्ने' इति उत्तरसूत्रेण व्यक्तम्—— माध्यंदिनशाखायामिव काण्वशाखायाम् 'अन्नस्यान्नम्' इत्यस्य पाठाभावात् कथं पञ्चसंख्यानिष्पत्तिरिति—— अस्यां शङ्कायामिदं सूत्रम्—— काण्वशाखायाम् 'यस्मिन्पञ्च' इति मन्त्रात्प्राक् 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इत्याम्नायते, तत्र षष्ठ्यन्तोपात्तानि प्रकाशकत्वात् पञ्च ज्ञानेन्द्रियाणीति तादर्थ्यम् 'पञ्चपञ्चजना' इत्यस्य ग्राह्यमिति सूत्रार्थः; अत्र माध्यंदिनशाखोक्तान्नोपसंहारेण अन्नवत्त्वात् 'असत्यन्ने' इत्येतत् कृत्वाचिन्तयेति स्पष्टमेव; यदि काण्वशाखायामन्नं न स्यात्, यदि च ज्योतिःशब्दोदितेषु मनःषष्ठेन्द्रियेषु पञ्चसंख्या न स्यात्, तदापि तान्येव गृहीत्वा तेषु द्वयोरेकीकरणेन एकप्रहाणेन वा पञ्चसंख्यामपि संपाद्य 'पञ्चजनाः' इत्यस्य तादर्थ्यं ग्राह्यम्, न तु वेदास्पृष्टसांख्यतत्त्वार्थत्वमिति न्यायव्युत्पादनमेव तस्यापि फलम्। एवमेव कृत्वाचिन्तया न्यायव्युत्पादनार्थम् 'स्वाध्यायस्य' इति सूत्रमिति न तत्र अभिनिवेशः कार्यः। यत्तु 'तेषामेवैताम्' इत्यत्र ब्रह्मविद्याशब्दस्य

T

मुण्डकोपनिषद्रूपविद्यास्थानपरत्वात् 'स्वाध्यायस्य' इति सूत्रं तात्त्विकार्थनिर्णयपरमेवेत्युक्तम्, तदयुक्तम्— 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति मुण्डकोपक्रमानन्तरम् अथर्वप्रभृत्यङ्गिरःपर्यन्तां गुरुपरम्परामुक्त्वा 'शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति शौनकस्य प्रश्नमुपन्यस्य 'तस्मै स होवाच' इत्यारम्भात् 'तदेतत्सत्यमृषिरङ्गिराः पुरोवाच' इत्यन्तं शौनकाङ्गिरःसंवादरूपाख्यायिका मुण्डके प्रवर्तिता; तस्यामाख्यायिकायां यद्विज्ञाने सर्वविज्ञानं भवति, तददृश्यत्वादिगुणकं ब्रह्म उपदिश्य 'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति' इत्यादिना तदुपासनां तत्फलं च उपदिश्य, तदनन्तरमेव 'तदेतदृचाभ्युक्तम् क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः । तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' इत्युक्तार्थविषयत्वेन अवतार्य अङ्गिरसा शौनकं प्रति श्रावितमन्त्रे श्रुतो ब्रह्मविद्याशब्दः कथमकस्मादुपासनं परित्यज्य उपनिषदं गृह्णीयात्; एवं च उपासनार्थत्वेऽपि शिरोव्रतमाथर्वणिकप्रसिद्धं शिरसि अङ्गारधारणमेव उपासनाङ्गत्वेन विधी-

यतामित्यपि चोद्यं गर्भस्रावेण गतम्, कथं हि बह्वृचत्वेन प्रसिद्धाय शौनकाय अङ्गिराः स्वयमिमां विद्यामुपदिश्य आथर्वणिकमात्रानुष्ठेयव्रतवत एव एतदुपदेशः कार्यः इति ब्रूयात्; शौनकाङ्गिरःसंवादरूपाख्यायिकासमाप्त्यनन्तरम् 'नैतदचीर्णव्रतोऽधीते' इति मुण्डकाध्ययनाङ्गत्वेन विधीयमानं व्रतं कामं समाचारग्रन्थोक्तमाथर्वणिकमात्रानुष्ठेयं वेदव्रतं भवतु, नैतावता इदमपि तद्भवेत्। एतेन 'द्वे विद्ये वेदितव्ये' इत्यत्र विद्याशब्दस्य विद्यास्थानपरत्वदर्शनात् ब्रह्मविद्याशब्दस्यापि तत्परत्वमित्यपि शङ्का निरस्ता, तत्र ऋग्वेदादिशब्दसमभिव्याहारेण तथात्वेऽपि अत्र तदभावात् ऋग्वेदादीनां ब्रह्मविद्याप्रतिपादनरहितकर्मभागरूपाणामपरविद्यात्वोक्तेः ब्रह्मविद्याप्रतिपादकोपनिषद्भागस्य परविद्यात्वोक्तेश्च उपक्रमोपसंहारैकरूप्यावधृततात्पर्यविषयब्रह्मविद्याप्रशंसार्थत्वस्य वक्तव्यतया प्रधानार्थपरयोः ब्रह्मविद्याशब्दयोः विद्यास्थानलक्षकत्वकल्पनायोगाच्च। तस्मात् अपेक्षासामर्थ्यरूपस्य लिङ्गस्य 'विमोक्षाय' इति चतुर्थीश्रवणस्य 'ब्रह्मविद्यां वदेत' इति ब्रह्मग्रहणसूचितहेतुसामर्थ्यस्य च मूलप्रमाणस्य सत्त्वात् नाप्रयोजकं मदनुमानम्, त्वदनुमानहेतुश्च असिद्ध इति सिद्धं भस्मोद्धूलनस्य सकलब्र-

ह्मविद्यासाधारणाङ्गत्वम्; एतेन त्रिपुण्ड्रस्यापि तद्व्याख्यातम्, बृहज्जाबालश्रुतौ तस्य 'अग्निः' इत्यादिमन्त्रसाध्यभस्मोद्धूलनतुल्यबलत्वेन प्रपञ्चितत्वात्, कालाग्निरुद्रोपनिषदि 'तिर्यक्तिस्रो रेखाः प्रकुर्वीत व्रतमेतच्छांभवं सर्ववेदेषु वेदवादिभिरुक्तं तत्समाचरेन्मुमुक्षुरपुनर्भवाय' इति तस्य मुक्तिफलकत्वश्रवणात् तत्फलकत्वस्य च विद्याद्वारा समर्थनीयत्वात् तस्य विद्याविशेषस्य अनुक्रमणाभावात् विनिगमनाविरहेण सर्वासां ब्रह्मविद्यानां द्वारत्वेन निवेशनात् ॥

इत्युद्धूलनत्रिपुण्ड्रयोः सकलब्रह्मविद्याङ्गत्वसमर्थनवादः ॥ २२ ॥



T

# अयथार्थज्ञानसमर्थनवादः ॥



अथ असाधारणस्य ज्ञानप्रामाण्यस्य सर्वज्ञानसाधारण्यं वदतां मतं निराकर्तुं कथान्तरं प्रस्तूयते—

तेषामित्थं मतम्— सर्वं ज्ञानं यथार्थम्, शुक्तिरजतादिज्ञानमपि ग्रहणस्मरणाद्यात्मकज्ञानद्वयरूपतया यथार्थमेव इति; तान्प्रति इदमनुमानम्— रजतार्थिप्रवर्तकं शुक्ताविदमिति ज्ञानं रजतत्वप्रकारकम्, रजतार्थिप्रवर्तकज्ञानत्वात् रजते रजतज्ञानवत्— इति प्रथमा कक्ष्या ॥

अथ द्वितीया—

यदि प्रवर्तकत्वं प्रवृत्तिजनकत्वम्, तदा ज्ञायमानेष्टपुरोवर्तिभेदाग्रहः प्रवर्तक इति मत्पक्षे हेत्वासिद्धिः; यदि प्रवृत्तिप्रयोजकत्वम्, तदा त्वन्मते रजतभ्रमजनकधर्मिज्ञाने व्यभिचारः, कार्याभावव्याप्याभावप्रतियोगित्वरूपस्य प्रयोजकत्वस्य कारणतावच्छेदक इव कारणकारणेऽपि सत्त्वात्; अगृहीतेष्टभेदपुरोवर्तिज्ञानं प्रवर्तकमिति मत्पक्षे तु अनुमानमप्रयोजकम्, त्वन्मतेऽपि भ्रमकारणत्वेनावश्यकात् तत एव

T

प्रवृत्त्युपपत्तौ भ्रमरूपविशिष्टज्ञानकल्पने गौरवात्; तस्मात् उक्तज्ञानं रजतत्वप्रकारकं न भवति, शुक्तिमात्रविशेष्यकत्वात् —इयं शुक्तिः इति ज्ञानवत्— इति ॥

अथ तृतीया कक्ष्या—

प्रवृत्तिजनकत्वमेव प्रवर्तकत्वम्; न च भेदाग्रहः प्रवर्तक इति त्वत्पक्षे हेतोरसिद्धिः, प्रमास्थले त्वत्पक्षे प्रतियोग्यप्रसिद्धौ भेदाग्रहस्य असंभवेन तस्य तत्र प्रवर्तकत्वायोगात्; प्रतियोगिप्रसिद्ध्यङ्गीकारे रजते नेदं रजतमिति अन्यथाख्यातेः स्वीकर्तव्यतापत्तेः; न च प्रमास्थले विशिष्टज्ञानं प्रवर्तकं भ्रमस्थले भेदाग्रह इति युक्तम्, अननुगमात्, रजते नेदं रजतमिति भ्रमस्थले प्रवृत्त्यापत्तेश्च; तत्रापि अन्यथाख्यातिभिया इदमिति न रजतमिति ज्ञानद्वयस्य त्वया स्वीकर्तव्यत्वेन पुरोवर्तिनि इष्टभेदाग्रहसत्त्वात्; तस्मात् ज्ञानमेव प्रवर्तकं वाच्यमिति न हेतोरसिद्धिः, नापि अप्रयोजकत्वम्; इष्टपुरोवर्तिज्ञानरूपे कारणे भेदाग्रहस्य अवच्छेदकतया निवेशेऽपि प्रमास्थले तदसंभवेन प्रवृत्त्यभावापत्त्या नेदं रजतमिति भ्रमस्थले तत्सत्त्वेन प्रवृत्त्यापत्त्या च भेदाग्रहं विहाय इष्टपुरोवर्तिवैशिष्ट्यविषयं ज्ञानं कारणमिति ज्ञानविषयभावेन वैशिष्ट्यस्य कारणतावच्छेदककोटौ निवेशनीयत्वात्; न

चैवं सति भ्रमरूपविशिष्टज्ञानकल्पनागौरवं दोषः, प्रामाणिकत्वात्; तस्मात् निरवद्यं मदनुमानम्; त्वदनुमानं तु भ्रमस्थले इदमिति ज्ञानस्य रजतत्वप्रकारकत्वाभावे तत्र रजतार्थिप्रवृत्तिः न स्यात्; प्रवृत्तिमात्रे विशिष्टज्ञानस्य कारणतायाः क्लृप्तत्वात्— इति प्रतिकूलतर्कपराहतमिति ॥

अथ चतुर्थी—

इष्टपुरोवर्तिभेदाग्रहः इत्यनेन पुरोवर्तिनि स्वतन्त्रोपस्थितेष्टभिन्नत्वप्रकारकज्ञानविषयत्वाभाव उच्यते; तत्रैव अख्यातिवादिनां भेदाग्रहव्यवहारस्य निरूढत्वात्, तथा च प्रमास्थले तत्प्रसिद्धेः न अप्रवृत्तिप्रसङ्गः; नापि नेदं रजतमिति भ्रमस्थले प्रवृत्तिप्रसङ्गः; तत्र इष्टस्य स्वतन्त्रोपस्थित्यभावात्; अतो भेदाग्रहस्य प्रवर्तकत्वं ज्ञानगतप्रवर्तकतावच्छेदकत्वं च उपपद्यते इति त्वद्धेतोरसिद्धिः अप्रयोजकत्वं वा नापैति, आवश्यकात्तत एव प्रवृत्त्युपपत्तेः विशिष्टज्ञानं गौरवात् न कल्प्यमिति विशिष्टज्ञानस्य प्रवर्तकत्वक्लृप्त्यभावात् न मदनुमानस्य प्रतिकूलतर्कपराहतिः— इति ॥

अथ पञ्चमी—

एवं भेदाग्रहविवक्षायामपि नेदं रजतमिति भ्रमस्थले प्रवृ-

T

त्तिप्रसङ्गदोषः तदवस्थः, पुरोवर्तिगतस्य विशिष्टाभावस्य इष्टभिन्नत्वप्रकारकज्ञानविषयत्वरूपविशेष्याभावमात्रादपि सिध्यतः स्वतन्त्रोपस्थितत्वरूपविशेषणस्यापि अभावे सुतरां सिद्धेः; तत्र स्वतन्त्रोपस्थितत्वं नास्तीत्यभिप्रेत्य खलु इदं विशेषणं दत्तम्; अतः तदभावादपि विशिष्टाभावः कथं न सिध्येत्; नेदं रजतमिति प्रमास्थलेऽपि रजतार्थिप्रवृत्तिः स्यादिति दोषश्च अत्र अधिकः; तत्र विशेषणाभावाद्विशिष्टाभावसिद्धेः; अतः त्वद्विवक्षितविशिष्टाभावस्य प्रवर्तकत्वं ज्ञानगतप्रवर्तकतावच्छेदकत्वं च न संभवतीति विशिष्टज्ञानस्यापि अयं दोष इति मदनुमानस्य न हेत्वसिद्धिः, न वा अप्रयोजकत्वम्; त्वदनुमानस्य प्रतिकूलतर्कपराहतिः इति ॥

अथ षष्ठी कक्ष्या—

भेदाग्रहशब्दोक्तविशिष्टाभावप्रतियोगिकोटौ इष्टविशेषणत्वेन स्वातन्त्र्यं न निवेशितम्, इष्टभिन्नत्वप्रकारकज्ञानदशायाम् इष्टस्य भेदप्रतियोगित्वेन उपस्थितिविषयत्वनियमेन तदभावविशिष्टेष्टविशेषितस्य प्रतियोगिनोऽप्रसिद्ध्या तदभावाप्रसिद्ध्यापत्तेः; किं तर्हि? स्वातन्त्र्यमपि प्रवृत्तौ पृथक्कारणम्; अतः तदभावात् नेदं रजतमिति प्रमाभ्रमस्थलयोः प्रवृत्तिप्रसङ्गाभावात् उक्तभेदाग्रहस्य प्रवर्तकत्वसत्त्वात् त्वदनुमानस्य

T

असिद्धिः अप्रयोजकत्वं वा; मदनुमानस्य न प्रतिकूलतर्क-पराहतिरिति ॥

अथ सप्तमी कक्ष्या——

यदि भेदप्रतियोगित्वेन अनुपस्थितत्वं तत्, तदा इदं रजतं घटनिष्ठभेदप्रतियोगि– इति ज्ञानादप्रवृत्तिः; यदि पुरोवर्तिनिष्ठभेदप्रतियोगित्वेनानुपस्थितत्वम्, तदा नेदं रजत-मिति भ्रमस्थले दोषः तदवस्थः; ननु पुरोवर्त्यगृहीतासंस-र्गभेदप्रतियोगित्वेनानुपस्थितत्वं स्वातन्त्र्यम्; अतः तदभा-वात् नेदं रजतमिति भ्रमेण न प्रवृत्तिप्रसङ्गः, तत्र पुरोव-र्तिनि रजतभेदासंसर्गाग्रहसत्त्वेन तद्विशेषितभेदप्रतियोगि-त्वोपस्थितेः विद्यमानतया तदभावाभावात्; नापि इदं रजतं घटनिष्ठभेदप्रतियोगि इति ज्ञानेन अप्रवृत्तिप्रसङ्गः, तत्र पुरो-वर्तिनि रजतभेदासंसर्गरूपरजताभेदग्रहसत्त्वेन तदभावविशे-षितभेदप्रतियोगित्वोपस्थित्यभावसत्त्वात् इति चेत्, न; एव-मपि यत्र इदं नेति भेदविशिष्टपुरोवर्तिज्ञानं रजतस्मरणं च इति ज्ञानद्वयरूपः नेदं रजतमिति भ्रमः, तत्र रजतार्थिप्रवृ-त्तिप्रसङ्गात्; न चेदं भेदज्ञानं न संभवतीति वाच्यम्, इदमिति न रजतमिति ज्ञानद्वयपक्षे अधिकरणविशेषानुल्ले-खिन इव इदं नेति प्रतियोगिविशेषानुल्लेखिनोऽपि भेदज्ञानस्य

T

संभवात्; तस्मात् स्वातन्त्र्यानिरुक्त्या तत्साहितभेदाग्रहस्य प्रवृत्तौ कारणत्वं तदवच्छेदकत्वं च नोपपद्यत इति न मद्धेतोरसिद्धिः अप्रयोजकत्वं वा, त्वद्धेतोश्च प्रतिकूलतर्कपराहतिरिति ॥

अथाष्टमी कक्ष्या—

स्वातन्त्र्यमिह पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वासंसर्गाग्रहाभाववत्त्वं विवक्षितम्, तथा च इदमिति न रजतमिति च ज्ञानद्वयात्मकस्य नेदं रजतमिति भ्रमस्योदये पुरोवर्तिनि रजतभेदस्यासंसर्गाग्रहोऽस्ति—इदं रजतमिति भ्रमोदये रजतस्येव; तथा च तत्र पुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वेन रजतस्य ग्रहणात् तत्प्रतियोगित्वासंसर्गाग्रहोऽस्तीति तदभावाभावात् न तत्र रजतार्थिप्रवृत्तिप्रसङ्गः; नापि इदं नेति रजतमिति च ज्ञानद्वयात्मकस्य नेदं रजतमिति भ्रमस्योदये तत्प्रसङ्गः, तत्र पुरोवर्तिनि गृहीतसंसर्गत्वेन अगृहीतासंसर्गो यो भेदः तत्प्रतियोगित्वस्यासंसर्गे इष्टे यद्यपि वर्तते, तथापि तस्य नेदं रजतमिति भ्रमदशायाम् अग्रहस्य सत्त्वेन तदभावाभावात्; इदं रजतं घटनिष्ठभेदप्रतियोगि इति ज्ञानोदये च नाप्रवृत्तिप्रसङ्गः, तत्र रजते भेदप्रतियोगित्वसंसर्गग्रहणेन तदसंसर्गाग्रहरूपविशेष्यसंभवेऽपि पुरोवर्तिनि भेदासंसर्गरू-

पाभेदग्रहणेन विशेषणाभावात् तद्विशिष्टस्य भेदप्रतियोगित्वासंसर्गाग्रहस्याभावसत्त्वात्; यत्र तु इदं रजतम् इत्येव प्रत्ययः, तत्रापि प्रवृत्तिरुपपद्यते, तत्र भेदप्रतियोगित्वेनेव भेदाप्रतियोगित्वेनापि अगृह्यमाणरजते विशेष्यसत्त्वेऽपि पुरोवर्तिनि भेदासंसर्गरूपस्य रजताभेदस्य ग्रहोऽस्तीति विशेषणाभावेन विशिष्टाभावसत्त्वात्; तस्मात् प्रागुक्तरीत्या त्वद्धेतोरसिद्धिः मद्धेतोश्च न प्रतिकूलतर्कपराहतिरिति ॥

अथ नवमी कक्ष्या

नैवमपि स्वातन्त्र्यनिर्वचनं युज्यते, यत्र इदं रजतमिति भ्रमकाले घटो रजतभिन्न इत्यपि स्मरणम्, तत्र अप्रवृत्तिप्रसङ्गात्, तत्र पुरोवर्तिनि रजतभेदस्यासंसर्गग्रहे मिथ्याज्ञानप्रसङ्गेन तदसंसर्गाग्रहस्य विशेषणस्य सत्त्वेन रजते भेदप्रतियोगित्वग्रहकाले तदसंसर्गाग्रहस्य विशेष्यस्य च सत्त्वेन विशिष्टाभावाभावात्; अरजतरजतयोः इमे रजतारजते इति समूहालम्बनभ्रमात् अरजते रजतार्थिप्रवृत्त्यभावप्रसङ्गाच्च; तत्र पुरोवर्तिनि अरजते रजतभेदासंसर्गग्रहे मिथ्याज्ञानप्रसङ्गेन अरजतरूपपुरोवर्त्यगृहीतासंसर्गभेदप्रतियोगित्वेन रजतस्य गृह्यमाणतया उक्तविशिष्टाभावप्रतियोगिनो विशिष्टस्य सत्त्वात्; किं च यत्र पुरोवर्तिनि इष्टभिन्नत्वज्ञानं नास्ति, किं तु

तस्मिन् इष्टव्यावर्तकशुक्तित्वादिज्ञानम् इष्टे पुरोवर्तिभिन्नत्वज्ञानम् पुरोवर्तिनिष्ठधर्मसामान्ये इष्टतावच्छेदकभिन्नत्वज्ञानम् इष्टतावच्छेदके पुरोवर्तिनिष्ठधर्मभिन्नत्वज्ञानम् अन्यद्वा एतादृशं प्रवृत्तिविरोधिज्ञानमस्ति तत्रापि प्रवृत्तिप्रसङ्गः; न च यावन्तो भेदकग्रहाः प्रवृत्तिविरोधिनः तदभावकूटसहितम् इष्टपुरोवर्तिज्ञानं प्रवर्तकमस्त्विति वाच्यम्, एतदपेक्षया इष्टपुरोवर्तिज्ञाने तदुभयवैशिष्ट्यस्य एकस्य भावरूपस्य इदं रजतत्वेन जानामि इति सर्वानुभवसिद्धज्ञानवित्तिवेद्यतया शीघ्रोपस्थितिकस्य प्रवृत्तिकारणतावच्छेदकत्वकल्पने लाघवात् तदनुसारेण भ्रमस्थले प्रवृत्त्यर्थं पश्चात् विशिष्टज्ञानकल्पने च फलमुखगौरवस्यादोषत्वात्; न च तयस्य भ्रमस्थले ज्ञानप्रवृत्त्योः कार्यकारणभावग्रहः, तस्य तन्मते वैशिष्ट्यस्य ज्ञानवित्तिवेद्यत्वाभावात् उक्तलाघवं सार्वत्रिकमिति वाच्यम्, तन्मतेऽपि रजतत्ववैशिष्ट्यविषयाया रजतस्मरणविषयवित्तेः सत्त्वात् तेनापि हि इदं रजतत्वेन जानामीति लोकसिद्धा वित्तिर्नापह्नोतुं शक्या; किंतु इदं रजतमिति ज्ञानादगृहीतभेदज्ञानद्वयरूपतया उपपादनीयत्वात् त्वद्विवक्षितभेदाग्रहसहितम् इष्टपुरोवर्तिज्ञानं मम कारणत्वेन संप्रतिपन्नमिति, तदप्यसिद्धम्, मम

मते इष्टपुरोवर्तिभेदाग्रहादिकूटो मिथ्याज्ञानकारणम्, त्वन्मते पुरोवर्त्यगृहीतासंसर्गेत्यादि ; केवलद्रव्यविषयस्य चाक्षुषज्ञानस्यानुदयात् तदीयशुक्लरूपस्य च तदानीमस्फुरणात्; नापि आरोपितस्मरणम् नदीजलादिषु नीलं जलमिति नियमेन नैल्यविशिष्टतयैव जायमाने ज्ञाने नियतं संभवति ; न चायमनुभूयमानारोपः अतिधवलासु सिकतासु प्रवहति नदीजले नीलद्रव्यसंनिधानाभावात् ; न च अविनाभूतोपष्टम्भककल्पनं युक्तम्; तस्यैव नदीजलस्य वियति विक्षिप्तस्य शौक्ल्यदर्शनात् ; तस्मात् मदनुमानस्य नासिद्धिः अप्रयोजकत्वं वा, त्वदनुमानस्य तु प्रतिकूलतर्कपराहतिरिति सिद्धं शुक्तिरजतादिज्ञानमयथार्थमिति ॥

इति अयथार्थज्ञानसमर्थनवादः ॥ २३ ॥



T

# स्वप्नायथार्थत्ववादः ॥



शुक्तिरजतज्ञानवत् स्वप्नज्ञानमपि अयथार्थमिति समर्थनार्थं कथान्तरं प्रस्तूयते—

स्वाप्नं वह्निजलादिज्ञानं वह्नित्वादिमति वह्नित्वादिप्रकारकम्, दाहपिपासोपशमादिसमर्थविषयप्रवृत्तिजनकत्वे सति वह्नित्वादिप्रकारकत्वात्, तथाभूतजाग्रद्बोधवत्— इति प्रथमा कक्ष्या ॥

अथ द्वितीया कक्ष्या—

असिद्धोऽयं हेतुः, न च स्वाप्नेन वह्निजलादिना स्वप्ने दाहपिपासोपशमादि दृश्यते इति वाच्यम्, तद्दर्शनस्यारोपरूपत्वात्—स्वप्ने स्वशरीरस्य दग्धत्वदर्शनेऽपि प्रबोधानन्तरं तस्य यथापूर्वमवस्थानात्, स्वापारम्भे सम्यगपां तृप्तस्य पिपासाया एवानुदयात्, पिपासितस्यैव शयितस्य प्रबोधनानन्तरं पिपासानुवृत्तिदर्शनाच्च, अर्गलितापवरकशयितेन प्रबोधकालेऽपि तत्रैवोत्तिष्ठता शरीरेण बहिर्देशदृश्यस्वाप्नवह्निस्पर्शस्वाप्नजलपानादेः अत्यन्तासंभावितत्वेन तत्प्रयुक्तदा-

T

हपिपासोपशमादिप्रत्ययस्य प्रमात्वायोगाच्च; तस्मात् स्वाप्नवह्न्यादिज्ञानम् अयथार्थम्, यथार्थवह्न्यादिज्ञानसामग्रीं विना जायमानत्वात्, गुञ्जापुञ्जमरुमरीचिकादिषु जलवह्निज्ञानवत् इति ॥

अथ तृतीया कक्ष्या—

न मद्धेतुरसिद्धः, स्वप्ने हि दाहप्रयुक्तदुःखाद्यनुभवेन दाहादिसद्भावनिश्चयात्; न च अग्रे सुप्तस्य शरीरदाहादिकार्यादर्शनात् स्वप्नसमये तच्छरीरस्य बहिर्निर्गमनाभावाच्च दाहादिर्न संभवतीति शङ्क्यम्, सुप्तशरीरं विना शरीरान्तरेण जीवस्य बहिर्वह्न्यादिदर्शनदेशपर्यन्तनिर्गमनाङ्गीकारात् तस्मिन्देहे दग्धेपि पूर्वदेहस्य यथापूर्वमवस्थानोपपत्तेः, तद्देहावच्छेदेनैव स्वप्नदृशः पिपासोदयतच्छान्त्योः संभवाच्च; एवं च त्वदीयहेतुरेवासिद्धः, न मद्धेतुः, बहिः शरीरान्तरेण जीवस्य निर्गमनाङ्गीकारेण तदीयचक्षुर्वह्न्यादिसंनिकर्षरूपतत्प्रमाकरणसद्भावादिति ॥

अथ चतुर्थी कक्ष्या—

त्वद्धेतुरसिद्ध एव, शरीरान्तरे तेन बहिर्निर्गमने च प्रमाणाभावात्, वस्तुतो यत्र देशे वह्निजलादिकं नास्ति,

T

तत्र स्वप्नदृक् वह्निजलादिकं पश्यति, तत्प्रयुक्तदाहपानादेः भ्रमविजृम्भितत्वावश्यंभावात्; अत एव न मद्धेतुरसिद्ध इति ॥

अथ पञ्चमी—

शरीरान्तरे तेन निर्गमे च तावदस्ति प्रमाणम्— 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादवरश्चरित्वा । स ईयते अमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' इति श्रुतिः; यत्र देशे स्वप्नदृक् वह्निजलादिकं पश्यति, तत्र तदा परमेश्वरः तत्सृजति, 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान्रथयोगान्पथः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्तान् पुष्करिण्यः सृजते स हि कर्ता' इति श्रुतेः; अतो नास्ति विषयासंभवदोषोऽपीति न मद्धेतुरसिद्धः त्वद्धेतुरेवासिद्ध इति ॥

अथ षष्ठी कक्ष्या—

शरीरान्तरेण निर्गमस्तावत् अर्गलितेऽपवरके शयितस्य विरुद्धः, निर्गतस्य च वह्न्यादिदेशपर्यन्तं गच्छतो मध्ये वस्तुतो यद्यद्यथा वर्तते तस्य तस्य तथा दर्शनाभावो विरुद्धः; वह्न्यादिदेशे स्थित्वा दाहादिकमनुभवतः तत्काले एव केन-

T

चित् प्रबोधितस्य अपवरके एव उत्थानं च विरुद्धम्; प्रबोधकाले प्रत्यागमनाङ्गीकारे तावद्दूरं गतस्य आह्वानमात्रेण झटिति उत्थानं विरुद्धम्; तथा काञ्च्यां रात्रौ शयितस्य स्वप्ने दिवा दक्षिणादिशं प्रस्थाय घटिकामात्रेण काशीप्राप्तिदर्शनम्, काञ्च्यां शयितस्य अप्रस्थायैव काशीवृत्तान्तदर्शनं च विरुद्धम्; मुहूर्तमात्रवर्तिनि स्वप्ने बहुकालं काश्यादिसंचारदर्शनं च विरुद्धम्; तस्मात् सर्वविधविरोधपरिहारार्थं बहिष्कुलायश्रुतिः बहिष्कुलायादिव चरित्वा इति भाक्ततया व्याख्येया; अत एव 'यत्रैतत्स्वप्नया चरति' इत्युपक्रम्य 'स्वे शरीरे यथाकामं परिवर्तते' इति श्रुत्यन्तरम्; एवं च शरीरान्तरेऽपि नास्ति प्रमाणम्; देशान्तरं गच्छन्तमात्मानमनुभवन्नपि स्वप्नदृक् येन शरीरेण शयितः तेनैव शरीरवन्तमात्मानं मन्यते; शरीरान्तरग्रहणे तदंशे भ्रमत्वं स्वप्नस्य त्वयापि स्वीकरणीयं स्यात्; एवं वह्न्यादिरहिते देशे वह्न्यादिसृष्ट्यङ्गीकारे प्रबोधनानन्तरं तद्देशं गत्वा पश्यतः तत्र भस्माद्यदर्शनं च विरुद्धम्; यत्र देशे महाह्रदादिकं तिष्ठति तत्र वह्निजलादिदर्शनं च विरुद्धम्, यत्र गोपुरप्रासादादिकं तत्र कश्चित् स्वप्नदृक् वनं पश्यति, तदैव कश्चित् सेनां पश्यति, अन्यः समुद्रम्, परः शैलमिति बहूनां मूर्तानां युग-

T

पत् एकत्वावस्थानं च विरुद्धम्; तस्मात् उक्तसकलविध-विरोधपरिहारार्थं रथादिसृष्टिश्रुतिरपि भाक्ततया व्याख्येया; अत एव तत्रैव 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति' इत्यादौ तदभावोऽपि श्रूयते; तस्मात् न मद्धेतुरसिद्धः; त्वद्धेतुरेवासिद्ध इति ॥

अथ सप्तमी कक्ष्या—

स्वप्नशरीरमर्गलितादप्यपवरकात् निर्गमनयोग्यं योजनशतप्राप्यं देशं क्षणेन गन्तुं क्षणेन तत आगन्तुं च शक्तं स्वप्नार्थमात्रग्रहणयोग्यचक्षुरादियुक्तं च कल्प्यते; देशकालविपर्यासश्च स्वप्नदृगेकानुभाव्यादित्यगत्याद्युपाधिविशेषप्रयुक्तदिक्कालविशेषकल्पनेन उपपद्यते; अगत्वा देशान्तरदर्शनम् अल्पमार्गं गत्वा दूरदेशदर्शनं च अगमनदूरमार्गगमनयोः अननुसंधानेन उपपद्यते; बहुकालातिवाहनं च देवादिकालोपाधिभ्यो मनुष्यादिकालोपाधीनामिव जाग्रत्कालोपाधिभ्यः स्वप्नकालोपाधीनां सूक्ष्मत्वतारतम्यकल्पनेन उपपद्यते; मूर्तानां विरुद्धानां च समावेशस्तु तेष्वन्यानुभाव्यमूर्तद्रव्यान्तरावस्थितिप्रतिघातकत्वाभावान्यानुभाव्यविरुद्धत्वाभावकल्पनेन उपपद्यते; भस्माद्यदर्शनं परमेश्वरः स्वप्नदृगेकानुभाव्यमर्थजातं सृष्ट्वा तदैव स्वप्नान्ते तत्सर्वं निरवशेषमुपसं

T

हरतीति कल्पनेन उपपद्यते; अतो नात्र युक्तिविरोधः कश्चिदस्ति; 'स्वे शरीरे' इति श्रुतिः शरीरान्तरस्यापि स्वशरीरत्वादुपपद्यते; तत्र शयितशरीराभिमानमात्रं भ्रमोऽस्तु; न हि स्वप्नसत्यत्ववादिनः स्वप्ने भ्रम एव नास्ति, स्वप्नेऽपि शुक्तिरजतादिभ्रमाङ्गीकारात्; 'न तत्र रथाः' इत्यादिश्रुतिः स्वप्नरथादिसृष्टेः प्राक् तत्र देशे रथाद्यभावविषया; अत एव 'अथ रथान्' इत्यादौ अथशब्दः; तस्मात् न मद्धेतुरसिद्धः, त्वद्धेतुरेवासिद्ध इति ॥

अथ अष्टमी कक्ष्या—

तावल्लोकदृष्टविरुद्धं किमवलम्ब्य कल्प्यते; बहिष्कुलायश्रुतिं रथादिसृष्टिश्रुतिं च इति चेत्, न, बहिष्कुलायश्रुतेः 'स्वे शरीरे' इति श्रुत्यनुसारेण भाक्ततया व्याख्यातव्यत्वात्, शरीरान्तरं परिगृह्णाति चेत्, तस्यापि पूर्वशरीरवत् स्वीयत्वमनुभवसिद्धमिति तस्यावक्तव्यतया, तस्याः श्रुतेः विकृतशरीरान्तरपरिग्रहदर्शनेऽपि बहिः संचारदर्शनेऽपि शयिते पूर्वशरीर एव परिवर्तते, न शरीरान्तरं परिगृह्णाति, नापि बहिः संचरतीति तस्य सर्वस्य मिथ्यात्वप्रदर्शनेनैव साफल्यस्य उपपादनीयत्वात्; रथादिसृष्टिश्रुतेः 'न तत्र रथाः' इत्युपक्रमानुरोधेन भाक्ततया व्याख्यातव्यत्वाच्च; तत्र

T

लङाख्याताभ्यां रथाद्यभावरथादिसृष्ट्योः समानकालत्वप्रतिपादनेन रथादिमिथ्यात्वावश्यंभावात्; 'अथ' इत्यव्ययं तु अथापि इत्येतदर्थत्वेनापि उपपन्नम्; किं च सृष्टिशरीरान्तरश्रुत्योः स्वार्थपरत्वे प्रकरणप्रतिपाद्यप्रधानार्थविरोधोऽपि स्यात्; तद्धि प्रकरणमात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं प्रवृत्तम्; तत्र जाग्रदवस्थायाम् आदित्यादिज्योतिर्व्यतिकरात् तद्दुर्विवेचमिति तद्विवेचनार्थं स्वप्नावस्था अवतारिता; तत्र यदि सृष्टिः प्रतिपाद्यते, तदा तस्यामपि तद्दुर्विवेचं स्यात् आदित्यादिसद्भावात्; अतः प्रधानप्रतिपाद्यविरोधात् —स्वर्गार्थज्योतिष्टोमप्रकरणे तदङ्गविध्यर्थवादरूपस्य 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति' इति वाक्यस्येव स्वप्नसृष्टशरीरान्तरपरिग्रहवचनस्य न स्वार्थे तात्पर्यम्, किंतु तन्मिथ्यात्वप्रदर्शन एव उक्तरीत्या तात्पर्यमिति योजयितुं युक्तम्; किं च स्वप्ने महासेनायां गजतुरगवृषभोष्ट्रपदातिरूपाः पारेपरार्धं चेतना दृश्यन्ते; कस्यचित् स्वप्नं निर्वोढुं कियन्तश्चेतना कुतः समानीय परमेश्वरेणापि मेलनीयाः; न हि स्वप्ननिर्वाहार्थमेव तेन क्वचित्केचन चेतनाः पृथङ्निवेशिताः सन्ति; चेतनांशे चेत् स्वप्नानामयथार्थता अचेतनांशेऽपि तथास्तु, किमर्धजरतीयेन; अत एव लोकानाम्

T

आरुक्षमिव शैलाग्रम् अद्राक्षमिव काननम् इत्यादिरूपेण स्वाप्नमिथ्यात्वानुवादः; 'उतेव स्त्रीभिः सह मोदमानः जक्षद्रुतेवापि भयानि पश्यन्' इति श्रुतावपि लोकप्रसिद्धिसिद्धतन्मिथ्यात्वानुवादः; तस्मात् त्वद्धेतुरसिद्धः न मद्धेतुरिति सिद्धम् बहिःसंचारवह्निजलतदर्थक्रियादिदर्शनं सर्वमयथार्थम् ॥

इति स्वप्नायथार्थत्ववादः ॥ २४ ॥



T

# शुक्तिरजताद्युत्पत्तिसमर्थनवादः ॥



अथ शुक्तिरजतादिकं स्वाप्नवह्निजलादिकं च नासंनिहितमयथार्थज्ञानविषयः; किं तु तत्रत्यमेवेति निर्णयार्थं कथान्तरं प्रस्तूयते—

एतच्छुक्तीदंतया गृह्यमाणं रजतम् एतद्देशवर्ति, एतदिदंतया गृह्यमाणत्वात्— एतच्छुक्तिवत्; यस्याः शुक्तेरधस्तात् रजतं नास्ति सा शुक्तिः एतच्छब्देन विवक्षिता; अतो नास्ति सिद्धसाधनाशङ्का— इति प्रथमा कक्ष्या ॥

अथ द्वितीया—

बाधितविषयं त्वदनुमानम्, न हि तत्र प्राक्सिद्धं रजतमस्ति, न वा अभिनवरजतोत्पत्तौ अन्यत्र क्लृप्तं रजतकारणमस्ति; अभिनवरजतोत्पत्तौ च पश्चादपि तदुपलब्धिप्रसङ्गः; ननु शुक्तौ रजतावयवानुप्रवेशोऽस्ति, तत्सदृशत्वात्, भूयोऽवयवसामान्यं सादृश्यमित्यङ्गीकारात्; मीमांसकैरपि प्रतिनियतविधिपेटिकायाम् अवश्यकर्तव्येषु व्रीहिद्रव्यकेषु कर्मसु व्रीह्यलाभे तत्सदृशा नीवाराः ग्राह्याः, तेषु व्रीहित्वजात्यभावेऽपि



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदवच्छेद्यानां व्रीह्यवयवानां सत्त्वेन किंचित् व्रीहिशास्त्रानुग्रहलाभात्— इति उक्तत्वात्; न च शुक्तौ रजतावयवसत्त्वे दोषाभावदशायामपि तदुपलब्धिप्रसङ्गः, शुक्तौ शुक्त्यवयवा भूयांस इति तदा तेषां ग्रहणेन प्रतिबन्धात् रजताग्रहणम्, दोषदशायां तेषामग्रहणेन प्रतिबन्धाभावात् रजतग्रहणमित्युपपत्तेः; अतः शुक्त्यनुप्रविष्टरजतावयवविषयत्वेन साध्यपर्यवसानसंभवात् न बाध इति चेत्; मैवम्, एवं शुक्तिरजतभ्रमनिर्वाहेऽपि नीवारादिषु व्रीह्यादिभ्रमानिर्वाहात्; न हि यथा रजतावयवा रजतानि तथा व्रीह्यवयवा व्रीहयः, रजतावयवेषु रजतत्वस्येव व्रीह्यवयवेषु व्रीहित्वाभावात्; अतः तादृशस्थलपक्षीकरणे बाधो नापैति; उपलक्षणं हि स्थालीपुलाकन्यायेन रजतभ्रमस्थलपक्षीकरणम्; एवं नीलं जलम् इत्यादिभ्रमस्थलपक्षीकरणेऽपि बाधो द्रष्टव्यः; वस्तुतस्तु उपन्यस्तानुमानपक्षेऽपि बाधस्तदवस्थः, शुक्तौ रजतावयवानामभावात्; शुक्त्यवयवानां शौक्ल्यं चाकचक्यं च अस्ति, एतावतैव हि तयोः सादृश्यम्, शुक्तौ रजतावयवानामपि सत्त्वे, तस्याम् अत्यन्ताग्निसंयोगेन शुक्त्यवयवेषु भस्मीभवत्सु, रजतावयवेषु द्रवत्वोत्पत्तिप्रसङ्गात्; तस्मात् एतच्छुक्तीदंतया गृह्यमाणं रजतम्, एतच्छुक्तिदेशवर्ति न भवति, रजतत्वात्, देशान्तरद्वीपान्तरगतरजतवत् इति ॥

T

अथ तृतीया कक्ष्या—

न बाधितविषयं मदनुमानम्, भ्रमदशायाम् अभिनवरजतोत्पत्तेः तस्य बाधकाले लयस्य च अङ्गीकारात्; कारणाभावदोषस्तु असंनिहितरजतस्फुरणपक्षेऽपि तुल्यः, असंनिकृष्टस्य भानायोगात्; न च भ्रमे शुक्तिर्विशेष्यं रजतं विशेषणमिति न रजतसंनिकर्षापेक्षा, विशेषणज्ञानविशेष्यसंनिकर्षतदुभयासंसर्गाग्रहमात्रात् विशिष्टप्रत्यक्षोत्पत्तिसंभवदिति वाच्यम्, तथा सति संनिकृष्टपर्वतपक्षकवह्न्यनुमितिस्थले प्रत्यक्षोदयप्रसङ्गात्; अनुमित्साविरहदशायां समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात्; यदि प्रमारूपे ज्ञाने क्लृप्तस्य कारणस्याभावेऽपि दोषवशात् भ्रमरूपं ज्ञानं जायते इत्युच्येत, तदा सत्यरजते क्लृप्तस्य कारणस्याभावेऽपि भ्रमग्राह्यमसत्यं रजतं दोषवशाज्जायते इत्येव वक्तुं युक्तम्, अनुभवानुरोधात्; इदंतया पुरोदेशवर्ति हि रजतमनुभूयते; न च दोषवशादसंनिकृष्टभानस्येव रजतावयवानपेक्षस्य रजतस्योत्पत्तिः स्वीकर्तुं न युक्ता, निरुपादानद्रव्योत्पत्त्ययोगादिति वाच्यम्, दोषसहितात् मूलकारणादेव भ्रमयितुरीश्वरस्य इच्छया तदुत्पत्त्युपपत्तेः; तस्मात् मदनुमानं न बाधितविषयम्, त्वदनुमानमेव बाधितविषयमिति ॥

T

अथ चतुर्थी—

त्वदनुमानं बाधितविषयमेव, रजतसामान्ये क्लृप्तस्य कारणस्याभावे रजतोत्पत्त्ययोगात्; मन्मते तु असंनिहितेऽपि ज्ञानरूपः संनिकर्षोऽस्तीति न ज्ञानसामान्ये क्लृप्तस्य कारणस्याभावः; एवं च रजतस्य पुरोदेशवर्तित्वासंभवेनासंनिहितस्यैव तस्य भानेऽवश्यं वक्तव्ये शुक्तीदमंशतादात्म्येन स्फुरणात् इदं रजतमिति व्यवहारः इत्युपपादनीयम्; अतोऽनुभवविरोधपरिहारात् मदनुमानं न बाधितविषयम् इति ॥

अथ पञ्चमी कक्ष्या—

रजते ज्ञानं संनिकर्षश्चेत् वह्नावपि संनिकर्षः स्यादिति तत्प्रत्यक्षोदयः दुर्वारः; अतः क्लृप्तकारणाभावेऽपि भ्रमोत्पत्तौ दोष एव शरणीकरणीयः इति तद्विषयोत्पत्त्युपपादनमेव युक्तम्, अनुभवस्वारस्यानुरोधात्, सर्वथा तदसंभवे हि कथंचित् तदुपपादनं कार्यम्; तस्मात् मदनुमानं न बाधितविषयम्, किं तु त्वदनुमानमेवेति ॥

अथ षष्ठी कक्ष्या—

त्वत्पक्ष एव क्लृप्तकारणाभावदोषः, न तु मत्पक्षे, ज्ञा-

T

नसंनिकर्षसत्त्वात्; न च तथा सति वह्न्यनुमितिस्थले प्रत्यक्षोदयप्रसङ्गः, अलौकिकप्रत्यक्षसामग्र्यपेक्षया समानेऽपि विषये अनुमितिसामग्र्या बलवत्त्वाभ्युपगमात्; अतः प्रागुक्तरीत्या त्वदनुमानमेव बाधितविषयमिति ॥

अथ सप्तमी—

तथा सति संशयोत्तरभ्रमरूपप्रत्यक्षस्थले अनुमितिप्रसङ्गः; अतो गत्यन्तराभावात् दोष एव उपपादनीयः— इति मदुक्तरीत्या मदनुमानं न बाधितविषयम्; किं तु त्वदनुमानमेवेति ॥

अथाष्टमी—

प्रमारूपालौकिकप्रत्यक्षसामग्र्यपेक्षयैव अनुमितिसामग्री बलवती; संशयोत्तरप्रत्यक्षस्थले भ्रमरूपालौकिकप्रत्यक्षसामग्री तु अनुमितिसामग्र्यपेक्षया बलवतीति नोक्तदोष इति ॥

अथ नवमी—

तथा सति भ्रमरूपधूमपरामर्शस्थले वह्न्यभाववति भ्रमरूपवह्निप्रत्यक्षप्रसङ्गः; अतस्तत्र ज्ञानस्य संनिकर्षत्वायोगात् दोष एव शरणीकरणीय इति तदवस्थो मदुक्तदोषः इति ॥

अथ दशमी—

*V. 23

ज्ञानं न संनिकर्षः इति तावदयुक्तम्, सुरभि चन्दनम् इत्यादिप्रत्यक्षस्थले तस्य संनिकर्षत्वक्लृप्तेः, तथैवात्रापि ज्ञानस्य संनिकर्षत्वसंभवात्; न च तथा सति संशयोत्तरभ्रमस्थल इव भ्रमरूपवह्न्यनुमितिस्थलेऽपि प्रत्यक्षोदयप्रसङ्गः; तत्र प्रत्यक्षभ्रमप्रयोजकदोषविशेषाभावात्; तदभावश्च तत्र वह्निं पश्यामीति अनुव्यवसायाभावात् वह्निमनुमिनोमि इत्येवानुव्यवसायदर्शनाच्च कल्प्यते; आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्तीत्यारोपः इति हि न्यायविदः; एवं च दोषासहकृतालौकिकप्रत्यक्षसामग्र्यपेक्षया समाने विषयेऽपि अनुमितिसामग्री बलवतीति फलबलात् कल्प्यते; तस्मादिह ज्ञानस्य संनिकर्षत्वाभ्युपगतौ न कश्चिद्दोष इति त्वदनुमानमेव बाधितविषयम्, न तु मदनुमानम्— इति ॥

अथैकादशी कक्ष्या—

क्वचिदपि ज्ञानं न संनिकर्षः इति न प्रत्याख्यायते, किंतु वह्न्यनुमितिस्थल इव रजतभ्रमस्थलेऽपि ज्ञानं संनिकर्षो भवितुं नार्हति इत्येतावदुच्यते; यत्र चन्दनखण्डे पूर्वं सौरभमवगतम्, तत्रैव हि स्मृत्युपनीतसौरभविषयं सुरभि चन्दनमिति प्रत्यक्षम्; न हि क्वचिच्चन्दनखण्डे सौरभमनुभूतवतः चन्दनखण्डान्तरदर्शनेऽपि सुरभि चन्दनखण्डमिति

प्रत्यक्षमस्ति; न च शुक्तिरजतस्य पूर्वमनुभवोऽस्ति; अतो न तत्र तज्ज्ञानं संनिकर्षः इति युज्यते; यदि यदवच्छेदेन यत्पूर्वमवगतम्, तद्वत्त्वेन, ज्ञाते तज्ज्ञानं संनिकर्षः चन्दनत्वावच्छेदेन प्राक् सौरभं गृहीतवतः तद्वत्त्वेन ज्ञाते चन्दनखण्डान्तरेऽपि सुरभि चन्दनमिति प्रत्यक्षम् इष्टमित्युच्येत, तदापि प्रकृते ज्ञानस्य संनिकर्षत्वं न युज्यते; रजततादात्म्यावच्छेदकत्वेन गृहीतस्य कस्यचित् शुक्तावदर्शनात्; तस्मात् प्रागुक्तरीत्या त्वदनुमानमेव बाधितविषयमिति ॥

अथ द्वादशी—

रजततादात्म्यावच्छेदकत्वेन रजते गृहीतं चाकचक्यं शुक्तौ रजतभ्रमात्पूर्वं गृह्यते, सादृश्यज्ञानस्य तद्धेतुत्वसंप्रतिपत्तेः, अतोऽत्र ज्ञानस्य संनिकर्षत्वं युज्यते; अतो देशान्तरस्थरजतभाने क्लृप्तकारणसद्भावात् रजतान्तरोत्पत्तौ तदभावाच्च असंनिहितभानमेवाङ्गीकृत्य तत्र शुक्तीदमंशतादात्म्यस्फुरणात् इदं रजतमिति व्यवहारः इत्युपपादनीयम्, अन्यथा चैत्रादिव्यक्तिविशेषभ्रमस्थले तदेवेदं रजतमिति व्यक्तिविशेषप्रत्यभिज्ञाभ्रमस्थले च का गतिः; न हि रजतसामान्यार्थिप्रवृत्तिः प्रातिभासिकरजतज्ञानादिव प्रसिद्धचैत्रोद्देश्यकप्रवृत्तिः प्रातिभासिकचैत्रज्ञानात् नष्टान्विष्यमाणस्वकीयरजतोद्देश्यक-

T

  

प्रवृत्तिः प्रातिभासिकरजतज्ञानाद्वा उपपद्यते; तस्मात् त्वदनुमानमेव बाधितविषयम् इति ॥

अथ त्रयोदशी—

शुक्तावतिप्रसक्तं चाकचक्यसामान्यं न रजततादात्म्यावच्छेदकम्; शुक्तिचाकचक्ये रजतवृत्तिचाकचक्यविशेषतादात्म्यभ्रमेण अवच्छेदकत्वज्ञानोपपादने रजतचाकचक्यविशेषस्यापि देशान्तरगतस्य भानानुपपत्तिस्तुल्या; तथा नीलं जलमिति भ्रमस्थले प्राक् जलस्य नीलिमावच्छेदकवत्त्वेन ज्ञानं नास्ति, रूपं विना केवलजलाप्रतीतेः; नीलिमावच्छेदकत्वेन शङ्कनीयस्य कस्यचिदभावाच्च; प्रागदृष्टोरगस्य ऐन्द्रजालिकप्रदर्शितोरगभ्रमे मण्डूकवसाञ्जनदोषजन्यवंशोरगभ्रमे च उरगतादात्म्यावच्छेदकवत्त्वेन अधिष्ठानस्य ज्ञानं नास्ति, तदवच्छेदकस्य प्रागविज्ञातत्वात्; एवं संनिकर्षस्येव निरालोकदेशान्तरस्थितवस्तुभ्रमे विषयालोकसंयोगस्याभावादपि न देशान्तरस्थस्य भ्रमविषयत्वमुपपद्यते; अपि च प्रतारकवाक्यात्— शशस्य शृङ्गमस्ति, तदेवंलक्षणमरण्ये पतितमन्विष्य लब्धुं शक्यम्; तेन च इदं प्रयोजनं भवति— इत्येवंरूपात् अवाप्तमोहस्य तथैवारण्यं गत्वा तदन्वेषमाणस्य यथोक्तचिह्नयुक्तकाष्ठशृङ्गान्तरादिदर्शने शशशृङ्गमिदम्

इत्यनुभवोऽस्ति; अस्ति च स्वप्ने मनुष्यपशुपक्षिवृक्षाद्यनेकरूपस्य एकस्यैवावयविनोऽनुभवः; न च तत्र असंनिहितं शशशृङ्गादिकं भ्रमविषय इति वक्तुं शक्यमिति अगत्या दोषात् प्रातिभासिकस्यैव तस्योत्पत्तिरङ्गीकरणीया; एवं तत्र दोषस्य प्रातिभासिकविषयोत्पत्तिकारणत्वक्लृप्तौ तेनैव रजतभ्रमेऽपि विषयोत्पत्तेरङ्गीकरणं युक्तम्; एवं च भ्रमविषयाणाम् इदंतया अनुभवः स्वारस्यं प्रापितो भवति; चैत्रादिव्यक्तिविशेषभ्रमेण अप्रसिद्धचैत्राद्युद्देश्यकप्रवृत्तिस्तु तन्निष्ठचैत्रत्वादेः प्रातिभासिकविषयेऽपि स्फुरणात् उपपद्यते; अस्ति हि चैत्रशरीरे चैत्रत्वं तदाकृतिविशेषव्यङ्ग्यम्; तत्प्रातिभासिकचैत्रशरीरेऽपि व्यञ्जकसत्त्वेन अभिव्यक्तं स्फुरति; तत्स्फुरणमात्रं प्रसिद्धचैत्रोद्देश्यकप्रवृत्तौ तन्त्रम्; इष्टतावच्छेदकज्ञानादेव प्रवृत्त्युपपत्तेः; रजतव्यक्तिविशेषविषयप्रत्यभिज्ञाभ्रमेण तदर्थप्रवृत्तिरपि प्रातिभासिकरजतस्यैव शुक्तौ विशेषवैशिष्ट्येन स्फुरणादुपपद्यते; सत्यरजतान्तरविषये तदिदं रजतम् इति प्रत्यभिज्ञाभ्रमे हि पुरोवर्तिन्येव रजते तत्तावैशिष्ट्यस्फुरणमङ्गीकर्तव्यम्; तत् प्रातिभासिकरजतेऽपि अस्तु; सा तत्ता तवासंनिहिता, मम रजतेन सह तद्विशेषणभावेन उत्पन्नेति विशेषः; तत् पुरोदेशे प्रत्यग्ररज-

T

तोत्पत्तौ कारणसत्त्वात् असंनिहितरजतभाने कारणाभावाच्च मदनुमानं न बाधितविषयम्, त्वदनुमानमेव बाधितविषयमिति सिद्धं शुक्तिरजतादिकमिदं पुरोदेशवर्ति प्रसिद्धरजतादिभिन्नमिति; एतेन स्वप्नचित्तभ्रममनोराज्यविषया अपि व्याख्याताः ॥

इति शुक्तिरजताद्युत्पत्तिसमर्थनवादः ॥ २५ ॥



T

# प्रपञ्चसत्तानिराकरणवादः ॥



यथा शुक्तिरजतादिकम् अग्रे नेदं रजतमित्यादिप्रकारेण बाध्यमपि भ्रमकाले शुक्तीदंतया इदमितिवत् शुक्तिसत्तया सदिति प्रतीयते, एवं जगदपि ब्रह्मसत्तया सदिति प्रतीयते, न स्वधर्मरूपया सत्तयेति निर्णयार्थं कथान्तरं प्रस्तूयते——

सन् घटः इति प्रतीतौ भासमानसत्ता घटधर्मः, सन् घटः इति प्रतीतिप्रकारत्वात्, घटत्ववत्— इति पूर्वपक्षिणः प्रथमा कक्ष्या ॥

अथ द्वितीया——

अप्रयोजकमिदम्—— शुक्तिरजतस्य अधिष्ठानसत्तयेव प्रपञ्चस्य सर्वोपादानभूतया ब्रह्मसत्तया सत्प्रतीतिविषयत्वोपपत्तेः; तस्मात् सन् घट इत्यत्र भासमानसत्ता घटधर्मो न भवति, सन्मात्रवृत्तित्वात्, आनन्त्यवत् इति ॥

अथ तृतीया——

नाप्रयोजकं मदनुमानम्, घटः सन्निति घटत्वतौल्येन घटविशेषणतया घटधर्मत्वेन भासमानायाः सत्तायाः बाधकाभावेन तथात्वस्यैव स्वीकरणीयत्वात् त्वदनुमानमेवाप्रयो-

T

जकम्, सत्तायाः सन्मात्रवृत्तित्वेऽपि घटादिवृत्तित्वोपपत्तेः तेषामपि सत्त्वे बाधकाभावात् इति ॥

अथ चतुर्थी—

घटधर्मः सत्ता स्वरूपसत्ता वा स्यात्, जातिसत्ता वा; नाद्यः, स्वरूपस्य तद्धर्मत्वानुपपत्तेः; नापि द्वितीयः, सामान्यादिषु सत्ताजातिरहितेषु ताद्धर्म्येण सद्व्यवहारानिर्वाहात्; घटादिषु ताद्धर्म्येण सामान्यादिषु तदेकार्थसमवायादिसंबन्धान्तरेण इत्यभ्युपगमे अननुगमात्; तस्मात् सर्वानुगतया ब्रह्मसत्तयैव प्रपञ्चानुगतसद्व्यवहारो निर्वोढव्यः, स्वरूपसत्ताया इव ब्रह्मसत्तायां प्रपञ्चानुगतसद्व्यवहारनिर्वाहकत्वे बाधकाभावात्; एवं ब्रह्मसत्तयैव सर्वत्र सद्व्यवहारनिर्वाहे तस्याः प्रपञ्चधर्मत्वप्रसाधनम् अप्रयोजकमेव; मदनुमानं नाप्रयोजकम्, घटधर्मसत्ताभ्युपगमेऽपि तया सद्व्यवहारानिर्वाहेण घटः सन्निति प्रतीतौ भासमाना सत्ता ब्रह्मसत्तैव इत्यभ्युपगन्तव्यत्वात् इति ॥

अथ पञ्चमी कक्ष्या—

घटःसन्निति व्यवहारविषयसत्ताया ब्रह्मसत्तारूपत्वे बाधकं नास्ति इत्येतदसिद्धम्, सर्वोपादानब्रह्मशक्तिरूपा सा द्रव्यमिति त्वयाङ्गीकृतत्वेन नीरूपद्रव्यस्य चाक्षुषत्वायो-

T

गात्; अतः संबन्धाननुगमेऽपि जातिसत्तयैव प्रपञ्चे सद्व्यवहारो निर्वोढव्यः, तवापि ब्रह्मणि सद्व्यवहारः ताद्धर्म्येण जगति उपादानानुवेधेन सत्ताया भेदेनेति संबन्धाननुगमस्य अङ्गीकर्तव्यत्वात्; तस्मात् मदनुमानं नाप्रयोजकम्; किंतु त्वदनुमानमेवेति ॥

अथ षष्ठी—

नीरूपापि ब्रह्मसत्ता प्रपञ्चसत्तावत् चाक्षुषी भवितुमर्हति; नीरूपद्रव्यं न चाक्षुषमित्येतत् अप्रयोजकम्, घटः स्फुरतीति स्फुरणरूपायास्तस्याः चाक्षुषत्वदृष्टेश्च; न च सत्ताया नीरूपत्वमपि, उपादानोपादेययोः अभिन्नतया घटरूपेणापि तस्या रूपवत्त्वात्; अत एव जातिसत्तयेव ब्रह्मसत्तया सद्व्यवहारनिर्वाहे संबन्धाननुगमोऽपि नास्ति, ब्रह्मणा धर्मिणा उपादेयेन प्रपञ्चेन चाभिन्नाया ब्रह्मसत्तायाः सर्वत्राभेदसंबन्ध एव सद्व्यवहारनिर्वाहक इत्युपपत्तेः; तस्मात् त्वदनुमानमेव अप्रयोजकम्; मदनुमानं नाप्रयोजकमिति ॥

अथ सप्तमी कक्ष्या—

नीरूपद्रव्यं न चाक्षुषम् इत्येतन्नाप्रयोजकम्, द्रव्यचाक्षुषतायां महत्त्वसमानाधिकरणोद्भूतरूपस्य प्रयोजकत्वेन क्लृप्तत्वात्; घटः स्फुरतीत्येतत् घटवृत्त्यनुभवविषयार्थकम्, न तु

T

ब्रह्मशक्तिरूपस्फुरणवत्त्वार्थकम्; घटादिरूपेण ब्रह्मासत्ता रूपिणीत्येतदपि अयुक्तम्, तथा च सति इन्द्रियेष्वपि सत्तायाश्चाक्षुषत्वप्रसङ्गात्; अभेदसंबन्धानुगमोक्तिरपि अयुक्ता, तेन हि सुवर्णं कुण्डलमितिवत् घटः सत्ता इत्येव अनुभवः स्यात्, मम तु सत्तायामपि सत्तैकार्थसमवायोऽस्ति; अत एव अभेदेऽपि सामानाधिकरण्यरूपा व्याप्तिरभ्युपेयते; तस्मात् घटादिसत्तयैव तेषु सद्व्यवहारनिर्वाहः कार्यः, न ब्रह्मसत्तयेति—यथा घटगन्धेनैव घटो गन्धवानित्यादिव्यवहारनिर्वाहः कार्यः, न तु 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इति श्रुतिप्रतिपन्नब्रह्मगन्धेनेति नाप्रयोजकं मदनुमानम्, त्वदनुमानमेवाप्रयोजकमिति ॥

अथाष्टमी—

द्रव्यचाक्षुषतायामुद्भूतरूपं न प्रयोजकम्, इह पक्षी इह न—इत्यादिप्रत्यक्षे इहप्रत्ययवेद्यदेशत्वेन नीरूपस्यापि आकाशस्य चाक्षुषत्वात्; नन्वस्तु आलोकः इहप्रत्ययवेद्यदेशः, आकाशस्य तथात्वाङ्गीकारेऽपि तस्य पक्ष्याधारत्वानाधारत्वव्यवस्थार्थम् आलोक उपासनीयः, निरवयवस्य आकाशस्य स्वावयवभेदेनावच्छेदासंभवेन आलोकावयवभेदैरेवावच्छेदभेदस्य वक्तव्यत्वात्; न च तत्तदधःक्षितिभागभेदोऽवच्छेदकः

T

स्यादिति वाच्यम्, ऊर्ध्वाधरदेशयोः इह पक्षी इह नेति प्रतीतावाधारत्वव्यवस्थायां तद्भेदाभावात्; निबिडमूर्तद्रव्याभावो वा इहप्रत्ययवेद्यो देशोऽस्तु; आकाशाङ्गीकारेऽपि हि तदभावोऽपेक्षितः, अन्यथा कुड्याद्यावरणेऽपि अप्रतिघातपक्षिसंचारापत्तेः; न च यत्र कुड्याद्यावरणम्, तत्र आकाशो नास्तीति शक्यं वक्तुम्, तस्य असर्वगतत्वप्रसङ्गात्; आवरणापायेऽपि आकाशाभावप्रसङ्गाच्च; न हि आकाशस्तत्र पूर्वमसन् आवरणाभावे समुत्पद्यते इति चेत्, उच्यते—अस्त्यालोकातिरिक्तः प्रागादिदेशरूप आकाशः, प्राग्भागे चन्द्रालोकः समुन्मिषति प्रत्यग्भागे तमोऽनुवर्तते इत्यादिप्रतीतिषु आलोकादेरपि आधारत्वेन प्रागादिदेशरूपस्याकाशस्य प्रतिभासात्; आकाशस्यैव सूर्यगत्याद्यवच्छेदभेदेन प्रागादिदेशत्वाङ्गीकारात्; एतेन आकाशे प्रदेशभेदार्थम् आलोकावयवापेक्षणमावश्यकमित्यपि शङ्का निरस्ता, क्लृप्तैः प्रागाद्युपाधिभिः तदवच्छेदोपपत्तेः; निबिडमूर्तद्रव्याभावरूपोऽवकाश इहप्रत्ययवेद्यः इत्यपि न युक्तम्, इह प्राग्भागेऽवकाशोऽस्ति, न प्रत्यग्भागे भुञ्जानैर्निबिडे—इत्यादिव्यवहारदर्शनेन प्रागादिदेशस्य ततोऽपि व्यतिरेकावसायात्; इदानीं घटः अयं घटः इत्यादिप्रतीतिषु नियमेन स्फुरतः कालस्य

T

चाक्षुषत्वादपि न रूपं द्रव्यचाक्षुषत्वे प्रयोजकम्; संप्रतिपन्नं च ब्रह्मशक्तेः स्फुरणरूपेण चाक्षुषत्वम्; घटः स्फुरति इत्यादिप्रत्ययो हि सविता स्फुरति भाति प्रकाशते इत्यादिप्रत्ययवत् स्फुरणवैशिष्ट्यविषयः; तच्च स्फुरणं चैतन्यरूपा ब्रह्मशक्तिः इत्येव युक्तम्; अत एव श्रुतिः— 'तस्य भासा सर्वमिदं विभाति' इति; ब्रह्मसत्ताया घटादिरूपेण रूपवत्त्वाभ्युपगमेऽपि नातिप्रसङ्गः, घटाद्यवच्छेदेन हि तस्या रूपवत्त्वम्; अभेदेऽपि सन् घट इत्यादिविशेषणविशेष्यभाव उपपद्यते इदानीमभिजिन्मुहूर्तः इत्यादावभेदेऽपि तथात्वदर्शनात्; अथवा प्रपञ्चे ब्रह्मसत्तानुवेधो नाम सर्वोपादानभूतसत्ताधिष्ठानभूतब्रह्मतादात्म्यानुभवः; अतः सन् घटः इत्यादिप्रत्ययः सदित्यंशे सत्ताविशिष्टब्रह्मविषयकः इति न काचिदनुपपत्तिः अत एव भाष्यम्— 'सच्चिद्रूपेण शिवेन यदि न व्याप्तं जगत्, तदा सत्तास्फूर्तिभ्यां विनाकृतं कथमस्ति स्फुरति इति च दृश्येत; अतो मृदा घटादिकमिव कारणेन शिवेन कार्यमिदं व्याप्तम्' इति; अनेन भाष्येण वस्तुतः प्रपञ्चः सन्न भवति किंतु बाध्यः इति दर्शितम्; इत्थमेव हि भाष्यकारस्य उपासनामार्गनिरूपणतात्पर्येण तत्र विनेयानां रुच्युत्पादनार्थं सर्वत्र शुद्धाद्वैतं प्रच्छादितवतोऽपि

T

अनियमाधिकरणादिषु निर्विशेषब्रह्मविद्यायामर्चिरादिमार्गं प्रतिषिद्धवतः परमसिद्धान्तः; न च ब्रह्मशक्तिः सत्तेति परिभाषा कृता, तस्याः प्रपञ्चधर्मत्वनिषेधमात्रेण प्रपञ्चस्य बाध्यत्वं कथं सिध्येत् इति शङ्कनीयम्, नित्यत्वप्रामाण्यादेरनित्यत्वाप्रमाण्यादिविरोधित्ववत् ब्रह्मसत्ताया बाध्यत्वविरोधित्वमिष्यत इति नित्यत्वव्यतिरेकेणानित्यत्ववत् तद्व्यतिरेकेण बाध्यत्वसिद्धेरप्रत्यूहत्वात्; न चैवं सति गन्धरसादिकमपि घटादिषु प्राकृतं न सिध्येत् इति शङ्कनीयम्; ब्रह्मणि हि निर्दोषे सुरभिरेव गन्धः हृद्य एव रसः; स च तस्य दिव्यनित्यविग्रहे; अत एव पर्यङ्कविद्यायाम् अर्चिरादिमार्गेण ब्रह्मलोकं गतस्य दिव्यविग्रहसंनिकर्षं प्राप्तस्यैव ब्रह्मगन्धरससंक्रान्तिभाजनता श्रूयते—'तं ब्रह्मगन्धः प्रविशति तं ब्रह्मरसः प्रविशति' इति; तस्मात् प्रागुक्तरीत्या त्वदनुमानमप्रयोजकम्, मदनुमानं नाप्रयोजकमिति ब्रह्मसत्तयैव प्रपञ्चः सन्निति प्रतीयते न स्वसत्तयेति सिद्धम्; एवं च शुक्तिरजतस्वाप्नपदार्थजातवत् वियदादिप्रपञ्चस्यापि बाध्यत्वसिद्धिः अखण्डाद्वितीयब्रह्मभावपरमुक्त्युपयोगिनी अव्याहता; 'न विलक्षणत्वात्' इत्यधिकरणन्यायेन सत्यमिथ्यावस्तुनोरपि उपादानोपादेयभावोपपत्तेः इति ॥

इति प्रपञ्चसत्तानिराकरणवादः ॥ २६ ॥

# ब्रह्मानन्दवैषयिकानन्दाभेद-समर्थनवादः ॥



यथा प्रपञ्चे भासमाना सत्ता चिदानन्दरूपा ब्रह्मशक्तिः, एवं संसारिषु भासमानो वैषयिकानन्दोऽपि सैवेति प्रसाधनाय कथान्तरं प्रस्तूयते—

सांसारिकानन्दो ब्रह्मानन्दात् न भिद्यते, आनन्दत्वात्, 'स एको ब्रह्मण आनन्दः' इति श्रुतानन्दवत्; अभेदेऽपि अवच्छेदकभेदेन पक्षदृष्टान्तभावः—इति प्रथमा कक्ष्या ॥

अथ द्वितीया—

बाधितमिदमनुमानम्, मानुषादिप्राजापत्यान्तात् सांसारिकमहानन्दात् उत्कृष्टो हि निरतिशयो ब्रह्मानन्दः श्रूयते; तेन कथमत्यन्तापकृष्टस्य क्रिमिकीटाद्यानन्दस्यापि अभेदो युज्यते; तस्मात् सांसारिकानन्दः ब्रह्मानन्दात् भिद्यते, अपकृष्टत्वात्, तारध्वन्यपकृष्टमन्द्रध्वनिवत् इति ॥

अथ तृतीया—

न बाधितं मदनुमानम्, एकत्रापि अभिव्यक्तितारतम्येन

T

उत्कर्षापकर्षप्रतिभासोपपत्तेः; त्वदनुमानमेव श्रुतिबाधितम्, 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति हि सांसारिकानन्दजातस्य ब्रह्मानन्दलेशत्वं श्रुतम्, तथा आनन्दवल्ल्याम् 'सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता' इति ब्रह्मविदः सकलवैषयिकानन्दावाप्तिं फलमुक्त्वा निर्धूतसकलसंसारस्य कथं सुखावाप्तिः फलमुच्यते इति शङ्कानिराकरणार्थम् अग्रे तद्विवरणप्रस्तावे 'सैषानन्दस्य मीमाꣳसा भवति' इत्युपक्रम्य 'युवा स्यात् साधु युवाध्यायकः। आशिष्ठो द्रढिष्ठो बलिष्ठः। तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात्। स एको मानुष आनन्दः' इति मानुषेषु सर्वोत्कृष्टतया संभावितमानन्दं प्रथममभिधाय ततो गान्धर्वादिप्राजापत्यान्तानामानन्दानाम् उत्तरोत्तरशतगुणानुक्त्वा, 'ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य' इति प्राजापत्यानन्दात् शतगुणत्वेनाभिधीयमानस्य ब्रह्मानन्दस्य मुक्तभोग्यत्वाभिधानात् तस्य सकलवैषयिकानन्दानन्तजलकणिकामहासमुद्रायमाणत्वेन तावदानन्दसमष्टिरूपत्वं दर्शितमिति ॥

अथ चतुर्थी कक्ष्या—

उत्कर्षापकर्षयोः भेदकधर्मत्वेन तयोः सतोः भेदस्यौत्स-

T

गिकत्वात् स्रक्चन्दनवनितादिभोज्यविषयवैलक्षण्येनानन्द-भेदानुभवाच्च प्रत्यक्षानुभवानुसारेण मुख्य एव भेदः स्वीकर्तुं युक्तः, न तु औपाधिकतया नेतुं युक्तः ; 'एतस्यैवानन्दस्य' इति श्रुतिः वैषयिकानन्दाः ब्रह्मानन्दस्य लेशभावमर्हन्ति इति 'अम्ब त्वदंशोरणुरंशुमाली तवैव मन्दस्मितबिन्दुरिन्दुः' इति कवितासरणिरीत्या तेषां तुच्छत्वप्रदर्शनपरा ; सर्वकामावाप्तेः ब्रह्मानन्दावाप्तिरूपतया विवरणम् अनाद्यनन्तदेशकालप्रवहदखिलप्राणिजातवर्ति यावत्सुखबृन्दम् अस्ति, तावत्समानो ब्रह्मानन्द इत्येतदभिप्रायम् ; तस्मात् मदनुमानं न बाधितम्, त्वदनुमानमेव बाधितमिति ॥

अथ पञ्चमी कक्ष्या—

तारगकारात् मन्द्रमन्द्रतरमन्द्रतमगकारेष्विव लौकिकसुखेषु अनुभूयमानस्य प्राजापत्यादिमानुषान्तेषु आनन्देषु श्रूयमाणस्य च अपकर्षतारतम्यस्य अभिव्यक्तिविशेषकृतत्वमुपपद्यते ; सुखभेदप्रतीतेश्च तारगकारात् मन्द्रगकारोऽन्यः इति भेदप्रतीतिवत् औपाधिकापकर्षभेदकृतत्वमुपपद्यते ; तत्र स एवायं गकार इति अभेदप्रत्यभिज्ञासिद्धैक्यबलात् भेदभेदकप्रतीत्योः औपाधिकविषयत्वं कल्प्यत इति चेत्, इहापि श्रुतौ मानुषादिपर्यायेषु 'स एको मानुष आनन्दः'

इत्यादिना तत्तदानन्दैक्यस्य अन्ते 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः' इति पुरुषादित्यशब्दोक्तयोर्मनुष्यदेवजात्योः जीववर्गपरब्रह्मणोर्वा आनन्दैक्यस्य प्रतिपादनमस्तीति तद्बलात्तयोः औपाधिकत्वकल्पनं युक्तम्; वर्णेषु ध्वनिविशेषाणामिव आनन्देष्वपि विषयविशेषाणामभिव्यञ्जकानां तारतम्यसत्त्वात् । प्रत्यक्षप्रत्यभिज्ञाबलादिव शब्दबलात् भेदभेदकप्रतीत्योः औपाधिकविषयत्वकल्पनमयुक्तमिति चेत्, न, प्राग्विषयविशेषसुखमनुभूतवतः कालान्तरेऽपि तद्विषयलाभे तदेव सुखमिदानीमपि अनुभूयते इति प्रत्यक्षप्रत्यभिज्ञानस्यापि अत्र सत्त्वात्; न हि सोऽयं गकार इति प्रत्यभिज्ञानात् अस्य मात्रयापि विशेषमीक्षामहे; किं च सर्वेष्वपि आनन्देषु आनन्दाकारानुगतबुद्धिरपि आनन्दैक्ये प्रमाणम्; न च सा जातिविषयेति कल्पनीयम्; क्लृप्ते स्पष्टे हि व्यक्तिभेदे जातिविषयत्वं कल्पनीयम्; आनन्देषु विषयविशेषोपाधिं विना स्वतः भेदाप्रतीतेः व्यक्त्यैक्यमेवोपपद्यत इति कुतो जातिः कुतस्तरां तद्विषयता बुद्धेः; अपि च संभावितदोषात् प्रत्यक्षात् निर्दोषा तात्पर्यवती श्रुतिरेव प्रबला; तात्पर्यवती च आनन्दमीमांसा, सर्वकामावाप्तिफलविवरणार्थं प्रवृत्तत्वात्; न च तात्पर्यवत्यामुपचारकल्पनमपि

T

युक्तम्; 'न विधौ परः शब्दार्थः' इति न्यायात्; न च वैषयिकसुखानां सर्वेषां मिलितानामपि अखण्डब्रह्मानन्दलेशरूपत्वात् तदनुभवः सकलवैषयिकसुखावाप्तेः अतिरिच्यते इति तवापि निरतिशयब्रह्मानन्दानुभवोक्तेः सर्वकामावाप्तिफलविवरणत्वमौपचारिकं नेयमिति वाच्यम्, मुक्तं प्रति सर्वात्मना अभिव्यक्ते ब्रह्मानन्देऽनुभूयमाने वैषयिकानन्दात्मना विद्यमानास्तदंशाः सर्वेऽप्यनुभूयन्त एवेति तस्य सर्वकामावाप्तिसत्त्वेन तत्र उपचारस्याकल्पनीयत्वात्; किंतु मन्त्रार्थसर्वकामावाप्तिवचनं परं तदन्यूनतापरं कल्पनीयम्; दृष्टं हि 'आकाशवत्सर्वगतश्च नित्यः' इति वचनमन्यूनतापरम्; इहापि मनुष्यगन्धर्वादिपर्यायस्थानि अकामहतश्रोत्रियवाक्यानि मुक्तानुभाव्यस्य ब्रह्मानन्दस्य मनुष्यगन्धर्वाद्यानन्दान्यूनतापराणि दृष्टानि; न खलु ब्रह्मानन्दमनुभवन्मुक्तः कश्चित् मनुष्यगन्धर्वानन्दमात्रमनुभवन्नास्ते; सर्वेषां मुक्तानां निरतिशयब्रह्मानन्दानुभवसत्त्वात्; तस्मात् त्वदनुमानं बाधितविषयम्; न तु मदनुमानमिति सर्वे वैषयिकानन्दा लेशाः परब्रह्मानन्दस्येति सिद्धम् ॥

इति ब्रह्मानन्दवैषयिकानन्दाभेदसमर्थनवादः ॥२७॥



T

समूलश्रवणाश्लेषचित्राभाद्रपदोत्तरा ।
नव्या नक्षत्रमालेयं प्रीत्यै सोमस्य निर्मिता ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतिषु
पूर्वोत्तरमीमांसावादनक्षत्रमाला
संपूर्णा ॥



T

